# GOVERNMENT ORIENTAL SERIES

CLASS A. No. 3

PREPARED UNDER THE SUPERVISION OF
THE PUBLICATION DEPARTMENT OF
THE BHANDARKAR ORIENTAL
RESEARCH INSTITUTE,
POONA




POONA

Bhandarkar Oriental Research Institute

1937

Government Oriental Series-Class A, No. 3.

# MĪMĀṀSĀ-NYĀYA-PRAKĀŚA

BY

# ĀPADEVA



Edited with an Original Commentary

By

Mahāmahopādhyāya Vasudev Shastri Abhyankar.



Bhandarkar Oriental Research Institute, Poona.

1937

राजकीया प्राच्यग्रन्थश्रेणिः-अनुक्रमाङ्कः 'ए' ३

आपदेवकृतः

# मीमांसान्यायप्रकाशः

( आपोदेवी )

महामहोपाध्याय—

अभ्यंकरोपाह्ववासुदेवशास्त्रिविरचितया

प्रभाख्यया व्याख्यया समेतः

पुण्यपत्तनस्थ—

प्राच्यविद्यासंशोधनमन्दिराधिकृतैः

भाण्डारकरप्राच्यविद्यामन्दिरमुद्रणालये मुद्रयित्वा प्राकाश्यं नीतः

शके १८५८ वत्सरे, १९३७ खिस्ताब्दे

मूल्यं सार्धं रूप्यकत्रयम्

॥ श्रीः ॥

# प्रास्ताविकं किंचित् ॥

**पायादपायाज्जगदीश्वरो वः ॥**

नित्यमसावर्थस्तत्रभवतां भवतां चेतसि पदं धत्ताम् । यद्यपि 'तमेव विदित्वा' ( श्वे. ३।८ ) 'ज्ञानादेव तु कैवल्यम्' 'तत्त्वमस्यादिवाक्योत्थं ज्ञानं मोक्षस्य साधनम्' इत्यादिभिः परःशताभिः श्रुतिस्मृतिभिर्निरतिशयानन्दावाप्तिलक्षणस्य मोक्षस्य ज्ञानैकसाध्यत्वं प्रतिपाद्यते तथापि तादृशमोक्षोपायो धर्म इति भगवानाम्नाय एवावगमयति । अयं भावः–विविदिषन्ति यज्ञेन, ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः, अविद्यया मृत्युं तीर्त्वा–इत्येवमादिभिर्वचननिकुरम्बैर्मोक्षसाधनीभूतब्रह्मात्मैक्यज्ञानस्य विविदिषामूलकत्वेन विविदिषायाश्च मनोमलक्षयमूलकत्वेन मनोमलक्षयस्य च धर्ममूलकत्वेन धर्मस्य तथात्वं सिध्यति। धर्मश्च विधिबोधितं कर्मैव । तदुक्तं जैमिनिना मुनिना– 'चोदनालक्षणोऽर्थो धर्मः' ( जै. सू. १।१।२ ) इति । अत एवेशावास्योपनिषदि– 'कुर्वन्नेवेह कर्माणि जिजीविषेच्छत॰ समाः' ( ई. १।१।२ ) इति यावत्प्राणसंधारणं कर्मनिष्ठोक्ता । अत एव च श्रीमदाचार्यचरणैरपि शारीरकभाष्ये सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ( ब्र. सू. ३।४।२६ ) इति सूत्रे मोक्षसाधनज्ञानहेतुत्वमग्नीन्धनादिकर्मणामुक्तं संगच्छते। किंच धर्मश्चतुर्विधेषु पुरुषार्थेषु प्रथम इति प्रसिद्धमेव। पुरुषार्थचतुष्टयमध्ये चोत्तरोत्तरं प्रकर्षाधिक्यम् । तथाहि–पुरुषेणार्थ्यते प्रार्थ्यत इति पुरुषार्थः। प्रार्थनाविषयत्वं च सुखस्येत्याबालवृद्धं प्रसिद्धमेव । तत्र काममोक्षयोः सुखस्वरूपत्वात्प्रार्थनाविषयत्वम् । धर्मार्थयोस्तु सुखसाधनत्वात्प्रार्थनाविषयत्वं न स्वरूपतः । अतः काममोक्षयोः प्रकृष्टत्वम् । तत्रापि च मोक्षस्य प्रकृष्टतरत्वम् । यतः कामे दुःखसंभिन्नं सुखं मोक्षे तु दुःखासंभिन्नमिति । सुखसाधनत्वेन प्रार्थ्यमानयोर्धर्मार्थयोर्मध्ये चार्थः सुखस्य संनिकृष्टः धर्मस्तु विप्रकृष्ट इत्यर्थस्य प्रकर्षः । अतोऽर्थापेक्षया धर्मस्य प्राङ् निर्देशः । एवमर्थादीनां त्रयाणां धर्मापेक्षयोत्तरोत्तरं प्रकर्षाधिक्येऽपि तेषां पुरुषार्थत्वं धर्ममूलकमेवेति पुरुषार्थेप्सवो बद्धा जीवा निसर्गत एव प्रथमतो धर्ममवलम्बन्ते ।

तदेवं निरतिशयानन्दावाप्तिः सर्वथा जननमरणनिवृत्तावेव संभवतीति जननमरणनिवृत्तिरूपं मोक्षसुखं संपिपादयिषुभिर्वेदविहितं कर्माऽऽचरणीयम् । तादृशकर्मज्ञानं च वेदवाक्यार्थज्ञानाधीनम् । वेदश्च 'मन्त्रब्राह्मणयोर्वेदनामधेयम्' इत्यापस्तम्बोक्तेर्मन्त्रब्राह्मणोभयात्मकः । स चैकोऽपि प्रतिपाद्यार्थभेदात्कर्मोपासनाज्ञानकाण्डत्वेन त्रिधा ख्यातिं गतो लोके । तत्र परस्परविरोधविपरीतभावनादिना

वेदवाक्यार्थविचिकित्सायां प्रसक्तायां तदपाकरणेन वास्तवार्थमावेदयितुं मीमांसा जगत्यवातरीत्। तथा च धर्मप्रवचनार्थं मीमांसाशास्त्रप्रवृत्तिः।

तत्र किमिदं मीमांसाशास्त्रं नाम, को वाऽस्य प्रथमः प्रवर्तकः, कथं वाऽस्य शास्त्रस्य प्रवृत्तिः, को वा शास्त्रस्योत्पत्तिकालः, कीदृशी चास्योपयुक्ततेति विचारः प्रथमं कर्तव्यतयाऽऽपतति। तत्र मीमांसाशब्दः सांप्रतं प्रचलितपाणिनीयव्याकरणानुरोधेन 'मान्बध०' (पा. सू. ३।१।६) इति मान्धातोः सन्प्रत्यये तदन्तात्स्त्रियामप्रत्यये ततष्टाप्प्रत्ययेन निष्पन्नो विचारमर्थं ब्रूते। यद्यपि तत्र वार्तिककृता 'मानेर्जिज्ञासायाम्' इत्युक्तं तथाऽपि जिज्ञासा संदिग्धे वस्तुनि निर्णयाय भवति। निर्णयश्च विचारसाध्य इत्यर्थाद्विचारार्थता गम्यते। स च विचारो न प्रत्ययस्यार्थः किंतु धातोः। कथं पूजार्थकस्य मान्धातोस्तादृशेऽर्थे वृत्तिरिति चेत् धातूनामनेकार्थत्वादिति गृहाण। अत एव सिद्धान्तकौमुद्यां चुरादिप्रकरणे खेन्द्वग्निसंख्या-(३१०) युते धातौ 'विचारणे तु भौवादिको नित्यसन्नन्तः' इत्युक्तं दीक्षितैः संगच्छते। इतरथा भ्वादिगणेऽपि 'मान पूजायाम्' इत्येव पठितत्वेन 'विचारणे तु भौवादिकः' इत्युक्तिर्निर्विषया स्यात्। अत एव 'मानेर्जिज्ञासायाम्' इत्यस्य स्थाने 'मानेर्विचारे' इत्येव वृत्तिकृदित्युक्तं कैश्चित्। एवं च विचारशास्त्रं मीमांसाशब्दार्थ इति फलति।

सोऽयं मीमांसाशब्दः प्रथममुपनिषत्सु 'समेत्य मीमांसां चक्रुः' (छा. ५।११।१) सैषानन्दस्य मीमाꣳसा भवति (तै.२।८।१) इत्यादिस्थलेषु विमर्शपूर्वकव्याख्यानमित्यस्मिन्नर्थे प्रवृत्तो दृश्यते। इममेवार्थमुररीकृत्य संहिताब्राह्मणोपनिषदात्मकवेदराशिप्रतिपादितगूढार्थप्रकाशनपरेषु ग्रन्थेषु मीमांसाशब्दोऽनन्तरं प्रचलितोऽभूत्तत्र तत्र स्थिता विविधा ब्राह्मणारण्यभागा उपनिषदश्च वेदप्रतिपादितपरमगहनतत्त्वस्फुटीकरणपरा मीमांसाख्यामलभन्त। मन्त्रब्राह्मणात्मकस्य वेदस्य किं तात्पर्यं को वा प्रधानः प्रतिपादनविषयः स्तोत्रशस्त्रविधिनिषेधार्थवादादिरूपैर्भिन्नरूपता तेषामथवा स्तोत्रादीनां सर्वेषामेकार्थ्येन समन्वय इत्येतादृशे विचारे समुत्पन्ने 'वायवायाहि दर्शतेमे सोमा अरंकृताः। तेषां पाहि श्रुधी हवम्' (ऋ. सं. १।२।१) 'इन्द्र सोमं सोमपते पिबेमं माध्यंदिनं सवनं चारु यत्ते' (ऋ. सं. ३।३२।१) 'प्रति त्यं चारुमध्वरं गोपीथाय प्रहूयसे मरुद्भिरग्न आगहि' (ऋ. सं. १।१९।१) इत्यादिषु मन्त्रभागेषु देवतामुद्दिश्य बहुशः प्रतिपादितानि सवनहोमयागादिरूपाणि कर्माण्येव वेदतात्पर्यभूतानि, तान्येव धर्मः, स एव च चोदनात्मकैर्विधिनिषेधार्थवादादिभिर्ब्राह्मणारण्यकग्रन्थैर्विवेचितः प्रपञ्चितश्च भवति इति निर्णयं समापेदिरे वेदशास्त्रविचिकित्सकाः। तथा च मीमांसाशब्दं वेदतत्त्वविमर्शनात्मके ब्राह्मणोपनिषद्रूपे भागद्वये प्रयोजयामासुर्ब्राह्मणग्रन्थान्पूर्वमीमांसेति नाम्ना समाचरन्नुपनिषद्ग्रन्थांश्चोत्तरमीमांसानाम्ना संबोधयामासुः।

अनन्तरं व्यतीते बहुतिथे काले प्रसृताश्चतुर्णामपि वेदानामनेकाः शाखाः

प्रशाखाश्च या एकशतमध्वर्युशाखा एकविंशतिधा बाह्वृच्यं सहस्रवर्त्मा सामवेदो नवधाथर्वण इत्यादिपातञ्जलमहाभाष्यवाक्येष्वनेकेषु चेतरेषु ग्रन्थेषूल्लेखिता दृश्यन्ते । तासु च शाखाप्रशाखासु प्रचलितेषु ब्राह्मणपाठेषु प्रकीर्तितानां याग-सवनहवनादीनां स्वरूपे कर्माणि चापाततो दृष्टाद्विरोधात्संप्रदायविच्छेदाच्च यागादि-कर्मसु गुणविधीनामङ्गाङ्गिभावपौर्वापर्यादिविषयेषु संशयाः समुदपद्यन्त । निराकरणार्थं चैवंविधानां संशयानामर्थनिर्णयार्थं चाविरोधेन यथास्थितानां वैदिकवाक्यानां रचितानि बहुभिः पूर्वाचार्यैराश्वलायनशाङ्खायनापस्तम्ब-बौधायनसत्याषाढकात्यायनद्राह्यायणादिभिस्तथा चात्रेयैतिशायनबादरायणबाद-रिकार्ष्णाजिनिलाबुकायनादिभिश्चानेकानि कल्पसूत्राणि मीमांसासूत्राणि च । अमीषां कल्पसूत्रकाराणां मीमांसासूत्रकाराणां च मध्ये भगवतो जैमिनेः के पूर्व-कालीनाः के वापरकालीना इति यद्यपि न निश्चिततयावधारयितुं शक्यं तथापि सु-निश्चितमेतज्जैमिनेः प्रागासन्केचित्सूत्रकर्तारो यैः संगृहीता बहवो लौकिकन्याया उपनिबद्धाश्च लौकिकन्यायोपजीव्याः शास्त्रीयन्याया ग्रथितानि च संशयनिरा-करणोपयुक्तानि सूत्राणि ।

पूर्वाचार्यविरचितानि मीमांसासूत्राणि कल्पसूत्राणि च समालोक्य तत्प्रति-पादितान्न्यायान्युक्तीश्च स्वीकृत्य सर्वान्मन्त्रब्राह्मणग्रन्थांश्च विमर्शपूर्वकमालोच्य भगवाञ्जैमिनिराचार्यः श्रौतभागनिर्वचनेषूपयुक्तान्न्यायानेकत्रोपनिबध्य पूर्व-मीमांसासूत्रं द्वादशाध्यायीरूपं प्रणिनाय । अयमेव जैमिनिसूत्रस्य श्लाघ्यो विशेषो यदेतेषु सूत्रेषु मुख्ययागानामवान्तरयागानां होमानामुपहोमानामिष्टीनां च प्रकृतिविकृतिभावाङ्गाङ्गिभावनिर्णयस्तथैव मुख्ययागादिषु प्रयुज्यमानानामवान्तर-कर्मणामङ्गाङ्गिभावः क्रमो द्रव्यदेवतानिर्णयश्चेत्यादयस्तथा सामीचीन्येन प्रद-र्शिता यथाऽनिर्भिन्नपरंपरया लोके परिदृश्यमानं श्रौतकल्पसूत्रेषु च विस्तरतः प्रति-पादितं यागानां स्वरूपमागामिकाले तथैव प्रतिष्ठितं स्यान्न विकल्पलवावकाशोऽपि तत्र लोकानां मनसि पदं कुर्यात् । तत्र च कोयं वेदो नाम कोस्य प्रतिपादनीयोर्थः कास्योपयुक्तता किं फलं कथं वा तन्निश्चीयत इत्येतद् द्वादशाध्यायीरूपेण जैमिनि-सूत्रेण तथा सम्यक्तया विमर्शितं यथा सत्स्वपि बहुषु ब्राह्मणग्रन्थेषु कल्पसूत्रेषु च वेदार्थविमर्शरूपस्य मीमांसाशास्त्रस्याद्यः प्रणेता भगवाञ्जैमिनिरिति सुयुक्तः प्रचलितो लोकेषु प्रवादः । ईषदधिकनवशताधिकरणेषु विभक्तैः पादोनसहस्रत्रय-परिमितैः सूत्रैर्भगवता जैमिनिना वेदपूर्वकाण्डप्रतिपादितो यागादिरूपोर्थः पूर्व-पक्षोत्तरपक्षरूपेण बहुविधलौकिकयुक्तिनिदर्शनपूर्वकं निर्धारितः । तत्रादौ धर्मनिर्णाय-कानि प्रमाणानि निर्धारितान्यनन्तरं धर्माधर्मभेदः प्रदर्शितस्तदनन्तरं कर्मणां शेष-शेषिभावः क्रत्वर्थपुरुषार्थभेदेन प्रवृत्तिविशेषः क्रमोधिकारः सामान्यातिदेश-विशेषातिदेशावन्ते चोहबाधतन्त्रप्रसङ्गाश्च सप्रपञ्चं सोदाहरणं व्याख्याताः ।

अयं भगवाञ्जैमिनिः कस्मिन्समयेभूत्केस्य गुरवः कोस्य वंशोभिजनो वा के

वेतरे ग्रन्था अनेन लिखिता जैमिनिब्राह्मणस्य जैमिनिश्रौतगृह्यसूत्रयोः संकर्षणकाण्डस्य चासावेव प्रणेताऽपरो वा जैमिनिरित्येतस्मिन्विषये न किंचिदपि निश्चितया समुपलभ्यते । 'सुमन्तुजैमिनिवैशम्पायनपैलसूत्रभाष्यभारतमहाभारतधर्माचार्याः' इत्यादिरूपो ब्रह्मकर्मवाक्येषूल्लेखस्तथा च 'मीमांसाकृतमुन्ममाथ सहसा हस्ती मुनिं जैमिनिम्' इत्यादिरूपः पञ्चतन्त्रादिषूल्लेखश्चेत्येतौ जैमिनिकालनिर्णये न बहूपकुरुतः । बौधायनापस्तम्बाश्वलायनकात्यायनानां जैमिनिसूत्रेषूल्लेखाज्जैमिनिरेतेषामनन्तरं बभूवेत्यत्र न कोपि विवादः । उत्तरमीमांसासूत्रे जैमिनेरुल्लेखाद्बादरायणसूत्रेभ्यः पूर्वमेव जैमिनिसूत्राणि रचितानीति प्रायः शालिवाहनशकात्पूर्वं द्वित्रेषु शतेष्वेषां रचनाकाल इति प्रतिभाति ।

अतीतेषु केषुचित्संवत्सरेषु पारंपरिकसूत्रव्याख्यातॄणां लोपाद् वृत्तिभाष्यादीनामावश्यकता समुत्पन्ना । तथा चोपवर्षहरिभर्तृमित्रादिभिरत्र वृत्तयो लिखिताः । शबरस्वामिभिश्च विस्तृतं भाष्यं विरचितम् । उपवर्षादीनां वृत्तयस्तु नोपलभ्यन्तेऽधुना । केवलं तासामुल्लेखो भाष्यादिग्रन्थेषूपलभ्यते । भगवानुपवर्ष इति शब्दप्रयोगेण भाष्यस्यादौ शबरस्वामिभिर्बहुमानपुरःसरं कृतादुल्लेखादुपवर्षकालानन्तरं त्रिचतुराणि शतकानि शबरस्वामिकाल इति निश्चेतुं शक्यते । जैमिनिसूत्राणां पूर्वपक्षोत्तरपक्षरूपा व्यवस्था भिन्नभिन्नविषयप्रतिपादकानां सूत्राणां भिन्नभिन्नेषु चाधिकरणेषु निवेशः सूत्रप्रतिपादितविषयोद्घाटनं सूत्रकृद्रहस्याविष्करणं च सर्वमेतानि शबरस्वामिभिः सुसमीचीनतया कृतानि, ऋते च शाबरभाष्यात्केषांचित्सूत्राणां याथातथ्येन व्याख्यानमपि परमदुष्करमिति प्रवादोपि सुसमुत्पन्नः प्रतिभाति । शबरस्वामिनां कालनिश्चये न किमपि निर्णायकं प्रमाणम् । जिनमतानुसारिभिः कृतादुपसर्गादात्मानं रिरक्षिषुरसौ शबरवसतौ शबरवेषं गृहीत्वोवासेत्येकाख्यायिका श्रूयते । अपराख्यायिका तु शबरस्वामिनं विक्रमादित्यनृपतिपितृतयाङ्गीकुरुते । श्लोकश्चात्र भवति—ब्राह्मण्यामभवद्वराहमिहिरो ज्योतिर्विदामग्रणी राजा भर्तृहरिश्च विक्रमनृपः क्षत्रात्मजायामभूत् । वैश्यायां हरिचन्द्रवैद्यतिलको जातश्च शङ्कुः कृती शूद्रायाममरः षडेव शबरस्वामिद्विजस्यात्मजाः इति । भवतु यः कश्चिदपि तथ्यभाग एतादृशीष्वाख्यायिकासु, परमेतावत्तु ज्ञातुं शक्यतेऽस्मादाख्यायिकासंदर्भाद्ग्रन्थभाषाशैल्याश्च यदेते शबरस्वामिनो विक्रमादित्यसमकालीना आसन्निति ।

शबरस्वामिनामनन्तरं शाबरभाष्यविवेचनपराणां वार्तिकटीकादिग्रन्थानां द्वे प्रणाली प्रसृते ययोरेका भाट्टमतमिति नाम्ना प्रसिद्धिमुपगताऽपरा च प्राभाकरमतमिति नाम्ना विख्याताभवत् । भाट्टमतस्य प्रवर्तका मीमांसकशिरोमणयः कुमारिलभट्टाः शंकराचार्यसमकालीनाः स्कन्दावतारत्वेन प्रसिद्धाः प्रयागक्षेत्रेऽव्यवसन्निति प्रवादः । जैनबौद्धादिमतानुसारिणोनेके प्रतिवादिनोनेकवारमेभिः सह वादे प्रवृत्ते पराभूताः कर्मपरो मीमांसामार्गश्च महाकर्मठैरेभिरेव रक्षित इति

जगति प्रसिद्धिः। श्लोकवार्तिकतन्त्रवार्तिकटुप्टीकेति खण्डत्रयात्मकं वार्तिकमेतैः शाबरभाष्यव्याख्यानतया लिखितं यत्रानेकेषु स्थलेषु भाष्यस्पष्टीकरणादिनरदृपि मतान्तरखण्डनात्मकं स्वमतमण्डनात्मकं वैदिककर्मणामावश्यकत्वपरं कर्मठजनप्रवृत्तविविधाचारसमर्थकं स्मृत्यर्थपरिपोषकं विचारजातमेतैः प्रदर्शितम्। तथा च तेषु तेषु स्थलेषु प्रमातृप्रमेयप्रमितिप्रमाणफलादीनां जीवादिपदार्थानां तथा विस्तरतो विवेचनं कृतं यथा जैमिनिसूत्रोपज्ञं मीमांसाशास्त्रं मीमांसादर्शनपदवीमेतैरेवारोपितमिति चेदुच्यते न तत्र कोप्यतिशयोक्तिलेशः स्यात्। अमीषामेव प्रायः समकालीनाः पण्डितवर्याः प्रभाकरगुरवः इति विख्याताः यैरपि यत्र कुत्र स्थलेषु मतान्तरं प्रदर्श्य शाबरभाष्यं व्याचख्ये। एतत्कृतं शाबरभाष्यव्याख्यानं बृहट्टीकेति नाम्ना ख्यातिमुपागमत्। सूत्रव्याख्यानप्रसङ्गेन जीवस्वरूपनिर्णयाभिहितान्वयवादाभावस्वरूपार्थापत्तिस्वरूपादिनिरूपणस्थलेषु स्वमतं तथा विभिन्नतयैतैः प्रतिपादितं यथा प्रभाकरमतं कुमारिलमतं चैते गुरुमतभाट्टमतेति नाम्ना विश्रुते अभूताम्। अमी च प्रभाकरगुरवो वस्तुतः कुमारिलभट्टानां शिष्या एव ये कस्यांचिच्छाबरभाष्यव्याख्यानवेलायामेतैर्यथारूपं प्रदर्शिताद्भाष्यरहस्यानिर्णयाद्गुरुसकाशादपि गुरुपदवीं लेभिरे। लोके चानन्तरं प्रभाकरगुरव इत्यमीषामाख्या प्रचलिता। 'पूर्वंतुनोक्तमधुनापिनोक्तमतःपौनरुक्त्यम्' इत्यस्याः फक्किकाया व्याख्याप्रसङ्गे पूर्वं तु न उक्तम्, अधुनापि न उक्तम् इत्येवंरूपं पदच्छेदं मनसि प्रधार्य उक्तेः सर्वथाऽभावात् पौनरुक्त्यस्यासंभव इति संभ्रान्तमनस्का गुरवो यदा यदृच्छया क्षणमात्रं बहिर्दिशि गतास्तदा प्रभाकरेण गुरोः पुस्तिकायां 'पूर्वं तुना उक्तम्, अधुना अपिना उक्तम् अतः पौनरुक्त्यम्' इत्येवंरूपः पदच्छेदः कृतः प्रतिनिवृत्ताश्च गुरवः पदच्छेदावलोकनेन प्रकामं प्रमुदितमनसो नूनमस्माकं प्रभाकरो गुरुरित्यानन्दाश्रुगद्गदं जगदिरे तदनन्तरं चेतरे शिष्याः प्रभाकरं गुरुनाम्ना संबोधयामासुरिति कथा श्रूयते परंपरागतात्र वस्तुनि। अस्मिंश्च वस्तुनि दृश्यतेऽपरोपि श्लोकः—

मीमांसावार्तिकं भाट्टं भट्टाचार्यकृतं हि तत्।
तच्छिष्योप्यल्पभेदेन शबरस्य मतान्तरम्।
प्रभाकरगुरुश्चक्रे तद्धि प्राभाकरं मतम्॥

यद्यप्यनयोर्भाट्टप्राभाकरमतयोः प्रपञ्चोनेकैः शिष्यप्रशिष्यादिभिर्बहुविधग्रन्थरचनापूर्वकं कृतस्तथापि कतिपयसंवत्सरशतकानन्तरं प्राभाकरमतं भाट्टमतानुयायिभिस्तिरस्कृतं बहवश्चार्वाचीना मीमांसका भाट्टमतानुयायिन एवाभूवन्। प्रभाकरमतानुयायिनां मध्ये प्रभाकरशिष्यः शालिकनाथो बृहट्टीकाया उपरि टीकामृजुविमलानाम्नीं स्वतन्त्रं च ग्रन्थं प्रकरणपञ्चिकाख्यं विरचयामास। कुमारिलभट्टानुयायिनस्तु बहवो मीमांसका अमुष्वन्येषु पार्थसारथिमिश्रा माधवाचार्या मण्डनमिश्राः प्राचीनास्तथा च खण्डदेवनागाभट्टलौगाक्षिभास्करापदेवप्रभृतयस्त्वर्वाचीनाः प्रामुख्येन पदं लभन्ते।

सूत्रग्रन्था अधिकरणग्रन्थाः प्रकरणग्रन्थाश्चेति प्रकारत्रयोपलक्षिता ग्रन्था भिन्नभिन्नेषु त्रिषु कालविभागेषु रचिता अस्मिन्मीमांसाशास्त्रे उपलभ्यन्ते। तत्र सूत्रग्रन्थाः सूत्रव्याख्यानपराः सूत्ररचनानन्तरं प्रणीता येषु शबरस्वामिकृतं भाष्यं कुमारिलभट्टकृतं वार्तिकं प्रभाकरकृता बृहट्टीका पार्थसारथिमिश्रकृतः श्लोकवार्तिकव्याख्यानरूपो न्यायरत्नाकरः सोमेश्वरभट्टकृता तन्त्रवार्तिकव्याख्यारूपा राणकापराभिधाना न्यायसुधा चैते प्रामुख्येन निर्देशमर्हन्ति। अधिकरणग्रन्थरचनामये द्वितीये कालविभागे पार्थसारथिमिश्रमाधवाचार्यादिभी रचितानां शास्त्रदीपिकाजैमिनीयन्यायमालाविस्तरादीनां ग्रन्थानामुल्लेखः प्रमुखतया कर्तव्यो भवति। कुमारिलभट्टमतानुयायिभिः पार्थसारथिमिश्रै रचितेषु शास्त्रदीपिकान्यायरत्नाकरन्यायरत्नमालातन्त्ररत्नादिषु बहुषु ग्रन्थेषु शास्त्रदीपिकाग्रन्थ एव पाण्डित्यपरिपूर्णो मीमांसासूत्रभाष्यवार्तिकानां रहस्यं मार्मिकतया प्रकटीकुरुते प्राभाकरभाट्टमतमतांश्च विशेषांस्तेषु तेषु स्थलेषु विशदीकरोति। अस्मिन्ग्रन्थे मीमांसासूत्राणां न सूत्रशो विवेचनं कृतं किंतु पूर्वपक्षोत्तरपक्षरूपां व्याख्यानसरणिमनुसृत्याधिकरणशो मीमांसासिद्धान्ताः प्रतिपादिताः। यज्ञात्मनाम्नो मैथिलब्राह्मणस्यायमात्मज इति केचित्प्रतिपादयन्ति। कुमारिलभट्टानामयं साक्षाच्छिष्यः पार्थसारथिरित्यपि केचिन्मन्यन्ते।

पार्थसारथिमिश्रेभ्योनन्तरं गतेषु कतिपयेषु संवत्सरशतकेषु माधवाचार्यो जैमिनीयन्यायमालाविस्तरं नाम ग्रन्थं विरचयामासुर्यस्मिंस्तैस्तैः सिद्धान्तैः सह भाट्टप्राभाकरमतभेदा अपि सुसमीचीनतया प्रदर्शिताः। सुगृहीतसायणश्रीमतीनाम्नोः पित्रोः सकाशाल्लब्धजन्मानौ सायणमाधवौ विजयनगरसाम्राज्याधिकारिणो बुक्कनृपतेः सचिवावखिलवेदवेदाङ्गपारदृश्वानौ सकलशास्त्रपारंगतौ तेषु तेषु शास्त्रेषु सुबहून्ग्रन्थांश्चयामासतुर्येषु ऋग्यजुःसामभाष्याणि पञ्चविंशषड्विंशब्राह्मणभाष्ये जैमिनीयन्यायमालाविस्तरो वैयासिकन्यायमालाविस्तरः सर्वदर्शनसंग्रहश्चेते प्राधान्येनोपलभ्यन्ते। मीमांसाशास्त्रप्रतिपादितान्सिद्धान्तान्समीचीनतयाधिजिगमिषूणां सुबहूपकारकमध्ययनं जैमिनीयन्यायमालाविस्तरनाम्नोस्य ग्रन्थस्य यदेतस्मिन्न केवलं भाष्यवार्तिककाराणां राद्धान्ताः पाण्डित्यपूर्वकं विवेचिताः किंतु भाट्टप्राभाकरयोर्मतभेदा अपि सुविस्तृतं निदर्शिताः। सायणमाधवयोर्मध्ये माधवाचार्याश्चरमे वयसि गृहीतसंन्यासाश्रमाः शृङ्गेरीनगरीस्थशांकरपीठपट्टाधिकारिणश्चतुर्दशे संवत्सरशतकेभूवन्निति प्रसिद्धमेव।

सायणमाधवाचार्यानन्तरं मीमांसाशास्त्रे सूत्रग्रन्थरूपा अधिकरणग्रन्थरूपा वा पाण्डित्यपरिपूर्णविवेचनात्मका न बहवो ग्रन्था उपलभ्यन्ते। स्तोकेनैव कालेन विलयं गते विजयनगरसाम्राज्ये नैकेषु च क्षत्रियकुलावतंसनृपपालितेषु राज्येष्वनार्यम्लेच्छादिहस्तगतेषु सत्सु यागादिकर्मसु लोका मन्दादरा अभूवन्। सूत्रभाष्यवार्तिकायाकरग्रन्थानामध्ययनाध्यापनविषया परंपरापि न पूर्ववन्निराबाधं

प्रसृता । किं तु स्तोकेनैवाध्ययनेन मीमांसाशास्त्रनैपुण्यमधिगन्तुं समीहा विदुषां बहूनां मनासि पदं विदधे । तत्पूरणार्थमिव नूनं समजनि न्यायवैशेषिकशास्त्र इवात्रापि मीमांसाशास्त्रे आकरग्रन्थस्थसिद्धान्तसारमाविष्कुर्वतां लघूनां प्रबन्धानां लेखने प्रवृत्तिः पण्डितप्रकाण्डानां चेतसि, प्रवृत्ताश्च बहवो मीमांसका आपदेवादय एतत्कार्यनिर्वहणसमर्थान् प्रकरणग्रन्थान्विरचयितुम् । आपदेवकृतो मीमांसान्यायप्रकाशो लौगाक्षिभास्करकृतोर्थसंग्रहः कृष्णयज्वकृता मीमांसापरिभाषा चैते ग्रन्थाः प्रकरणग्रन्थेषु प्रामुख्येन पदं लभन्ते । सत्सु च बहुष्वप्येवंविधेषु प्रकरणग्रन्थेषु पाण्डित्यपरिपूर्णेष्वितरेषु च प्रबन्धेषु मीमांसासूत्रशाबरभाष्यतन्त्रवार्तिकस्थं सुमहान्तमर्थजातं तितउनेव परिपूय लघुनोपायेन च विदुषां पुरतः प्रतिष्ठापयन्नेक एव ग्रन्थ उपलभ्यतेयं मीमांसान्यायप्रकाश आपदेवविरचितः । ग्रन्थेस्मिन् वेदप्रामाण्यविधिशब्दार्थभावनाविवेचनविधिप्रभेदश्रुत्यादिप्रमाणनिषेधनिरूपणादिकं मीमांसासारभूतमेव वस्तु तथा प्रतिपादितं यथा सत्यपि लाघवे न परिहीनं पाण्डित्यपरिपूर्णं विवेचनम् “ ग्रन्थेनैकेन वक्ष्यामि यदुक्तं सूत्रभाष्ययोः । वृत्तिवार्तिककारैश्च निर्णीतं बहुविस्तरैः ” इत्यादिरूपा प्रतिज्ञा च ग्रन्थकारैरापदेवैर्यदि कृताभविष्यत्सानेन ग्रन्थेन सुसंपूर्णा सफलाभविष्यदिति भाति।

मीमांसान्यायप्रकाशकर्तायमापदेवोर्थसंग्रहकर्ता लौगाक्षिभास्करश्चेत्येतौ शालिवाहनशकस्य सप्तदशे शतके समभूताम् । तथा च मधुसूदनसरस्वतीगदाधरनागेशभट्टजगन्नाथैश्चतुर्भिः पण्डितैः सह पण्डितपञ्चकपदवीं प्रपन्नस्य खण्डदेवस्यैतौ पूर्वकालीनाविति यद्यपि सुनिश्चितं तथाप्यनयोर्मध्ये कः पूर्वकालीनः कश्चोत्तरकालीन इत्येतस्मिन्विषयेद्यापि विद्वांसः संशयनिराकरणं कर्तुं न प्रभवन्ति । कृते च सूक्ष्मतयैतयोर्ग्रन्थयोरवलोकने प्रादुर्भवेत्सुलभतयैव विदुषां मनासि यदनयोर्ग्रन्थयोर्न केवलं भाषाया विचाराणां च साम्यं किंतु स एव विषयानुक्रमस्तेषु तेषु स्थलेषु त एव शब्दप्रयोगा वाक्यप्रयोगाश्च । तत्र प्रथमं तावदर्थसंग्रहग्रन्थस्य लघीयस्तया प्रकरणे प्रकरणे च पूर्वपक्षोत्तरपक्षरूपं महान्तं ग्रन्थसंदर्भं संक्षिप्य बहूनि वाक्यान्यपसार्य सारभूतानि स्तोकान्येवोपयुक्ततमानि वाक्यान्युद्धृत्य च लिखितोऽयमर्थसंग्रहो ग्रन्थो न्यायप्रकाशस्यैव संक्षेप इति केचित्प्रतिपादयन्ति । स्वप्रतिपादितमतस्य दृढीकरणार्थं च प्रदर्शयन्ति द्वित्राणि स्थलानि यत्रोद्धरणकर्मणि योग्यविमर्शाभावेनावश्यकवाक्यस्यापाकरणादर्थसंग्रहे न्यूनार्थकत्वं संदिग्धार्थकत्वं च । यथा अर्थसंग्रहे ' स्थानं क्रमश्चेत्यनर्थान्तरम् ' ( पृ. ९४ पं. २ ) ' सवनीयदेशे ह्यनुष्ठानेऽग्नीषोमीयानुबन्ध्ययोः स्वस्वस्थानातिक्रममात्रं भवति प्रधानप्रत्यासत्तिलाभश्च ' ( पृ. १२६ पं. ३ ) ' इदमेव चाश्रयिकर्मेत्युच्यते ' ( पृ. १०७ पं. १ ) ' वैकृताङ्गानां प्राकृताङ्गानुवादेन ( अननुवादेनेत्यपि पाठः ) विहितानाम् ... ... यथामनहोमानाम् ' ( पृ. ९६ पं. १ ) इत्यादिषु स्थलेषु ।

अपरे तु प्रथममेवार्थसंग्रहो रचितः । परं त्वतिलघीयस्तया ग्रन्थस्य कार्त्स्न्ये-

नार्थानाकलनाद् विवेचनीयस्थलेषु च शास्त्रपाण्डित्यपूर्णविवेचनस्यावश्यकस्याभावाच्चास्य ग्रन्थस्योपयुक्तता यथापेक्षं समुपलभ्येति मीमांसाशास्त्रे स्तोकेन प्रयासेन प्रभूतं प्रावीण्यं प्रेप्सूनां जनानां कृते पाण्डित्यपूर्णेन व्याख्यानेन सहितः पुनः संस्कृत्यासावापदेवेन लिखित इति मन्यन्ते। दर्शयन्ति च न्यायप्रकाशे कानिचित् स्थलानि 'तथापि यत्रार्थस्मारका मन्त्राः' (पृ.१८१ पं. ३) 'तन्मात्रसंकोचार्थत्वादुपसंहारस्य' (पृ.२६१ पं. ३) इत्यादीन्यर्थसंग्रहस्य प्राचीनतरत्वं प्रदर्शयितुं यत्र प्रतिपादितेपि पूर्वपक्षोत्तरपक्षरूपेणार्थसंदर्भे प्रतिष्ठापिते च न्यायप्रकाशकारैः स्वसिद्धान्ते केवलं पूर्वपक्ष एव सिद्धान्ततयोपलभ्यतेर्थसंग्रहे न केवलं निर्देशोप्युत्तरपक्षस्य। यद्यापदेवैर्लिखितं न्यायप्रकाशमवलोक्यैव तत्समासत्वेन लौगाक्षिभास्करोर्थसंग्रहं व्यरचयिष्यत्तर्हि नूनमसौ न्यायप्रकाशस्थितसिद्धान्तं पूर्वं प्रतिपाद्य तत्खण्डनपूर्वकमेव पूर्वपक्षत्वेन न्यायप्रकाशे उपलब्धं स्वाभिप्रेतं मतं प्राकटयिष्यत्। कालान्तरेणानयोर्ग्रन्थयोरपि द्वित्राष्टीकाग्रन्था लिखिता येषु रामेश्वरभिक्षुभी रचितार्थसंग्रहटीका अनन्तदेवेन रचिता भाट्टालंकारनाम्नी न्यायप्रकाशटीका च परिचिते एव विदुषाम्।

उपरिनिर्दिष्टेभ्यः सौत्राधिकरणप्राकरणिकग्रन्थेभ्योन्येपि बहवो मीमांसाग्रन्थाः प्रबन्धाश्च विरचिता मीमांसकाग्रणीभिर्यथाकालं येषु मण्डनमिश्ररचिता विधिविवेकादयोप्पयदीक्षितानां विधिरसायनादयः खण्डदेवानां भाट्टरहस्यादयो ग्रन्थाः सादरमुल्लेखमर्हन्ति। तदेवं वेदकर्मकाण्डकृतबीजस्य जैमिनिसूत्रमूलस्य शाबरभाष्यस्कन्धस्य प्राभाकरटीकाभाट्टवार्तिकैः सशाखस्य शास्त्रदीपिकाजैमिनीयन्यायमालाविस्तरादिभिर्ग्रन्थैः संपादितप्रशाखस्य विधिविवेकन्यायकणिकाभावनाविवेकादिभिर्ग्रन्थैः संपादितप्रसूनराशेरस्य पूर्वमीमांसावृक्षस्य मीमांसान्यायप्रकाशः परिणतं मधुरं फलमिति प्रतिभाति। समुपजीर्णोप्यस्मिंस्तरावल्पश्रद्धतया लोकानामिदानींतने काले, मीमांसाप्रतिपादितन्याया लौकिकवैदिकव्यवहारेषु जनानां बहूपकारकाः पदेपदे दृश्यन्ते। अपि चेदं पूर्वमीमांसाशास्त्रं वेदवाक्यार्थतत्त्वावधारणापेक्षितन्यायकलापसंदृब्धं सकलदर्शनमूर्धन्यभूतमिति सर्वसंप्रतिपन्नोऽयमर्थः। नैव खल्विह जैमिनिप्रोक्तन्यायानुसंधानमन्तरा केचिदपि श्रुतिवाक्यानां स्मृत्यादिवाक्यानां किंबहुना लौकिकानामपि वाक्यानां तात्पर्यमवधारयितुं प्रभवन्तीति भवति सर्वेषां तत्तदपेक्षितार्थस्फुटीकरणायैतदपेक्षेति नैतत्तिरोहितं शास्त्रमर्मरसिकानाम्।

तदेवमतिप्रामाणिकमौपनिषदानामपि स्वापेक्षितवाक्यार्थनिर्धारणविधावावश्यकमिति सर्वेभ्यः समुत्कर्षशालीदं शास्त्रं शबरस्वामिप्रभृतिभिर्भाष्यादिनिबन्धविरचनद्वारा सुविवृतमपि अतिमात्रविस्तृततयाऽत्यन्तदुरूहार्थजटिलतया चानिपीतमीमांसारसानां जनानां ततः कथमप्युपकारलेशमसंभाव्यैतच्छास्त्रप्रतिपादितानर्थानामूलाग्रं मनस्याकलय्य प्रविविक्षूणां सुखावबोधायैकविषयानिरू-

पयावसरे तांस्तानर्थान् प्रसङ्गसंगत्याऽ तार्य सुलभा बोधैर्वाक्यसंदर्भैः स्फुटी-कुर्वन् मीमांसान्यायप्रकाशाख्यं निबन्धं प्रणिनाय विद्वद्वरः श्रीमानापदेवः।

अमुं च मीमांसान्यायप्रकाशनामानं ग्रन्थं विरचय्य लोकसिद्धानेव न्यायांस्त-मसाऽऽवृतान्दीपिकाभिरिव युक्त्युपपत्तिभिस्तथा प्रकाशयांचकार ग्रन्थकारो यथा तेऽनायासेनैव बुद्ध्यारूढा भवेयुः। तदुक्तम्—

तत्र प्रदर्शययुक्तीर्दुर्बोधोऽर्थो भवेद्यदि।

बालोऽप्याश्रितसोपानः प्रासादारोहणक्षमः॥ इति।

किंच न्यायोपपादने युक्तिप्रदर्शनमावश्यकमेव। यतः—

तत्त्वप्रकाशनं युक्त्या न्याय इत्युच्यते बुधैः।

इत्यभियुक्तोक्त्या न्यायशरीरमेव युक्तिघटितमिति युक्तिमन्तरेण न्यायस्य स्वरूप-लाभ एव न भवति। अत एवोक्तम्—

प्रकाशते स्वरूपेण न्यायो युक्त्योपपादितः॥ इति।

तथा च न्यायान्प्रकाशयितुं प्रवृत्तस्य युक्त्यालम्बनमावश्यकमेव भवति।

'मीमांसान्यायप्रकाश' इति नाम्नाप्येतत्सिद्धं भवति। तथाहि तत्र मीमांसा-शब्दस्यार्थो विचार इति प्रागुक्तमेव। न्यायशब्दोऽपीदृशस्थले नीयते प्राप्यते तात्पर्यार्थो येनेति व्युत्पत्त्या—

विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः।

पञ्चाङ्गफलं चैव शास्त्रेऽधिकरणं विदुः॥

इति लक्षणलक्षितं पञ्चाङ्गमधिकरणं वक्ति। 'अध्यायन्यायोद्यावसंहाराः' (पा. सू. ३।३।१२२) इति निपातनात्साधुः। प्रकाशशब्दश्चापि प्रकाश्यतेऽनेनेति व्युत्पत्त्या स्पष्टीकरणसाधनार्थं वदति। 'अकर्तरि च कारके' (पा. सू. ३।३।१९) इति सूत्रेण प्रपूर्वकात्काशृधातोः करणे घञ् प्रत्ययः। ननु तत्र संज्ञायामित्युक्तम्। न चेयं संज्ञा। यतोऽनेन शब्देन स्पष्टीकरणसाधनं सर्वमुच्यते। तत्कथमत्र घञ्? इति चेदुच्यते। अकर्तरि चेति चकारो भिन्नक्रमः संज्ञायामित्युत्तरं बोध्यः। तथा च संज्ञायामपीत्यर्थलाभादसंज्ञायामपि क्वचिद्भवति घञ् प्रत्ययः। एतद्भि-प्रायेणैवोक्तं मूले दीक्षितैः— संज्ञायामिति प्रायिकमिति। एवं च विचारशास्त्रीय-न्यायानां प्रकाशकोऽयं ग्रन्थ इत्यर्थो लभ्यते। अथवा प्रकाशशब्दो भावघञन्तः। ततोऽर्शआद्यच्। प्रकाशोऽस्त्यस्मिन्निति प्रकाशः। न्यायानां प्रकाशः स्फुटीभावो यस्मिन्नित्यर्थः। न्यायानां प्रकाशो यस्मिन्निति सप्तम्यर्थे बहुव्रीहिणा व्याख्यानं तु व्यधिकरणबहुव्रीहिज्ञापकसाध्यत्वेनागतिकगतित्वान्न मनोरममिति बोध्यम्।

नन्वेवमपि मीमांसाशब्देन पूर्वोत्तरमीमांसयोरुभयोरुपस्थित्या भवति संदेहः किमुत्तरमीमांसान्याया अस्य ग्रन्थस्य विषयोऽथवा पूर्वमीमांसान्याया इति। तथा च नास्य ग्रन्थस्य विषयो नाम्ना निश्चितत्वेनावगम्यत इति चेद्भ्रा-न्तोऽसि। निरुपपदो हि मीमांसाशब्दः स्वभावात्पूर्वमीमांसामेवाभिधत्ते। सामान्य-

शब्दा अपि केचिन्नियतविषया भवन्ति । यथा मालामानयेत्युक्तौ सामान्यमुखप्रवृत्तोऽपि मालाशब्दः पुष्पमालामेव प्रकाशयति तद्वत् । तदुक्तं काव्यप्रकाशकारैर्मम्मटभट्टैः 'निरुपपदो हि मालाशब्दः पुष्पस्रजमेवाभिधत्ते' इति । अन्यथा मीमांसाशब्देनोत्तरमीमांसावदुत्तकमीमांसाद्युपस्थितिः केन दण्डनिवारिता स्यात् । अत एव--

छायायास्तमसश्चापि संबन्धाद्गुणकर्मणोः ।

द्रव्यत्वं केचिदिच्छन्ति मीमांसकमताश्रयाः ॥

इति वैद्यकराजवल्लभकृतवादार्थदर्पणस्थश्लोके मीमांसकशब्दे पूर्वमीमांसावेदितुरेव प्रतीतिर्नोत्तरमीमांसावेदितुः । तस्य वेदान्तिनाम्ना व्यवहारस्य प्रसिद्धत्वाच्च ।

सोऽयं पूर्वमीमांसाशास्त्रीयग्रन्थोऽनन्तसुतेनाऽऽपदेवेन प्रणीतः । अयं चाऽऽपदेवः स्वजनुषा कं देशं वंशं वा भूषयांबभूवेत्यत्र प्रयतमाना अपि प्रमाणानुपलम्भान्न वक्तुं पारयामः । महदेतत्खेदस्थानं यद्ग्रन्थकारा अपि निजवंशचरित्रलेखनेन परिचयं न ददतीति । ऐतिहासिकाः पुनः स्थूलमानेन [ १६३० ] ख्रिस्ताब्दसमयेऽमुं ग्रन्थं प्राणैषीदापदेव इति निरचैषुः । एतद्ग्रन्थकर्त्रापदेवसुतानन्तदेवेन स्वप्रणीते स्मृतिकौस्तुभे स्वपर्यन्ता निजवंशपरंपरैवं वर्ण्यमाना दृश्यते—

मूलपुरुषः—एकनाथः ( १ ) । तत्सुतः-सर्वशास्त्रार्थतत्त्वविदापदेवः ( २ ) । तत्सुतोऽनन्तदेवः ( ३ ) । तत्सुतः—प्रकृतग्रन्थकर्ता आपदेवः ( ४ ) । तत्सुतः—स्मृतिकौस्तुभप्रणेताऽनन्तदेवः ( ५ ) इति । अत्र सर्वत्र प्रमाणभूताः श्लोकाः स्मृतिकौस्तुभे स्पष्टा इति न पुनरिहोल्लिख्यन्ते । अस्यां वंशावल्यां द्वावापदेवौ द्वौ चानन्तदेवौ वर्णितौ दृश्येते । तत्र द्वितीयावेवाऽऽपदेवानन्तदेवौ यथाक्रमं मूलपुरुषमेकनाथमारभ्य चतुर्थपञ्चमपुरुषौ न्यायप्रकाशस्मृतिकौस्तुभप्रणेतारावित्ति ज्ञेयम् । मूलभूतश्लोकेषु तादृशयोरेवाऽऽपदेवानन्तदेवयोस्तत्तद्ग्रन्थप्रणेतृत्वेनोल्लेखात् । एवं न्यायप्रकाशोपरि भाट्टालंकाराख्यव्याख्याकर्ताऽनन्तदेवोऽपि निरुक्तानन्तदेवयोर्मध्ये द्वितीय एवेत्यवगन्तव्यम् । यदि च भाट्टालंकाराख्यव्याख्याकर्ताऽनन्तदेवः प्रथम एवेति कल्प्येत तदिदं कल्पनं लोकदृष्टविरुद्धत्वादसामञ्जस्यमावहेत् । नैवं लोके क्वापि दृष्टं श्रुतचरं वा यत्सुतशिष्यप्रणीतमूलग्रन्थोपरि तत्पितृगुरुकृता व्याख्येति । दृष्टा तु पितृगुरुकृतमूलग्रन्थोपरि तत्सुतशिष्यकृता टीकेति । न्यायप्रकाशकर्तुरस्याऽऽपदेवस्य विद्याप्रदो गुरुरनन्ताख्यः स्वपितैव । एतद्ग्रन्थारम्भे 'अनन्तरूपिणं वन्दे गुरुम्' इत्युक्तम् । भाट्टालंकाराख्यटीकायामनन्तरूपिणमित्यस्यानन्तनामानमित्यर्थ उक्तः । तथा च नमस्कार्यत्वेन निर्दिष्टस्य गुरोरनन्तनामकत्वाभिधानात्पूर्वोक्तवंशावल्यां च न्यायप्रकाशकर्तुरापदेवस्य पितुरनन्तनामकत्वेन वर्णनायोऽनन्तनामा गुरुः सोऽनन्ताख्यः पितैवेत्यध्यवसीयते । जन्मप्रदविद्याप्रदयोरैक्यस्य लाभात् । यदि हि अनन्तनामा गुरुरनन्तनाम्नः पितुरपेक्षया भिन्न एवेत्युच्येत तर्हि निष्कारणं विरुद्धकल्पना कृता स्यादिति दिक् ।

इदं चात्रावधेयम्— विषयस्य बुद्ध्यारोहाभावे यत्कारणद्वयं विषयस्याविशदं बुद्धेर्मान्द्यं च, तत्राऽद्यं कारणमनेन मीमांसान्यायप्रकाशग्रन्थेन परिहृतम्। द्वितीयकारणपरिहाराय मध्ये किंचिद्द्वारमपेक्ष्यते। येन च द्वारेण मन्दायामपि बुद्धौ विशदविषयस्यानायासेन प्रवेशः स्यात्। तादृशद्वारकार्यं संपिपादयिषया मयेयं प्रभा व्यरचि। लोके च दीपः प्रभाद्वारा सर्वगृहप्रकाशको भवति। तत्र च पूर्वं विद्यमानाऽपि दीपप्रभा मषीनिर्वासनोत्तरमुज्ज्वला भवति। प्रकृते चाज्ञानमूलको यश्चिरकालावस्थानेन दृढमूलो लोकानां बुद्धिगतो दोषः स यथा यथैतन्मूलग्रन्थस्य पुनः पुनर्निरीक्षणेन न्यूनीभवेत्तथा तथा प्रभेयमुज्ज्वलतरा सती स्वकार्यं प्रकाशयितुं विशेषतः प्रभवेत्।

किंबहुना येऽत्र न्यायप्रकाशे भावनाद्वयविध्यादिवेदविभागनिरूपणश्रुतिलिङ्गादिप्राबल्यदौर्बल्यप्रवृत्त्यादिक्रमप्रभृतयोऽर्था उपवर्णितास्तान्विशदीकर्तुं तथाऽस्यां प्रभायां मया प्रयतितं यथा ते वाचकानां मनस्यनायासेन निर्विचिकित्सं प्रतिबिम्बमिव समारूढा भवेयुः। अत एवेयं मूलग्रन्थतात्पर्यं सामान्यतोऽवगच्छतां विशेषतश्च जिज्ञासूनामतितरामुपकुर्यादेवेति दृढं विश्वसिमि।

तदर्थमेव चाधुना मीमांसान्यायप्रकाशाख्यस्यास्य ग्रन्थस्य तात्पर्यं संक्षेपेण प्रदर्श्यते। मीमांसायां हि धर्मो विचार्यते। तादृशधर्मस्वरूपस्य याथातथ्येन ज्ञापनाय प्रवृत्तेन न्यायानुसारिणा जैमिनिना न्यायाः पुरस्कृताः।

न्यायैः प्रसाधितो ह्यर्थ आरोहति मतिं द्रुतम्।

इति न्यायात्। अनेन च ग्रन्थकारेण तानेव न्यायान्प्रकाश्य जैमिनिमनोरथः सफलतामनायि। तथा चास्माद्ग्रन्थाद्धर्मस्वरूपमनायासेन ज्ञायते। वेदेन कर्तव्यतया बोधितो योऽर्थः स धर्मशब्देनोच्यते। तत्र विधिमन्त्रनामधेयनिषेधार्थवादरूपेण पञ्चविधे वेदे कर्तव्यतया बोधनं विधिवाक्यैः साक्षात्क्रियते। मन्त्रादयस्तु तत्सहायाः। विधिश्च प्रेरणापरपर्यायो लिङादिप्रत्ययैर्बोध्यते। वेदस्य चापौरुषेयत्वाच्छब्दरूपो वेद एव तत्र प्रेरकः। शब्दनिष्ठत्वादेव चास्याः प्रेरणायाः शाब्दी भावनेति व्यवहारः। प्रत्यक्षतश्च यत्कर्माचरणं तदस्याः साध्यम्। तदेव चार्थी भावनेत्युच्यते। लिङादिज्ञानमन्तरेण च प्रेरणाया अकिंचनकारित्वाल्लिङादिज्ञानमस्याः साधनमित्युच्यते। प्रेरणा च तथा कार्या भवति यथा सद्य एव प्रवृत्तिः स्यात्। तथाविधा च प्रेरणा विषयप्राशस्त्यज्ञापनपूर्विकेत्यर्थवादवाक्यैः कृतं प्राशस्त्यज्ञापनमस्या इतिकर्तव्यता भवति। इतिकर्तव्यता च सर्वत्र क्रियारूपैव। सा च क्रिया मानसी बाह्या वेत्यन्यत्। विधिवाक्यानि चाप्राप्तार्थबोधकानि। तत्र कानिचित्तादृशकर्मविधायकानि। कानिचित्तु प्राप्ते कर्मणि गुणमात्रविधायकानि। कानिचिच्च विशिष्टविधायकानि। न तु पार्थक्येन तत्रोभयाविधिः। वाक्यभेदापत्तेः। विशिष्टविधिश्च लक्षणां विना यदि स्यात्तर्हि वरम्। लक्षणया जायमानस्तु विशिष्टविधिस्तत्रैवाश्रयणीयो यत्रान्वयदोषं वैयधिकरण्यादिकं

स्वीकृत्यार्थापत्तिसिद्धिर्न स्यात्। अगत्या चाश्रीयमाणा लक्षणा यद्यपि सति संभवे प्रकृत्यंश एव कार्या न तु प्रत्ययांशे। गुणे त्वन्याय्यकल्पनेति न्यायात्। तथाप्यन्वयपर्यन्तं गता मनोवृत्तिरन्वयानुपपत्तिं दृष्ट्वा तदुपपत्त्यर्थं लक्षणाश्रयणाय ततः परावृत्ता संनिहितं प्रत्ययार्थमेव प्रथमतो निरीक्षते। तद्व्यवधानेन तु प्रकृत्यर्थमिति सति संभवे प्रत्ययांश एव लक्षणाश्रयणं युज्यते। अयमेवासंजातविरोधन्यायः। प्रत्यये लक्षणाश्रयणमशक्यं चेत्प्रकृत्यंशे साश्रयणीया भवति।

एवं विधिना कर्तव्यतया बोधितं कर्म च तदा साकल्येन ज्ञातं भवति यदा 'ईदृशमस्य कर्मणः स्वरूपममुकं च तस्याङ्गमीदृशश्च तत्राधिकारी एतादृशश्च तत्र क्रम' इति ज्ञातं भवेत्। तत्र द्रव्यं देवता च कर्मस्वरूपम्। तद्बोधको विधिरुत्पत्तिविधिः। तत्र द्रव्यस्य देवतायाश्च ज्ञानं शब्दादेवेति नाग्रहः। कथमपि तद्भवतु। यस्माच्च वाक्यात्तद्भवति स उत्पत्तिविधिः। यस्माच्च वाक्यात्कस्मिंश्चिदङ्गिन्यङ्गसंबन्धो ज्ञायते स विनियोगविधिः। यस्माच्च वाक्यादीदृशस्तत्र कर्तेति बोधो भवति सोऽधिकारविधिः। यस्माच्च वाक्यात्तत्रत्यावान्तरकर्मणामिदं प्रथमतस्तदनन्तरमिदमित्येवं क्रमोऽवगम्यते स प्रयोगविधिः। विशिष्टविधिस्तूत्पत्तिविधितो नातिरिक्तः। तथा गुणविधिर्विनियोगविधितो नातिरिक्तः। वेदे चैककर्मसंबन्धेन यावन्ति वाक्यान्युपलभ्यन्ते तेषामुक्तचतुर्विधवाक्येष्वेवान्तर्भावः। तत्रोत्पत्तिवाक्यमेकमेव। अपरं कश्चिदुपलभ्यते चेत्स तस्यानुवाद इति मन्तव्यम्। विनियोगविधिबोधकानि वाक्यानि त्वनेकान्यपि संभवन्ति। एकस्मिन्नेव कर्मण्यङ्गाङ्गिभावसंबन्धस्यानेकत्र सत्त्वात्। अधिकारविधिश्च तत्र तत्र कर्माणि प्रत्येकमेकैक एव प्राय उपलभ्यते। किंतु पृथक्पृथक्कामानामप्यनेकेषामेकस्मिन्कर्मणि, तथैककामानामप्यनेकेषामनेकस्मिन्कर्मण्यधिकारः संभवत्येव। क्रमबोधकान्यपि वाक्यान्यनेकानि संभवन्ति। एकस्यापि कर्मणोऽनेकपदार्थघटितत्वेन तेषु पौर्वापर्यरूपस्य क्रमस्यानेकत्र संभवात्।

कर्मणश्च प्रत्येकमुक्तप्रकारचतुष्टयमावश्यकमित्येव। न तु तत्प्रकारचतुष्टयं पृथक्पृथग्वाक्यचतुष्टयबोधितमेवेत्याग्रहः। तेनोक्तप्रकारचतुष्टयमध्ये एकाधिकप्रकाराणामेकेनैव वाक्येन बोधनेऽपि न क्षतिः। तथाच क्वचिदुत्पत्तिवाक्य एवाधिकारिबोधनं गुणबोधनं वा दृश्यमानं न विरुध्यते। तथोत्पत्तिविधेरेवाङ्गवाक्यैः सहैकवाक्यतामापन्नस्य प्रयोगविधित्वाङ्गीकारो न विरुध्यते। तथा गुणस्याधिकारिणः क्रमस्य वान्यतःसिद्धत्वे तद्बोधकवाक्याभावेऽपि न क्षतिः।

तत्र चोत्पत्तिविधिरन्यतोऽप्राप्तं कर्म कर्तव्यतया बोधयति। उत्पत्तिवाक्ये च धात्वर्थस्य यागादेः कर्मणः प्रत्ययार्थभावनायां करणत्वेनान्वयः अमुकेन यागेनेष्टं भावयेदिति। इष्ट इत्यर्थस्य बोधस्तु लिङ्तव्यदादिविधिश्रुतेः सकाशादेव भवति।

विनियोगविधिस्तु क्वचिदङ्गिनि कस्यचिदङ्गस्याङ्गत्वेन संबन्धं बोधयति। यथा दध्ना जुहोतीत्यनेन दध्नोऽङ्गस्य होमेऽङ्गिनि विनियोगो बोध्यते। करणत्वबोधिका दध्नेति तृतीयाश्रुतिश्च तादृशविनियोगे प्रमाणभूता। श्रुत्यादीनि च षड्-

प्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि विनियोगे सहायभूतानि भवन्ति। अत्र चोत्तरोत्तरप्रमाणानां प्रमाणत्वमेव हि स्वाव्यवहितपूर्वप्रमाणसापेक्षमित्युत्तरप्रमाणस्य स्वरूपलाभ एव पूर्वप्रमाणाधीनः। तथा चैतेषु यदि प्रमाणद्वयं मिथो विरुद्धमेकत्रोपस्थितं भवेत्तर्हि तत्र पूर्वं प्रबलमुत्तरं दुर्बलमिति पूर्वप्रमाणमेव साहाय्यार्थं ग्राह्यं भवति। क्वचित्तु दुर्बलमपि प्रमाणं प्रबलस्यापि विरोधिनः प्रमाणस्य पुरःस्वकार्यकारित्वेनावतिष्ठते, यदि तत्प्रबलतरप्रमाणानुसारि चेत्। भृत्यस्यापि स्वाम्यनुकूलश्चेत्स स्वामिनीमपि तृणाय मन्यते। एतैश्च प्रमाणैरमूर्तस्यापि संख्यादेरर्थस्य कर्त्रादिमूर्तपदार्थद्वाराङ्गत्वेन विनियोगो भवति। द्वारभूतो मूर्तः पदार्थश्च यस्तत्रोपस्थितः स ग्राह्यो भवति। सा चोपस्थितिर्वाच्यवृत्त्या प्रकारान्तरेण वा कीदृश्यप्यस्तु नतु वाच्यवृत्त्यैव जायमानेत्याग्रहः। तादृशनियमे प्रमाणाभावात्। तथा च क्रियापदे आक्षेपलभ्योऽपि कर्ता तत्र द्वारभूतो भवति। क्रियापदे च यजतीत्यादौ लकारस्य व्यापार एव शक्तिर्न तु कर्तरि। शब्दज्ञाने सत्योऽर्थस्योपस्थितिर्हि केवलमनुभवसिद्धा। नतु तादृशोपस्थितिजनकत्वेन शक्तिरनुभवं प्रविशति। तथा चोपस्थित्युपपत्त्यर्थं शक्तिरत्र लकारस्य केवलं कल्प्यते। यदि च सार्थोपस्थितिरन्यथा सिद्धा भवेत्तर्हि तस्मिन्नर्थे शक्तिकल्पनं वृथैव। लकारवाच्येन व्यापारेण स्वाश्रयतया कर्तुराक्षेपात्तस्योपस्थितिः शक्तिमन्तरेणापि सिद्धा भवति। अत्र लाघवं च धातोः फलमात्रे शक्तिः नतु व्यापारे तस्य शक्त्यन्तरकल्पनमिति। लः कर्मणीति पाणिनिसूत्रविरोधस्तु न दोषावहः। तत्तद्दर्शनविशेषपुरस्कारेण प्रवृत्तानां सूत्रकाराणां तत्तद्दर्शनीयेतरसिद्धान्तपारवश्येन वक्तुं प्रवृत्तत्वात्। श्रुतेस्तु न तथा प्रवृत्तिरिति श्रुतिविरोधः सर्वैरप्यास्तिकैर्दार्शनिकैर्दोषावहत्वेन गण्यते। तदपेक्षयाप्यनुभवस्यास्तिकनास्तिकसकलजनसाधारण्येनैकरूपत्वादनुभवविरोधः सर्वैरपि परिहार्यो भवत्येवेत्यन्यत्। तदेवं कर्तुराक्षिप्तत्वेऽपि तद्द्वारा संख्यायाः कर्माङ्गत्वं सिद्धम्।

तत्रादृष्टार्थापेक्षया दृष्टार्थमङ्गं प्रबलम्। दृष्टार्थस्य शीघ्रमुपस्थितेः। अदृष्टार्थाङ्गमध्येऽप्यारादुपकारकापेक्षया संनिपत्योपकारकमङ्गं प्रबलम्। तत्र संबन्धस्य पूर्वसिद्धत्वेन शीघ्रमुपस्थितेः। संनिपत्योपकारकमध्येऽपि चोपयुक्तार्थापेक्षयोपयोक्ष्यमाणार्थं प्रबलम्। दृष्टेर्हि पुरोगामित्वस्य नैसर्गिकतयोपयोक्ष्यमाणस्य शीघ्रमुपस्थितेः।

प्रयोगविधिश्चावान्तरकर्मणां पौर्वापर्यं बोधयति। तच्च पौर्वापर्यं क्त्वाप्रत्ययादिना शब्दत एव क्वचित्प्रतिपाद्यते क्वचित्स्वार्थिकम्। अङ्गवाक्यैः सहैकवाक्यतामापन्नो य उत्पत्तिविधिः तद्रूपे प्रयोगविधौ स्वार्थिकमेव भवति। पौर्वापर्यमेव च क्रमशब्देनोच्यते। क्रमबोधकानि प्रमाणानि च श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यानि षट्। एषु च प्रमाणेषूत्तरोत्तरं दुर्बलं भवति।

अधिकारविधिस्तु तत्र तत्र कर्मविशेषे ईदृशोऽधिकारीत्येवमधिकारि-

विशेषं प्रदर्शयति । यथा ज्योतिष्टोमरूपे यागविशेषे स्वर्ग-कामोऽधिकारी । न केवलं तस्य स्वर्गकामनामात्रेणाधिकारः संपद्यते । किंतु कर्मणो याथातथ्येन ज्ञानसत्त्वे एव । अग्निसाध्ये कर्मणि च कृताग्न्याधानस्यैवाधिकारः । तथा तादृशकर्माचरणसामर्थ्यसत्त्व एव च तस्याधिकारः । नित्यकर्मणि तु असमर्थस्यापि यावच्छक्यमधिकारोऽस्त्येव ।

वेदपठितो मन्त्रभागस्तु कर्मकाले विनियुज्यते । स च तत्रोच्चारितो वाच्यवृत्त्या लक्षणया व्यञ्जनया वा कर्माचरणयोग्यमर्थं स्मारयति । एवं स्मरणपूर्वकमेवानुष्ठितं कर्मापूर्वोत्पादकं भवति ।

वेदपठितो नामधेयभागस्तूद्भिदादिशब्द इदं कर्मैतादृशमिति कर्मविशेषस्वरूपमवगमयति । इदं कर्मविशेषस्य नामेति निश्चयस्तु तत्र भवति यत्र नामधेयत्वाङ्गीकारेण लक्षणा वाक्यभेदो वैयर्थ्यं वा परिहर्तुं शक्यते । उपमाश्रयणेन वार्थ उपपन्नो भवति ।

वेदपठितो न हिंस्यादित्यादिर्निषेधभागस्तु विहितात्कर्मणः सकाशात्फलप्राप्तौ जायमानायां प्रतिबन्धदूरीकरणेन कर्मण्युपयुक्तो भवति ।

अथात्र न हिंस्यादित्यादिना निषेधवाक्येन किं हिंसाया अभावः कर्तव्यतया बोध्यते अथवा हिंसाकर्तव्यताया अभावो बोध्यते । आद्ये पक्षे तादृशार्थस्यावश्यकत्वेऽपि संभवो नास्ति । हिंस्यादित्यत्रत्यप्रकृतिप्रत्ययार्थयोर्मध्ये नञर्थस्याभावस्य प्रवेशासंभवात् । द्वितीये पक्षे तु रागतो जायमानाया हिंसाया निषेधो न स्यात् । नहि सा कर्तव्यतया बोधितेति बुध्या क्रियते किंतु जायत इत्येव । किं च पशुमालभेतेत्यादौ यत्र हिंसायाः कर्तव्यतावगम्यते तत्र तस्या निषेधो दुर्वारः स्यात् । विधिनिषेधोभयसार्थक्याय च तत्र पर्यायः स्यादित्यनिष्टमापद्यते इति चेत्—

भ्रान्तोऽसि । माभून्नाम नञर्थस्याभावस्य प्रकृतिप्रत्ययार्थयोर्मध्ये प्रवेशः । अस्तु च हिंसाकर्तव्यताया अभाव एव च वाक्यार्थः । किंतु रागतो जायमानायामपि हिंसायां कर्तव्यताबुद्धिरस्त्येव । कर्मानुष्ठानस्य लौकिकस्य वैदिकस्य वा कर्तव्यताबुद्धिपूर्वकत्वावश्यंभावात् । तथा च कर्तव्यताबुद्धिर्द्विविधा वेदाज्ञया जायमाना कारणान्तरेण जायमाना वा । तथा च यत्र हिंसायां कर्तव्यताबुद्धिः कारणान्तरेण जायते तत्र तत्कर्तव्यताया अभावबोधनेन न हिंस्यादिति निषेधस्य चारितार्थ्यमिति सामर्थ्याभावेन सामर्थ्यमूलकं पर्यायकल्पनं न कर्तव्यं भवतीति लाघवमेव भवति । एवं च यत्र हिंसायां रागतः प्रवृत्तिसंभवस्तत्र तन्निषेधज्ञानेनाप्रवृत्तौ सत्यां न पातकोत्पत्तिरिति न पातकजन्यदुःखानुभवो नापि पुण्यकर्मजन्यफलानुभवप्रतिबन्धः ।

वेदपठितोऽर्थवादभागस्तु कर्तव्यतया बोधिते कर्मणि विधितो जायमानां प्रवृत्तिं स्थिरां दृढां च संपादयतीत्यर्थवादवाक्यानामुपयोगः । एवं विधिमन्त्रनाम-

धेयनिषेधार्थवादभेदेन पञ्चविधोपि वेदभागः सफलो भवति । कस्य कया विधया क्व साफल्यमिति तु न्यायानुसरणेन निर्णयं भवति ।

यावच्छक्यं च दोषपरिहारे यः प्रयत्नस्तदेव न्यायानुसरणमिति तत्र महान्तो दोषाः सर्वथा त्याज्या एव भवन्ति । क्षुद्रा अपि लक्षणादयो दोषा यावच्छक्यं त्याज्या एव । अगत्या तु तेषां क्वचित् स्वीकारो भवति । दोषाश्च स्वार्थहानि-परार्थकल्पनाप्राप्तबाधगौरवासंभवकष्टविलम्बग्राम्यत्वविरोधपुनरुक्तिवैयर्थ्याप्रतीत-त्वलक्षणावैषम्यसंदेहवाक्यभेदविरुद्धत्रिकद्वयवैयधिकरण्यैकप्रसरताभङ्गपरमुखप्रे-क्षित्वादिशब्दैस्तत्र तत्र ग्रन्थे निर्दिष्टाः । एतेषां दूषकत्वं च लोकत एव सिद्धम् ।

अथ दोषपरिचयाय केषांचिद्दोषाणां स्वरूपं प्रदर्श्यते । तत्रादौ विरुद्धत्रिक-द्वयदोषो यथा—'देवदर्शनाय रथेन गच्छेत्' इत्यत्र गमनस्य देवदर्शनभावनायां साधनत्वेन संबन्धः, गमनेन देवदर्शनं भावयेदिति प्रतीतेः । रथकरणकभावनायां च तस्यैव साध्यत्वेन संबन्धः । रथेन गमनं भावयेदिति प्रतीतेः । एतत्प्रतीति-द्वयानुरोधेन गमनस्य भावनायां साधनत्वेन साध्यत्वेन च संबन्ध आवश्यकः । एकस्मिंश्च वाक्ये रूपभेदेन द्विविधेपि संबन्धे शाब्देऽङ्गीक्रियमाणे विरुद्धत्रिक-द्वयदोषः । गमने एकं त्रिकमुपादेयत्वं विधेयत्वं गुणत्वं चेति । एतच्च त्रिकं क्रमेण देवदर्शननिष्ठोद्देश्यत्वानुवाद्यत्वमुख्यत्वनिरूपितम् । तस्मिन्नेव च गमने पूर्वत्रिक-विरुद्धमपरं त्रिकमुद्देश्यत्वमनुवाद्यत्वं मुख्यत्वं चेति । एतच्च त्रिकं क्रमेण रथ-निष्ठोपादेयत्वविधेयत्वगुणत्वनिरूपितम् । अथैतद्दोषपरिजिहीर्षया यदि गमनस्य भावनायामेकस्मिन्वाक्यार्थे एकेनैव साधनत्वेन रूपेण संबन्धः द्वितीये च वाक्यार्थे साध्यत्वेन रूपान्तरेणेत्येवं वाक्यार्थद्वयं क्रियते तदा वाक्यभेददोषः । यदि च वाक्यभेददोषपरिजिहीर्षया एकस्मिन्नेव वाक्यार्थे देवदर्शनमनूद्य रथकरणकगमनं विधीयते तदा विशिष्टविधिरिति गौरवं दोषः । दोषान्तरं च रथस्य गमननिरू-पिता विधेयत्वप्रतीतिः शाब्दी न स्यादिति ।

आर्थी प्रतीतिश्च शाब्दप्रतीत्यपेक्षया जघन्या । तत्रार्थस्य स्फुटमप्रतीतेः । अश्लीलादयः केचिदर्थविशेषास्तु प्रकरणानुरोधेन यत्र बोद्धव्या एव स्युस्तत्र तादृशा अर्था आर्थप्रतीत्यैव प्रत्येया भवन्ति । यतोऽश्लीलार्थानामस्फुटा प्रतीति-रपि वक्तृविशेषानुरोधेन गुणाहैव भवति ।

लक्षणा चार्थधीविलम्बाद्दोषत्वेन गण्यते । तथा हि आदौ पदज्ञानं ततः पदार्थस्मरणं ततोऽन्वयज्ञानं ततो वाक्यार्थधीः । तदुत्तरं च व्यङ्ग्यसत्त्वे व्यङ्ग्यार्थधीरिति क्रमः प्रसिद्धः । लक्षणास्थले तु गङ्गायां घोष इत्यादौ अन्वय-ज्ञानपर्यन्तं गता मनोवृत्तिस्तत्रान्वयानुपपत्तिं दृष्ट्वाऽग्रे गन्तुमसमर्था पूर्वस्मृत-शक्यार्थपर्यन्तं परावृत्ता तादृशशक्यार्थसंबन्धिनमर्थान्तरं स्मृत्वा तत्कुक्षौ प्रवेश्या-न्वयमुपपादयति ततो वाक्यार्थधीर्भवति । एवमन्वयानुपपत्तिमूलकलक्षणास्थले वाक्यार्थज्ञाने विलम्बो भवति । तात्पर्यानुपपत्तिमूलकलक्षणास्थले च काकेभ्यो

दधि रक्ष्यतामित्यादौ वाक्यार्थधीपर्यन्तं गता मनोवृत्तिस्तत्र तात्पर्यानुपपत्तिं दृष्ट्वा परावृत्ता पूर्वस्मृतशक्यार्थपर्यन्तं गता तादृशशक्यार्थसंबन्धेनार्थान्तरं स्मरति । अग्रे पूर्ववत् । तथा च तत्र विलम्बाधिक्यं सिद्धम् । लक्षणामूलव्यञ्जनास्थले च नायं दोषः । यद्यपि व्यङ्ग्यार्थे वक्त्रा शक्यत्वमापादिते वाक्यार्थज्ञाने विलम्बो न भवेत् तथापि सर्वसाधारण्येनार्थस्याप्रकाशनं यत्र गुणस्तत्र वक्ता व्यञ्जकशब्दं प्रयुङ्क्ते इति तत्र जायमानोऽपि विलम्बो न दोषाय भवति । फलमुखगौरवस्यादोषत्वात् । रूढिलक्षणायां तु विलम्ब एव न भवति ।

वाक्यभेदादिदोषाणां वाक्यार्थज्ञाने आयासाधिक्याद्दोषत्वम् । ग्राम्यत्वादिदोषाणामर्थस्योपहसनीयत्वाद्दोषत्वम् । नैरर्थक्यादिदोषस्थले चार्थस्योपयोगाभावाद्दोषत्वं बोध्यम् । अन्येनोच्चारितवाक्यश्रवणे सति तत्र श्रुतात्तादृशाद्वाक्यात् तथा पुस्तकावलोकनसमये स्वयमेव सूक्ष्मोच्चारिताद्वाक्याद्यार्थप्रतीतिर्जायते सानुपहसनीयस्योपयोगिनश्चार्थस्य भाव्या । तथा सा प्रतीतिरनायासेनाविलम्बेन च भाव्येति सर्वसंमतमेव । न तत्र वैमत्यं कस्यचिदपि प्रेक्षावतः कस्मिंश्चिदपि दर्शने दृश्यते । तत्र चैकस्माद्वाक्यात्प्रतीतस्यार्थस्य लघुत्व एकत्वे च लाघवम् । अर्थस्य महत्त्वे द्वित्वे च गौरवम् । महत्तरत्वे त्रित्वादौ चातिगौरवम् । तत्र महत्त्वमूलकं गौरवं परिमाणकृतम् । द्वित्वादिकृतं गौरवं तु संख्याकृतम् । तच्च संख्याकृतं गौरवं परिमाणकृतगौरवापेक्षया दोषाधिक्याय भवति । यतो महत्यपि वाक्यार्थे मध्ये विरामो नापेक्ष्यते । वाक्यार्थानेकत्वे तु नैसर्गिको मध्ये विरामोऽवश्यंभावी । अतोऽनेकार्थावबोधे विलम्बो जायते । तत्राप्यर्थयोर्विरोधे नैसर्गिकविरामक्षणापेक्षयाप्यधिक एकः क्षणो मिथोविरुद्धतदुभयार्थसाधारणो भवत्येवेति विलम्बाधिक्यं सूक्ष्मेक्षिकयानुभूयत एव सूक्ष्मदर्शिभिः । एवं दोषपरिचयाय केषांचिद्दोषाणां स्वरूपं दूषकताबीजं च निदर्शितम् । दोषज्ञानं च दोषहान्यै उपयुज्यते । तदुक्तम्—

दोषा अपि च बोद्धव्या दोषत्यागाय केवलम् ।
पार्थक्येनावबोधस्तु त्यागे सौकर्यमावहेत् ॥ इति ।

दोषपरिहारार्थं च न्यायालम्बनमावश्यकमेव भवति । तदप्युक्तम् —

न्यायावलम्बनं दोषप्रहाणाय समाचरेत् ।
प्रदीप एव प्रभवत्यन्धकारविनाशने ॥ इति ।

युक्तं चैतत् । दोषपरिहारेणैव हि न्याया आत्मानं लभन्ते । तथाहि । अनन्यलभ्यः शब्दार्थ इति न्यायः, आकृत्यधिकरणन्यायः, अन्यायश्चानेकार्थत्वमिति न्यायः एतन्न्यायावलम्बनेन शक्त्यन्तरकल्पनप्रयुक्तं गौरवं परिहृतं भवति । योगाद्रूढिर्बलीयसीति न्यायः, उपस्थितं परित्यज्यानुपस्थितकल्पना न न्याय्येति न्यायः, प्रकरणाविच्छेदन्यायः, एतैश्च न्यायैरनाश्रितोपस्थितपरित्यागदोषः परिह्रियते । प्राप्ताप्राप्तविवेकन्यायः, विधिप्रतिषेधौ विशेषणे पर्यवस्यतः सति विशेष्ये बाधे

इति न्यायः, तत्प्रख्यं चान्यशास्त्रमिति न्यायः एतन्न्यायाश्रयणे तत्र नैरर्थक्यदोषो नास्पदं धत्ते । तथा वैषम्यदोषपरिहारेणैव गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यादिति न्यायस्य स्वरूपलाभः । निषादस्थपतिन्यायश्च गौरवदोषापसारकः । एवमन्येष्वपि न्यायेषु यथासंभवमूहनीयम् ।

किंच यथा जीवच्छरीरे जीवात्मा प्राणश्चेति द्वयं मुख्यं तथा न्यायशरीरे युक्तिर्दोषनिर्हरणं चेति द्वयं मुख्यम् । यथा च तत्र जीवात्मानमवलम्ब्यैव प्राणसंचारः, सत्येव च प्राणसंचारे जीवात्मा कार्यकारी भवति तथात्रापि युक्तिमवलम्ब्यैव दोषनिर्हरणं, सत्येव च दोषनिर्हरणे युक्तिः कृतकृत्या भवति । अतएवोक्तमभियुक्तैः ।

युक्तिजीवातुना न्याय आत्मानं लभते सदा ।
दोषनिर्हरणप्राणवायुना स प्रबुध्यते ॥ इति ।

तथा— न्यायानुसारीति जनं तमाहुः किल पण्डिताः ।
अप्राप्तमपि यो दोषं ध्यात्वा परिजिहीर्षति ॥
न्यायानुसारिणं दोषा आक्रामन्तीति का कथा ।
दूरस्थिता एव दोषास्तं स्प्रष्टुमपि बिभ्यति ॥
दोषहान्यै प्रथमतो यतितव्यं नरेण यत् ।
अकिंचित्करतामीयुः सति दोषे गुणा अपि ॥ इति च ।

एवं च— यावच्छक्यं दोषहानिप्रयत्नः स्यान्मीमांसापद्धतेः प्राणभूतः ।
सा चेन्नाङ्गीकारकर्मत्वमाप्ता साम्राज्यं स्यात्तत्र दोषव्रजस्य ॥

इत्येवं यद्दोषहानिप्रयत्नस्य मीमांसापद्धतिप्राणभूतत्वमुक्तं तत्सुतरां संगतं भवति । यतो मीमांसापद्धतिर्न्यायानुसरणमेव । न तु तदन्तरेण तस्या अन्यादृशं किंचित् स्वरूपं प्रदर्शयितुं शक्यते । एवं च वादे मीमांसापद्धतिर्नास्माभिरङ्गीक्रियते किंत्वितिहासपद्धतिरिति सांप्रतं यत्केषांचिद्वचः श्रूयते तन्मीमांसापद्धतेस्तात्त्विकस्वरूपानवबोधमूलकं हास्यास्पदमेव ।

'य उदास्ते दोषहान्यै प्रेक्षावत्सु न गण्यते'

इत्येवं तस्य निन्दाश्रवणात् ।

अत्रेदमवधेयम् । वादे पद्धतिः कीदृशी स्वीकार्येति विचारे वादस्य यत्प्रयोजनं तदामवलम्ब्य सिध्येत्सैव स्वीकार्या भवति । अतो वादस्य किं प्रयोजनं तदादौ समालोचनीयम् । न्यायगौतमसूत्रकारेण 'तत्त्वबुभुत्सोः कथा वादः' इति वादस्वरूपमभिदधता वादप्रयोजनं संसूचितम् । तथा च कथाया वादस्वरूपत्वं कथाकर्तृणामवस्थाविशेषायत्तम् । स चावस्थाविशेषस्तत्त्वबुभुत्सावत्त्वम् । तत्त्वबुभुत्सा च तदैव सामीचीन्येन पदं धत्ते चेतसि यदा न लेशतोऽपि पक्षपातावकाशः । तत्त्वावबोधश्च प्रमाणायत्तः । तदुक्तम्—

इदमीदृशमित्येवं यत्तत्त्वमवबुध्यते ।
तदुद्भवः कथं नु स्यात्प्रमाणानुसृतिं विना ॥ इति ।

प्रमाणानुसरणं च यथा मीमांसापद्धतौ स्पष्टतयाऽवगम्यते न तथेतिहासपद्धतौ । इतिहासेन हि श्रुतेन केवलं कस्मिंश्चिदर्थे दृष्टान्तावगमः स्यात् । न तु दृष्टान्तमात्रेण काप्यर्थसिद्धिर्भवति । दृष्टान्तो हि वस्तुसंभवमात्रं प्रदर्शयन् प्रमाणप्रवृत्तिप्रतिबन्धकमसंभवं दूरीकरोति इत्येव । न तु तावतार्थसिद्धिः, दूरे तत्त्वावबोधः । यदि त्वितिहासपद्धत्यवगतस्य दृष्टान्तभूतस्यार्थस्य युक्तिसिद्धतां प्रतिपाद्य प्रामाण्यं प्रतिपादयसि तर्हि गले पतितैव मीमांसापद्धतिः । युक्तिसिद्धोऽर्थश्च न्याय्य इत्युच्यते । न्याय्योऽर्थो हि न्यायादनपेतः । न्याया एव च मीमांसापद्धतौ विवृताः । किंच मीमांसापद्धतेरस्वीकारो निर्हेतुकः सहेतुको वा ?

आद्ये ब्रूहि यथाकामं न कुर्मः प्रतिरोधनम् ।

अन्त्ये स सद्धेतुरसद्धेतुर्वा ? आद्येऽनिच्छतोऽपि ते गले पतत्येव न्यायानुसरणम् । न्यायमूलमेव हि सद्धेतोः सद्धेतुत्वम् । अन्त्ये त्वसद्धेतोरकिंचनकारित्वेन मीमांसापद्धतेरस्वीकारे प्रमाणाभावात्स्वमतप्रच्यवः ।

या चेयमितिहासपद्धतिरायुष्मता वादे समाश्रीयते सा किं न्यायानुगृहीता न्यायाननुगृहीता वा ? आद्ये समागतोऽसि सन्मार्गम् । मीमांसापद्धतौ हि न्याया एव संप्रदर्शिताः । अन्त्ये चेतिहासपद्धतिर्वादे किं कुर्यात् । दृष्टान्तमात्रं प्रदर्शयेत् । इतिहासपद्धतौ दृष्टान्तः प्रमाणानामनुग्राहकोऽसंभवनिरासद्वारा । मीमांसापद्धतौ तु न्यायः प्रमाणानां मूलं प्रमाणत्वसाधनद्वारा । प्रमाणानां प्रमाणत्वं च न्यायाधीनमेव । योगाद्रूढिर्बलीयसीत्यस्य शाब्दं प्रामाण्यं रथकाराधिकरणन्यायमूलम् । संनिपातपरिभाषाया उपजीव्यविरोधस्यायुक्तत्वमिति न्यायो मूलम् । एवं यदागमाः, तन्मध्यपतितः, एकदेशविकृतम्, येन नाप्राप्ते इत्याद्याः प्रमाणभूताः परिभाषा अपि लौकिकन्यायमूला एव । द्वारमित्यत्र पिधेहीति पदमध्याहृत्य द्वारं पिधत्ते सुस्यः । अध्याहारश्च वक्तृतात्पर्यानुरोधेनैव न तु श्रोतृतात्पर्यानुरोधेन । प्रत्यासत्तिन्यायात् । यमर्थमनुसंधाय वक्ता वाक्यं प्रयुङ्क्ते सोऽर्थः कार्त्स्न्येन शब्देनोक्तो न भवेच्चेदध्याहारः । अतस्तत्र वक्तुरेव तात्पर्यानुसरणम् । अध्याहारकर्ता च श्रोतैव । वाक्यार्थावबोधार्थेव ह्यध्याहारकरणात् । वाक्यार्थावबोधश्च श्रोतुरेव । अत्रापि प्रत्यासत्तिन्याय एव मूलं माता पूज्येत्यत्रेव । अत्र च स्वसुतमाता भार्या । तत्पूजने इदं वाक्यं प्रामाण्यं नार्हति । प्रत्यासत्तिन्यायविरोधात् । न्यायाश्चैते जैमिनिना सूत्रकारेण नापूर्वाः प्रोक्ताः । किं तु संदिग्धस्थले पक्षपातरहिताः सुधियः प्रेक्षावन्तो यं यं मार्गमनुसरन्ति स स न्याय इति संगृहीत इत्येव लोकावबोधाय केवलम् ।

या चेयं मीमांसापद्धतिर्भवता वादे परित्यज्यते तस्याः कीदृशं स्वरूपमवधारितं भवति । कीदृशश्च तत्र दोषः परित्यागकारणत्वेनावधारितः ?

सांप्रतिकानां केषां चिज्जनानां मनोवृत्त्यनुगुणा न भवतीति चेत् या तथा विधा केश्चिन्निर्मिता भवेत्सापीतरेषां मनोवृत्त्यनुगुणा नैव भवेत् ।

किं च जैमिनिना किमियं द्वादशाध्यायी भवत्सदृशानां दुःखदित्सया विरचिता । नैव । किं तु सुखदित्सयैव विरचिता । तच्च सुखमैहिकं पारलौकिकं वेत्यन्यदेतत् ।

न वयं जैमिन्यृषिणा जनानां दुःखदित्सयेयं द्वादशाध्यायी प्रणीतेति ब्रूमः । किं तर्हि सुखदित्सयैव । केवलं संप्रति तस्याः सकाशाद्दुःखमिदानींतनानां भवतीति । तर्हि सांप्रतिका जना एव तत्र कारणं न जैमिनिरिति भवद्वचसैव सिद्धं भवति ।

किं चानवद्या प्रेक्षावतां लोकानां निरूढा पद्धतिर्न्याय इत्युच्यते । तां च तथाविधां निरूढां पद्धतिं समालोच्य ततस्तेषां सुखप्राप्तिं दुःखहानिं च संवीक्ष्य मन्दधियामपि तादृशसुखप्राप्तये दुःखहानाय च प्रवृत्ताः सूत्रकारास्तादृशपूर्वपद्धतिमेव सौलभ्येन ज्ञापनाय सूत्ररूपेण संजग्रहुः । त एव च न्याया इत्युच्यन्ते । न तु न्याया नामापूर्वाः सूत्रकृता प्रतिपादिताः । तदुक्तम्—

नैव सूत्रकृता न्यायाः स्वकपोलप्रकल्पिताः ।
अनुग्रहाय मन्दानां सिद्धा एव प्रदर्शिताः ॥ इति ।

किंच जैमिनिस्तत्रतत्र सिद्धान्तभूतेऽर्थे हेतुं प्रदर्शयन्नित्थं संसूचयति—न मयोक्तमित्येतावता स्वीकर्तव्यमपि तु प्रदर्शितं हेतुं परिज्ञाय युक्तियुक्तं चेत्प्रतीयेत तर्हि स्वीकर्तव्यमिति ।

अपि च यश्च कस्यामपि पद्धतौ दोषत्वेनाभिमतोऽर्थस्तस्य दोषत्वं च न दुःखदातृत्वेन । यश्चापि तत्र गुणत्वेनाभिमतोऽर्थस्तस्य गुणत्वं च न सुखदातृत्वेन । किं तु सा पद्धतिर्वादस्वरूपस्य तत्त्वावबोधपर्यन्तं सामीचीन्येनावस्थितये समाश्रीयते । अतस्तत्रत्यो योऽर्थस्तत्त्वावबोधायापर्याप्तो भवति स दोषः । यश्च तत्पर्याप्तो भवति स गुणः । तथा च गुणस्य गुणत्वं दोषस्य दोषत्वं च न वस्तुस्वरूपप्रयुक्तम् । यतो यो यत्र गुणो भवति स एवान्यत्र दोषो भवति । अतो नैमित्तिकं तत् । तदुक्तम्—

अग्राभावे कथं सूच्या संधीयेत पटद्वयम् ।
व्यथादाय्यपि सूच्यग्रं न दोषत्वेन गण्यते ॥ इति ।

तदेवं यो हि वादे मीमांसापद्धतेः परित्यागो यश्चापीतिहासपद्धतेरुररीकारस्तदेतदुभयमपि न प्रमाणपद्धतिमारोढुमर्हतीति तदनुसारेण निर्णीतोऽर्थो न धर्मात्मतामवगाहेदिति सुव्यक्तमेव तत्र निरतानां धार्मिकजनानामिति विभावयन्तु सुधियः । यच्चाप्यन्यैः कैश्चिदुक्तं ' वेदवाक्यार्थनिर्णयाय प्रवृत्तमिदं शास्त्रं न खलु स्मृत्याद्यर्थनिर्णयविषये समादरणीयम्' इति । तदेतदविचारमूलकम् । यतो निर्णय-

सिन्धु- वीरमित्रोदय- व्यवहारमयूख-हेमाद्रिप्रभृतिषु निबन्धेषु मनुयाज्ञवल्क्यपराशरादिमहर्षिप्रणीतासु च स्मृतिषु मीमांसाशास्त्रोहितानेकविधान्न्यायाननुसंधायैव धर्मतत्त्वनिर्णयस्य प्रतिपादितत्वात्। नैतावदेव किं तु काव्यप्रकाशकारमम्मटप्रभृतय आलंकारिका अपि मीमांसितवाक्यार्थानुसारेणैव तत्तत्प्रालंकारानिरणैषुः। समग्रहीषुश्च तदर्थं स्वग्रन्थे मीमांसाविषयघटितान् प्रस्तावानिति नाविज्ञातमिदं बहुविदाम्। कैयटदीक्षितादयोऽपि वैयाकरणा मीमांसानुरोधेनैव सूत्रार्थं वर्णयन्तः शब्दसाधुत्वं निश्चिन्वन्ति। मञ्जूषावैयाकरणभूषणसदृशानां ग्रन्थानामध्ययनमृते मीमांसोपासनया दुर्घटमेवेति मन्ये।

यद्यपि यागादिर्धर्मः श्रुतिषूक्तो दृश्यते तथापि श्रुतिष्वेवोक्त इति न मन्तव्यम्। मनुयाज्ञवल्क्यादिभिर्लोकव्यवहारार्थं स्मृतिष्वपि बहुधा धर्मस्य संगृहीतत्वात्। यं हि स्मार्तो धर्म इत्याचक्षते धर्मविदः। अत एवोक्तं याज्ञवल्क्येन—

पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश॥ इति।

किंच वेदवाक्यान्युद्दिश्य जैमिनिनाऽस्य शास्त्रस्य प्रणीतत्वेऽपि 'घटायोन्मीलितं चक्षुः पटं नहि न पश्यति' इति न्यायेन स्मार्तादिवाक्यान्तरेष्वपि प्रवर्तेतैवेदं मीमांसाशास्त्रम्। यतोऽन्योद्देशेन निर्मितस्याप्यन्योपकारकत्वं लोके दृश्यते। यथा नागरिकाणां स्नानपानादिव्यवहारसिद्ध्यर्थं कुल्यां निर्मायाऽऽनीतमप्युदकं मार्गेऽन्तराऽन्तराऽनागरिकेभ्योऽपि क्षेत्रार्थं दीयत एव। अध्वगैः पश्वादिभिश्चाप्युपभुज्यते। तदुक्तं महाभाष्यकारैरनुदात्तङित इति सूत्रे भाष्ये— 'अन्यार्थमपि प्रकृतमन्यार्थं भवति। तद्यथा-शाल्यर्थं कुल्याः प्रणीयन्ते ताभ्यश्च पानीयं पीयत उपस्पृश्यते शालयश्च भाव्यन्ते' इति।

अथ मन्येथास्तत्रतत्र वेदवाक्यान्येवोदाहृतानि दृश्यन्त इति तादृशवाक्येष्वेवेदं शास्त्रमुपयोज्यतां न वाक्यान्तरेष्विति चेद्‌वृद्धं भ्रान्तोऽसि। नहि सुध्युपास्य इत्यादि लौकिकं प्रयोगमुदाहृत्य विवरीतमिकोयणचीत्यादि शास्त्रं तादृशलौकिकेष्वेवोपयोज्यतां न 'सुर्म्यं सुषिरामिव' इत्यादौ वैदिके इति युक्तं कल्पयितुम्।

आपि च नैव कर्मकाण्डीयश्रुतिवाक्यान्युपादाय प्रदर्शिता गुणदोषा वाक्यान्तराण्याश्रित्य गुणदोषत्वं परित्यजेयुरिति सांप्रतम्। नह्यात्मार्थं संपादिता स्वाद्वी रसाला शिखरिणी वा परं नरं प्राप्य माधुर्यं परित्यजति। नहि वा द्विषदर्थं निर्मितं विषमयमौषधं मित्रमुपस्थायामृतं भवति। तस्माच्छ्रीमत्याऽनया मीमांसया महत्याऽऽरभट्या ये वेदवाक्येषु गुणदोषा विवेचितास्ते केवलं वाक्यत्वनिबन्धना एव न वैदिकत्वमूलका इत्येव कल्पना ज्यायसी। तच्च वाक्यत्वं श्रुतिवाक्येष्विव स्मृत्यादिवाक्यान्तरेष्वप्यविशिष्टम्। तत्र कथमियं मीमांसा श्रुताविव वाक्यान्तरेष्वपि अर्थनिर्धारणं कर्तुं न प्रवर्तेतेति त्वमेव प्रशान्तेन मनसा विचार-

जनवदर्थविधानेनार्थवान् । स चात्रासमर्थं विधत्ते । यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति विधिरप्राप्तं प्रयोजनवद्धोमं विधत्ते, अग्निहोत्रहोमेन स्वर्गं भावयेदिति ।

यत्र तु कर्म प्रकारान्तरेण प्राप्तं तत्र तदुद्देशेन गुणमात्रविधानम् । यथा 'दध्ना जुहुयात्' इत्यत्र होमस्य 'अग्निहोत्रं जुहुयात्' इत्यनेन प्राप्तत्वाद्धोमोद्देशेन दधिमात्रविधानम्, दध्ना होमं भावयेदिति ।

यत्र तूभयमप्राप्तं तत्र विशिष्टं विधत्ते । तदुक्तम्— 'नचेदन्येन शिष्टाः' (जै.सू.१।४।९) इति । शिष्टा उपदिष्टा इत्यर्थः । यथा 'सोमेन यजेत' इति । अत्र

---

सकाशान्निवृत्तिकरत्वेन वैगुण्यप्रतिबन्धापनोदकतया कर्मोपयोगित्वम् । विहितकर्ममध्ये कृतं ह्यनिष्टं कर्म विहितकर्मणि वैगुण्यं संपादयति । कालान्तरे क्रियमाणं चानिष्टं कर्म विहितकर्मफलप्राप्तिं प्रतिबध्नाति । स चाप्राप्तमिति । अग्निहोत्रं जुहुयादित्येवं विधिरूपो यो वेदभागः स यदि न स्यात्तर्हि अग्निहोत्रहोमरूपोऽर्थो वचनान्तरेण न प्राप्नोति । तादृशवचनान्तरानुपलम्भात् । नापि प्रमाणान्तरेण प्राप्नोति । तादृशप्रत्यक्षादिप्रमाणान्तरासंभवात् । तथा चाप्राप्तो योऽग्निहोत्रहोमरूपोऽर्थस्तस्य विधायकमग्निहोत्रं जुहुयात्स्वर्गकाम इत्येव वाक्यम् । अत्राग्निहोत्ररूपस्यार्थस्य स्वर्गः प्रयोजनम् । अतः प्रयोजनवानयमर्थः । अग्निहोत्रं जुहुयात्स्वर्गकाम इत्यस्यायमर्थः । अग्निहोत्रशब्दः कर्मनामधेयम् । तस्य च हुधात्वर्थे होमे अभेदेनान्वयः । हुधात्वर्थस्य होमरूपस्य कर्मणः प्रत्ययार्थभावनायां करणत्वेनान्वयः । अग्निहोत्रमिति द्वितीया तु तृतीयार्था । तेन नाभेदान्वयानुपपत्तिः । प्रत्ययार्थभावनायां स्वर्गस्य कर्मत्वेनान्वयः । अग्निहोत्रहोमेन स्वर्गमिष्टं भावयेदिति वाक्यार्थः । उद्देश्यविधेयभावो हि वाक्यार्थः। प्रकृते स्वर्गमुद्दिश्याप्राप्तो होमो विधीयते । दध्ना जुहुयादिति । अत्र होमस्य वचनान्तरेण प्राप्तत्वान्न तस्य विधानम् । किंतु प्राप्तं होममुद्दिश्य तत्राप्राप्तो दधिरूपो गुणोऽनेन वाक्येन विधीयते । अत एवायं गुणविधिरिति गीयते । अत्र धात्वर्थहोमस्योद्देश्यत्वादेव तस्य प्रत्ययार्थभावनायां साध्यत्वेनान्वयः । दध्ना होमं संपादयेदिति । यत्र तूभयमिति । सोमेन यजेतेत्यत्र किं विधीयते । न वचनान्तरेण यागः प्राप्यते नापि तत्र यागे गृह्यमाणः सोमरूपो गुणः । याग एव न प्राप्यते चेद्दूर एव तादृशयागोद्देशेन सोमरूपगुणप्राप्तिः । अतोऽनेन सोमेन यजेतेति वचनेन यागोऽपि विधीयते तत्र गृह्यमाणत्वेन सोमरूपो गुणोऽपि विधीयत इत्यवश्यं स्वीकार्यम् । उद्देश्यविधेयभावरूपे च स्वर्गाद्युद्देश्यं सोमविशिष्टो यागो विधेयः न च सोमशब्दस्य सोमविशिष्ट इत्यर्थः कथमिति वाच्यम् । सोमशब्दे लक्षणया तादृशार्थोपपत्तेः । लक्षणामजानानः शङ्कते—

सोमयागयोरप्राप्तत्वात्सोमविशिष्टयागविधानम्, 'सोमवता यागेनेष्टं भावयेत्' इति। न चोभयविधाने वाक्यभेदः। विशिष्टस्यैकत्वात्। विशिष्टविधौ च मत्वर्थलक्षणा। यथा सोमपदेन मत्वर्थो लक्ष्यते सोमवतेति। न हि मत्वर्थलक्षणां विना सोमस्यान्वयः संभवति। न तावत्सामानाधिकरण्येनान्वयः। तथा सति प्रत्यक्षविरोधापत्तेः। नहि सोमो यागो भवितुमर्हति। यदि तावत्सोमयागयो-

न चोभयविधान इति। वाक्यभेदो वाक्यार्थभेदः। वाक्यार्थश्चोद्देश्यविधेयभावः प्रकृते चैकस्मिन्वाक्यार्थे स्वर्गादिफलमुद्दिश्य यागो विधेयः। तादृशं विहितं यागमुद्दिश्य सोमरूपो गुणश्च विधेयः स्यादित्युद्देश्यविधेयभावद्वयेन वाक्यभेदः स्यादिति शङ्काशयः। विशिष्टस्येति। स्वर्गादिफलमुद्दिश्य सोमविशिष्टो यागो विधीयते। एवं च विधेयार्थस्य गुरुत्वेपि उद्देश्यविधेयभाव एक एवेति न वाक्यभेदः। मत्वर्थ इति। यथा नीलो घट इत्यत्र गुणवाचिनो नीलशब्दस्य नीलगुणविशिष्ट इत्यर्थो लक्षणया गृह्यते तद्वत्। ननु वाक्यभेदभिया वाक्यार्थमेकं कर्तुं ते प्रवृत्तिः। तत्र च लक्षणादोष आश्रीयते। किमेवमेकस्माद्गर्तात्पादमुत्क्षिप्य गर्तान्तरे प्रक्षेप इति चेन्न। वाक्यभेददोषापेक्षया लक्षणादोषस्य लघीयस्त्वात्। वाक्यभेदो वाक्यदोषः। लक्षणा तु पददोषः। नान्तरीयकतया चावश्यं कस्मिंश्चिद्दोष आश्रयितव्ये लघीयान्दोष आश्रयितव्यो भवति न गरीयान्। अथ लक्षणामगृहीत्वा प्रकारान्तरेण वाक्यार्थयोजना स्यादित्याक्षिप्य परिहारः कर्तव्यः। तत्र वाक्यार्थयोजनायां त्रयः पक्षाः समुद्भवन्ति। तत्र सोमयागयोरन्वय उतानन्वय एवेति पक्षद्वयम्। अन्वयपक्षेपि सोन्वयः किं सामानाधिकरण्येनाथवा वैयधिकरण्येनेति पक्षद्वयम्। तत्र सामानाधिकरण्येनान्वयपक्षं परिहरति–न तावदिति। सामानाधिकरण्यं चैकार्थबोधजनकत्वम्। तच्चात्र न संभवति। सोमपदार्थो द्रव्यम्। यागपदार्थश्च क्रिया। तयोर्भेदश्च प्रत्यक्षेणोपलभ्यत इति कथं तयोरभेदेनान्वयः स्यात्। अथ क्रमप्राप्तो वैयधिकरण्येनान्वयपक्षः खण्डनीयः। परं तु सूचीकटाहन्यायेनादावनन्वयपक्षमुत्थाप्य परिहरति–यदि तावदिति। सोमयागयोर्मिथोनन्वय एव। किं तु द्वयोरपि पार्थक्येन प्रत्ययवाच्यभावनायां करणत्वेनान्वयः। सोमेन यागेन चेष्टं स्वर्गादिफलं संपादयेदिति वाक्यार्थः। अत्रोद्देश्यं स्वर्गादीष्टं फलम्। तदुद्दिश्य यागः सोमश्चानेन विधीयते इति विधेयद्वयम्। पार्थक्येन विधेयद्वयाङ्गीकारे च वाक्यभेदो दुरुद्धर एव। नह्युद्देश्यैक्यमात्रेण वाक्यभेददोषो निवर्तयितुं शक्यः। मिथोऽसंबद्धाभ्यां द्वाभ्यां सह तृतीय एकेन संबन्धेन संबद्धो न भवति। लोकेपि मिथोऽसंबद्धं घटद्वयमेकया रज्ज्वा नाकर्षयितुं शक्यं भवति। वाक्यभेदे च संबन्धभेदस्तन्त्रम्। तुल्यन्यायाद्विधेयैक्येपि

रैक्यरूपेण भावनायां करणत्वेनैवान्वयः 'सोमेन यागेनेष्टं भावयेत्' इति, तत उभयविधाने वाक्यभेदः। सोमस्य यागवत्फलभावनाकरणत्वेन प्राधान्यापातश्च। यागार्थत्वानुपपत्तिश्च। यागे द्रव्यानुपपत्तिश्च। प्रत्ययवाच्यभावनायाः समानपदोपात्तेन यागेन करणाकाङ्क्षाया निवृत्तत्वेन भिन्नपदोपात्तस्य सोमस्य करणत्वेनान्वयानुपपत्तिश्च स्यात्।

---

मिथोऽसंबद्धमुद्देश्यद्वयं चेद्वाक्यभेदो न निवार्यते। एवं च सोमयागयोरनन्वयपक्षे वाक्यभेद एको दोषस्तदवस्थः। द्वितीयो दोषश्च यदि प्रत्ययवाच्यफलभावनायां यागसोमयोर्द्वयोरपि तुल्यं करणत्वं तर्हि स्वर्गादिफलोत्पादने यागस्येव सोमस्यापि स्वातन्त्र्येण प्राधान्यं स्यात्। तथा सति यागजन्यमिव सोमजन्यमप्यपूर्वान्तरमङ्गीकरणीयं स्यादिति गौरवम्। किंच सिद्धान्ते सोमादिद्रव्यं यजनादिक्रियाद्वारा स्वर्गादिफलसाधनं भवति। तथा च सोमद्रव्यस्य यागार्थत्वं यदिष्यते तदिदानीं न स्यात्। भवतु तथेति चेत् किंचिदन्यत्क्रियान्तरं कल्पयितव्यं स्यात्। करणं हि न स्वरूपेण करणं भवति किं तु क्रियाविशेषद्वारैव। परशुरुद्यमननिपतनादिक्रियाद्वारैव काष्ठद्वैधीभावकरणं भवति। तथा च फलापूर्वोत्पादकक्रियान्तरकल्पने गौरवमिति तृतीयो दोषः। किंचैवं यागे सोमस्य करणत्वेनान्वयाभावाद्यागे किं साधनमित्येवं साधनाकाङ्क्षाया अनुपरमाद्यागे द्रव्यानुपपत्तिश्चतुर्थो दोषः। अपरं च स्वर्गादिफलं केन संपादनीयमित्येवं या प्रत्ययवाच्यायाः फलभावनायाः साधनाकाङ्क्षा सा शीघ्रोपस्थितिकेन यागरूपार्थेन निवृत्ता भवति। यागरूपार्थो हि तादृशप्रत्ययप्रकृतिभूतधातूपस्थाप्य इति समानपदोपात्तो भवति। समानमेकं यजेतेति पदं तेनैकेनैव पदेन प्रकृत्यंशेन यागरूपोऽर्थः प्रतिपादितो भवति प्रत्ययांशेन च तेनैव पदेन फलभावना प्रतिपादिता भवति। अतः शीघ्रोपस्थितिकेन यागरूपेणार्थेन साधनाकाङ्क्षाया निवृत्तत्वात्पुनस्तस्या अनुत्थानाच्च सोमेनेति भिन्नपदोपात्तस्य सोमस्य प्रत्ययवाच्यफलभावनायां करणत्वेनान्वयः स्यादिति पञ्चमो दोषः। नन्विष्टं फलं केन साधनेन संपादनीयमित्येवं प्रत्ययवाच्यभावनायाः साधनाकाङ्क्षायामाकाङ्क्षानिवृत्त्यर्थं साधनत्वेनान्वययोग्यः कोऽर्थ इत्येवं समालोचने यजेतेत्यत्र साधनत्वार्थबोधकतृतीयाविभक्त्याद्यदर्शनेन यजधातूपात्ते यागे तादृशान्वययोग्यताया अज्ञानात्समानपदोपात्तं प्रथमत उपस्थितमपि तं यागं परित्यज्य भिन्नपदोपात्तोऽपि सोमः सोमेनेति तृतीयाप्रदर्शितसाधनत्वान्वययोग्यताकः फलभावनायां साधनत्वेनान्वेतुमर्हतीति चेन्मैवम्। यद्यपि यागस्य साधनत्वेनान्वये योग्यताप्रदर्शकं किंचिन्न दृश्यते तथापि तत्र तादृशान्वयायोग्यताप्रदर्शकमपि किंचिन्न दृश्यते। प्रथमो-

यदि च वैयधिकरण्येनान्वयः, तत्र न तावत् 'यागेन सोमम्' इत्यन्वयः। समानपदोपात्तत्वात्प्रत्ययवाच्यफलभावनायां करणत्वेनान्वितस्य यागस्य सोमकर्मकभावनान्वयानुपपत्तेः। यागस्य सोमार्थत्वापत्तेश्च। न चेष्टापत्तिः। अदृष्टद्वयापत्तेः। न हि यागस्य सोमार्थत्वं दृष्टद्वारेण संभवति।

परिस्थितार्थपरित्यागे बीजं हि बाधकसद्भावः। बाधकं त्वयोग्यताज्ञानं न तु योग्यताज्ञानाभावमात्रम्। अतः साधूक्तं यागेन करणाकाङ्क्षा निवृत्तेति। अथावशिष्टः सोमयागयोर्वैयधिकरण्येनान्वय इत्येष पक्षः खण्डनीयः। वैयधिकरण्येनान्वयश्च साध्यसाधनभावेन तयोः संबन्धः। तत्र च कल्पद्वयम्। सोमः साध्यं यागः साधनमित्येकः। एतद्वैपरीत्येन यागः साध्यं सोमः साधनमित्यपरः। तत्राद्यमनूद्य परिहरति-यदि चेति। यागेन सोममिति। अत्र सोमस्य यागः साधनमिति वक्तव्यम्। तत्र पूर्वसिद्धस्य सोमस्य यागः साधनं न संभवति। किंचात्र तद्भाव्यनिर्वर्तकत्वेन साधनत्वमित्युक्तमेव। सोमभाव्यनिर्वर्तकत्वं च यागस्य सोमसंस्कारद्वारा वक्तव्यम्। तथा च सोमभाव्यं यदिष्टं स्वर्गादिफलं तस्य सोमसंस्कारद्वारा निर्वर्तको याग इति फलति। संस्कारश्च गुणाधानम्। गुणश्च दृष्टः कश्चन तत्र न संभवतीत्यदृष्टरूपो वक्तव्यः। एतादृशो हि वैयधिकरण्यान्वयपक्षस्य प्रथमः कल्पः पर्यवसन्नः। अस्मिन्कल्पे दोषत्रयम्। तत्राद्यमाह-समानपदेति। स्वर्गादीष्टफलोत्पादनयोग्यः संस्कारेण जायमानो यः सोमस्यादृष्टः स्वरूपविशेषस्तादृशस्वरूपसंपादनं सोमकर्मकभावना। तच्च यागेन संपादनीयमित्यतो यागस्य तत्र करणत्वेनान्वयो वक्तव्यः। स च न संभवति। यजधातूपात्तस्य प्रकृत्यर्थस्य यागस्य समानपदोपात्तत्वात्प्रत्ययार्थफलभावनायामेवान्वयो भवेत्। शीघ्रोपस्थितिकत्वात्। वृत्ते च तत्र तस्यान्वये कथमन्यत्र तस्यान्वयः स्यादिति भावः। द्वितीयं दोषमाह-यागस्येत्यादिना संभवतीत्यन्तेन। धात्वर्थस्य यागस्य प्रत्ययवाच्यफलभावनायां करणत्वेनान्वयमुक्तरीत्या समुचितमपि परित्यज्य सोमकर्मकभावनायां करणत्वेनान्वये स्वीक्रियमाणे यागः सोमार्थ इति स्यात्। सोमार्थत्वं नाम सोमस्यादृष्टस्वरूपविशेषप्रतिपत्त्यर्थत्वम्। सोमे यागेन जायमानस्य दृष्टस्य कस्यचित्स्वरूपविशेषस्यादर्शनात्। अदृष्टस्वरूपविशेषप्रतिपत्तेरुपयोगश्च तादृशात्सोमात्स्वर्गादीष्टफलनिष्पत्तिः। यागस्य सोमार्थत्वाङ्गीकारेण यागात्स्वर्गादिफलनिष्पत्तेरिदानीं वक्तुमशक्यत्वात्। न च यागे सोमस्य दाह एवेति दृष्ट एव तत्र स्वरूपविकार इति किमर्थमदृष्टविशेषाङ्गीकार इति वाच्यम्। तादृशात्सोमात्स्वर्गादिफलनिष्पत्तेरसंभवात्। न चादृष्टद्वारा स्वर्गादिफलनिष्पत्तिरिति वाच्यम्। स्वर्गादिफलजनकमदृष्टं किं यागजन्यं सोमजन्यं वा। यागजन्यं चेद्यागस्य करणत्वेन सोमेन्वय इति स्वीकृतः

व्रीहिष्ववघातेनेव यागेन सोमे कस्यचिद्दृष्टस्याजननात्। अतस्तेन तावत् सोमे किंचिददृष्टं जननीयम्, प्रोक्षणेनेव व्रीहिषु। तथा यागस्य सोमार्थत्वे फल-भावनायां सोमस्य करणत्वेनान्वयो वक्तव्यः। भावनाकरणत्वं च भावनाभाव्य-निर्वर्तकत्वेनेत्युक्तम्। न च सोमोऽदृष्टमन्तरेण फलं जनयितुं समर्थः। 'ग्रहैर्जुहोति' इति वाक्यविहितहोमेन तस्य भस्मीभावात्। अतोऽदृष्टद्वयापातान्न यागस्य सोमार्थत्वमिति न 'यागेन सोमं भावयेत्' इत्यन्वयः संभवति। करणत्वेनोपस्थितस्य सोमस्य साध्यत्वेनान्वयानुपपत्तेश्च।

अथ 'सोमेन यागं भावयेत्' इत्यन्वयः,

---

पक्षस्त्यक्तः स्यात्। सोमजन्यं चेत्केवलेन सोमेन तज्जन्यते यागसंस्कृतेन वा। केवलेन चेत्तत्र स्वीकृतेन यागस्यान्वयेन किं कृतं स्यात्। यागेनुपयुक्त-स्यापि सोमस्य स्वर्गसाधनत्वापत्तेश्च। यागसंस्कृतेन सोमेनेति चेत्संस्कारो नाम गुणाधानम्। गुणश्च दृष्टः कश्चन न संभवतीत्यदृष्टरूपः स्वीकार्यः। तथा चादृष्टद्वयापत्तिर्दुष्परिहरा। यागजन्यादृष्टविशिष्टः सोमोऽदृष्टान्तरमुत्पाद्य तद्-द्वारा स्वयं दग्धोपि स्वर्गादिफलसाधनं भवतीति तादृशादृष्टविशेषविशिष्टा-त्सोमाज्जायमाना स्वर्गादिफलनिष्पत्तिश्च पुनरन्यादृष्टद्वारेणैव वक्तव्या। दृष्टस्य कस्यचिद्द्वारस्य तत्रादर्शनात्। तथा चादृष्टद्वयापत्तिर्दोष इति भावः। व्रीहिष्विति। यथावघातस्य तुषनिवृत्तिरूपं दृष्टं प्रयोजनं व्रीहिषूपलभ्यते न तथात्र यागस्य दृष्टं किंचित्फलं सोम उपलभ्यते। अतः प्रोक्षणेन यथा व्रीहि-ष्वदृष्टं किंचिदुत्पद्यत इति स्वीक्रियते तथात्र सोमे यागेनादृष्टं किंचिदुत्पद्यत इत्यङ्गीकर्तव्यं स्यादिति भावः। ग्रहैरिति। ग्रहैः पात्रविशेषैः सोमं जुहोतीति तदर्थः। तृतीयं दोषमाह–करणत्वेनेति। सोमपदोत्तरतृतीयया स्वप्रकृत्यर्थस्य सोमपदार्थस्य करणत्वेनोपस्थितिरिति तस्य यागकरणकभावनायां कर्मत्वेना-न्वयो विरुध्यते। अथ सोमयागयोर्वैयधिकरण्येनान्वये यागः साध्यं सोमः साधनमिति द्वितीयं कल्पमुत्थाप्य परिहरति–अथ सोमेनेति। भावना हि भावनात्वेन सामान्यरूपेण प्रत्ययवाच्या न फलभावनात्वेन। ततश्च यथा स्वर्गादिफलस्य कर्मत्वेन भावनायामन्वयस्तथा यागस्यापि कर्मत्वेन भावना-यामन्वयः। एवं भावनायां साध्यत्वेन फलयागयोर्द्वयोरन्वयः। तत्र फल-भावनायां करणत्वेन यागस्यान्वयः। यागभावनायां च करणत्वेन सोमस्या-न्वयः। सोमेन यागं भावयेत्तेन च यागेन स्वर्गादिफलं भावयेदिति वाक्यार्थः पर्यवसन्नः। अस्मिंश्च द्वितीये कल्पे न प्रथमकल्पोक्तास्त्रयो दोषाः संभवन्ति।

तत्र यद्यपि सोमस्य करणत्वेन यागार्थत्वाद्यागनिर्वृत्तिर्दृष्टमेव प्रयोजनं लभ्यते इति नादृष्टद्वयापत्तिः। नापि करणत्वेनोपस्थितस्य सोमस्य साध्यत्वान्वयानुपपत्तिः। करणत्वेनैवान्वयात्। तथाऽप्यप्राप्तत्वाद्भावनाकरणत्वेनान्वितस्य यागस्य साध्यत्वेनान्वयानुपपत्तिस्तदवस्थैव।

---

समानपदोपात्तप्रत्ययवाच्यफलभावनायां करणत्वेन यागान्वयस्यापरित्यागान्न प्रथमो दोषः। नापि द्वितीयः। इदानीं न यागः सोमार्थः किंतु सोमो यागार्थः। यागश्च हवनीयद्रव्यसापेक्ष इति तादृशद्रव्यसंपादनेन सोमस्य यागस्वरूपनिष्पत्तिर्दृष्टमेव प्रयोजनमिति न सोमजन्यादृष्टकल्पनाया आवश्यकत्वम्। तदाह–तत्र यद्यपीति। नापि तृतीयो दोष इत्याह–नापि करणत्वेनेति। सोमेनेति तृतीयाप्रतिपादितकरणत्वानुगुण्येनैव सोमस्य यागकर्मकभावनायां करणत्वेनान्वयस्वीकारादिति भावः। एवं प्रथमकल्पोक्तदोषाभावेप्यस्मिन्कल्पे दोषान्तरमस्त्येवेत्याह–तथाप्यप्राप्तत्वादिति। अयं भावः। एकस्य यजधात्वर्थस्य यागस्य प्रत्ययवाच्यफलभावनायां करणत्वेन कर्मत्वेन चेति संबन्धद्वैविध्येनान्वये प्रमाणं नास्ति। वाक्यभेदप्रसङ्गात्। तथा च भावनायां करणत्वेनान्वये वृत्ते कर्मतया तत्र यागस्यान्वय एव नास्ति। दूरे यागकर्मकभावनायां सोमस्य करणत्वेनान्वयः। ननु भावनायाः प्रथमं साध्याकाङ्क्षा ततः साधनाकाङ्क्षेति क्रमनियमः प्राक्प्रदर्शितः। तदनुसारेणात्र यागस्य भावनायां प्रथमतः साध्यत्वेनान्वये यागकर्मकभावनायां सोमस्य करणत्वेनान्वये न काचिदनुपपत्तिरितिचेत्–उच्यते। फलभावनायागभावनयोर्मध्ये यदि यागभावनायाः प्रथमत उपस्थितिः स्यात्तर्हि भवेत्तत्र साधनाकाङ्क्षायां सोमस्य करणत्वेनान्वयः। न त्वेतदेवम्। फलभावनाया यागभावनापेक्षया प्रथममुपस्थितेः। फलार्थिनो हि यागार्थिनो भवन्ति न तु यागार्थिनां फलार्थित्वम्। स्वर्गादिसुखेच्छया हि यागे प्रवर्तन्ते लोका न तु यागेच्छया सुखमीप्सन्ते। ततश्च भावनाया यद्यपि प्रथमतः साध्याकाङ्क्षोदेति तथापि तत्र साध्यत्वेनान्वयो न यागस्य। किं तु सुखविशेषरूपस्य स्वर्गस्यैव। यागो हि न स्वरूपेण सुखम्। यद्यपि सुखसाधनस्यापि साध्यत्वेनान्वयः संभवति तथापि यागस्य सुखसाधनत्वेनावगमोत्तरं हि तत्संभवः। तदवगमश्च स्वर्गस्य भावनायां साध्यत्वेनान्वये तादृशस्वर्गकर्मकभावनायां यागस्य करणत्वेनान्वयोत्तरम्। तथा च समानपदोपात्तस्यापि लोकतः सुखत्वेन सुखसाधनत्वेन वा यागस्याप्राप्तत्वान्न प्रथमतो यागस्य भावनायां साध्यत्वेनान्वयः किं तु स्वर्गस्यैव। एवं साध्याकाङ्क्षायां निवृत्तायां साधनाकाङ्क्षोदये समानपदोपात्तो यागस्तत्र करणत्वेनान्वितो भवति। सर्वथा-

ननु यजेतेत्यत्र यागस्य न करणत्वेन नापि साध्यत्वेनोपस्थितिः। तद्वाचकतृतीयाद्यभावात्। किंतु भावनायां यागसंबन्धमात्रं प्रतीयते। यागस्य च भावनासंबन्धः करणत्वेन साध्यत्वेन च संभवति। तत्र करणत्वांशमादाय फलसंबन्धः। साध्यत्वांशमादाय गुणसंबन्धश्च स्यात्, इति चेत्—मैवम्। यद्यपि भावनया यागस्य संबन्धमात्रं प्रतीयते तथाऽपि करणत्वेनोपस्थिति-

---

यागस्य साध्यत्वेन भावनायामन्वयो न कथमप्युपपद्यत इति। ननु यजेतेति। प्रत्ययवाच्यभावनायाः प्रथमं साध्याकाङ्क्षायां स्वर्गादिफलसंबन्धे तादृश-फलकर्मकभावनायाः साधनाकाङ्क्षायां तादृशाकाङ्क्षाशान्त्यर्थं यो यागस्य भावनायां संबन्धो जायते स न करणत्वेन विशेषरूपेण। करणबोधकतृतीयाद्य-दर्शनात्। किंतु संबन्धसामान्यरूपेण। सामान्ये चान्तर्गभितमत्र विशेषद्वयम्। करणत्वं साध्यत्वं च। तत्र पूर्वोपस्थिताकाङ्क्षा करणत्वांशगर्भितेन सामान्य-संबन्धेन पूरणीया। साध्यत्वांशगर्भितेन तेनैव सामान्यसंबन्धेन संबद्धायां यागभावनायां च सोमरूपगुणस्य करणत्वेन संबन्धः स्यादित्याशयः। परिहरति–मैवमिति। यद्यपीति। फलभावनायाः साधनाकाङ्क्षायां तादृशा-काङ्क्षाशान्तये हि यागस्य तत्र संबन्धो वाच्यः। स च संबन्ध आकाङ्क्षा-नुगुणश्चेत्तस्मादाकाङ्क्षाशान्तिर्भवेन्नान्यथा। आकाङ्क्षा च साधनत्वेन विशेषरूपेणेति स संबन्धोपि विशेषरूपेणैव वक्तव्यो भवति। यद्यपि संबन्धविशेषप्रदर्शिका तृतीया न दृश्यते तथापि न क्षतिः। वृत्त्यनुप-स्थितस्यापि संबन्धविशेषस्य विशेषरूपेण शाब्दे बोधे भानाभ्युप-गमात्। प्रकारतया विशेष्यतया वा बोधे वृत्त्युपस्थितत्वं तन्त्रं न तु संसर्गत्वेन बोधे। एवं चाकाङ्क्षापरिपूरकः संबन्धः साधनतारूपो विशेष-संबन्ध एवेति सिद्धम्। तत्र च साध्यत्वाख्यः संबन्धविशेषो नान्तर्भवति। प्राणिषु हि पशुरन्तर्भवति न तु प्राणिविशेषेषु पक्षिषु। विशेषस्य सामान्येन सहाविरोधेपि विशेषस्य विशेषान्तरेण सह विरोधस्य विद्यमानत्वात्। विरोधश्चात्र सहानवस्थायित्वम्। नहि पशुत्वं पक्षित्वं च द्वावेतौ धर्मावेकत्राव-तिष्ठेते। प्रकृते च साध्यत्वं साधनत्वं चेत्येतौ द्वौ धर्मावपि नैकत्र यागे समावि-शतः। तथा चाकाङ्क्षापरिपूरके यागभावनयोः संबन्ध एव यागस्य साध्यत्वेन संबन्धोपि भावनायां जात एवेति वक्तुं न शक्यते। अतो यागस्य भावनायां साधनत्वेन संबन्धवद्यागस्य भावनायां साध्यत्वेनापि संबन्ध इत्येवं संबन्ध-द्वयं प्रतिपादनीयं भवति। तच्च संबन्धद्वयमाकाङ्क्षापरिपूरणकाल एव युग-पत्तन्त्रेण भवतीत्युच्यतेथवा क्रमेण यागस्य भावनायां पूर्वमाकाङ्क्षापरिपूरकः साधनत्वेन संबन्धस्ततः पुनर्यागस्य भावनायां साध्यत्वेनान्वय इति। तन्त्रेण चेद्विरुद्धत्रिकद्वयापत्तिः। क्रमेण चेद्वाक्यभेदः। का चेयं विरुद्धत्रिकद्वयापत्तिः।

दशायां न साध्यत्वेनोपस्थितिः संभवति, विरोधात् । विरुद्धत्रिकद्वयापत्तेश्च । तदवश्यं 'यागेन स्वर्गं भावयेत्' इति करणत्वेनान्वये सति पश्चात् 'सोमेन यागं भावयेत्' इति साध्यत्वेनान्वयो वक्तव्यः । ततश्च वाक्यभेदः । न च प्रत्ययाभिहितभावनास्वरूपे यागस्वरूपमात्रमन्वेतीति वक्तुं युक्तम् । कार-

---

उच्यते । विरुद्धं यत्त्रिकद्वयं तस्यापत्तिः प्राप्तिः उद्देश्यत्वमनुवाद्यत्वं मुख्यत्वं चेति त्रयाणां धर्माणामेकं त्रिकम् । उपादेयत्वं विधेयत्वं गुणत्वं चेति त्रयाणां धर्माणामपरं त्रिकम् । एतत्त्रिकद्वयं मिथः क्रमेण विरुद्धं भवति । यजेतेत्यत्र प्रत्ययवाच्यभावनायाः साध्यं स्वर्गादिफलम् । साधनं यागः । तत्राद्यमुद्दे-श्यत्वादित्रिकं साध्यभूतस्वर्गादिफलनिष्ठम् । द्वितीयमुपादेयत्वादित्रिकं साधनी-भूतयागादिनिष्ठम् । स्वर्गादिफलमुद्दिश्य याग उपादीयते । स्वर्गादिफलमनूद्य यागो विधीयते । यागस्य स्वर्गार्थत्वाद्यागापेक्षया स्वर्गो मुख्यः । स्वर्गसाधन-त्वाद्यागो गुणः । न चोद्देश्यत्वमनुवाद्यत्वं चैकमेव । तथोपादेयत्वं विधेयत्वं चैकमेवेति वाच्यम् । उद्देश्यत्वं नाम मानसापेक्षाविषयत्वम् । एतन्मनउपाधि-कम् । अनुवाद्यत्वं च ज्ञातस्य कथनम् । एतच्च शब्दोपाधिकम् । तथोपादेयत्वं नामानुष्ठीयमानत्वम् । एतच्छरीरोपाधिकम् । विधेयत्वं चाज्ञातस्यानुष्ठेयत्व-कथनम् । एतच्च शब्दोपाधिकम् । अत्र चोद्देश्यत्वोपादेयत्वयोर्विरोधः । यद्यदोद्देश्यं तत्तदोपादेयं कथमपि न भवति । यस्य च यदापेक्षा मानसी तत्त-देव कथं शरीरेणानुष्ठातुं शक्यं भवेत् । तदर्थमन्यत्किमप्यनुष्ठातुं तदानीं शक्यं भवेन्न तु तदेव । एवमनुवाद्यत्वविधेयत्वयोर्विरोधः । किंचिदनूद्यान्यत्किंचिद्वि-धीयते नतु यदनूद्यते तदेव तदानीं विधीयते । एवं मुख्यत्वं गुणत्वं चेति मिथो विरुद्धम् । यो मुख्यः स न तदानीमेव गुणभूतो भवति । प्रकृते सोमेन यजेतेत्यत्र यागस्य साधनत्वेन साध्यत्वेन चेति प्रकारद्वयेन प्रत्ययवाच्य-भावनायां युगपत्तन्त्रेण संबन्धाङ्गीकारे साधनत्वमूलका उपादेयत्वादय-स्त्रयो धर्मा यागेऽङ्गीकर्तव्याः । साध्यत्वाच्च तदानीमेव तत्रैव च याग उद्देश्यत्वादयस्त्रयो धर्माः प्राप्नुवन्ति । किं तूपादेयत्वादिभिः साकं विरोधा-दुद्देश्यत्वादयस्त्रयो धर्मास्तत्र तदानीमेव नाङ्गीकर्तुं शक्यन्ते । अतोऽत्र यागस्य साधनत्वेन साध्यत्वेन चेति प्रकारद्वयेन भावनायां युगपत्तन्त्रेण संबन्धो दुर्वच इति । न च प्रत्ययेति । धात्वर्थस्य यागस्य भावनायां साधनत्वेन साध्य-त्वेन चेति प्रकारद्वयेन संबन्धः संभवतीत्यभ्युपेत्य तत्र यौगपद्यक्रमावाशङ्क्य परिहृतौ । इदानीं संबन्धिनो यागस्य स्वरूपं विचार्यते । भावना क्रिया । तदन्वयी यागः । तत्र क्रियान्वयितावच्छेदकं रूपं च न यागत्वम् । किंतु कर्तृ-त्वादिकारकविशेषान्यतमवत्त्वम् । तच्च योग्यताबलात्कर्तृत्वादि ग्राह्यम् ।

काणामेव क्रियान्वयात्। तत्सिद्धं सोमस्य न यागे सामानाधिकरण्येन वैयधिकरण्येन वाऽन्वयः संभवतीति।

ननु यजेतेत्यत्र प्रत्ययाभिहितभावनायाः करणाकाङ्क्षायां यथा यागः करणत्वेनान्वेति तथेतिकर्तव्यताकाङ्क्षायां सोमस्येतिकर्तव्यतात्वेन भावनायामेवा-

गामानयेत्यत्र गोपदार्थस्याभेदेन द्वितीयार्थे कर्मकारकेऽन्वयः। तस्य च द्वितीयार्थस्यानयनक्रियायामन्वयः। न तु गोपदार्थस्य केवलस्य क्रियायामन्वयः। यत्र कारकविभक्तिर्न श्रूयते यथा दध्यानयेति, तत्रापि योग्यताबलात्कर्मत्वविशिष्टस्य दधिपदार्थस्य क्रियान्वयः। न तु केवलस्य दध्नः। कर्मत्वविशिष्टदधिनिरूपितानयनक्रियेति बोधः। प्रकृते च यजेतेत्यत्र प्रत्ययवाच्यफलभावनायाः साधनाकाङ्क्षायां योग्यताबलात्साधनत्वविशिष्ट एव यागो भावनायामन्वेति,न तु यागस्वरूपमात्रम्। तथा च भावनायां यागसंबन्धमात्रं प्रतीयते (पृ. २३ प. २) इत्यादि पूर्वपक्षयुक्तं न संभवतीति भावः। कारकाणामेवेति। ननु स्तोकं पचतीत्यत्र व्यभिचारः। स्तोकपदार्थस्य कारकत्वाभावेपि क्रियान्वयदर्शनादिति चेन्न। स्तोकमिति द्वितीयोपपत्तये स्तोकपदार्थस्य कर्मकारकत्वाङ्गीकारात्। तदुक्तं शब्देन्दुशेखरे फलस्यापि व्यपदेशिवद्भावेन फलसंबन्धित्वात्कर्मत्वम्। अत एव तत्समानाधिकरणे स्तोकं पचतीत्यादौ द्वितीयासिद्धिः (श. शे. कारकप्र.) इति। अथवात्र नियमे भेदेनान्वयोभिप्रेतः। क्रियायां भेदेनान्वयो हि कारकाणामेव भवतीति। नन्वेवमपि कर्मादीनामपि संबन्धमात्रविवक्षायां षष्ठी यत्र भवति यथा ग्रामस्य गच्छति, सतां गतं, फलानां तृप्तः, मातुः स्मरतीति, तत्र व्यभिचार इति चेन्न। तादृशस्थलेऽध्याहाराङ्गीकारेण क्रियान्वयाभावात्। ग्रामस्येत्यत्र समीपमिति, सतामित्यत्र पद्धिरिति, फलानामित्यत्रास्वादनेनेति मातुरित्यत्र चरणाविति। एतादृशे यथायोग्यं तत्रतत्राध्याहार्यम्। यद्वा कारकाणामेव क्रियान्वयादित्यस्य कारकाणामेव सतां क्रियान्वयादित्यर्थः। यत्र कारकविशेषविवक्षा तत्र कर्तृत्वादिविशिष्टस्यैव क्रियान्वयो भवति न तु तत्र केवलस्य। तेन ग्रामस्य गच्छतीत्यादौ कर्मत्वाद्यविवक्षास्थले नास्य नियमस्य संचारः। कारकाणामेवेत्येवकारेण कारकविशेषविवक्षास्थले केवलस्य तत्तत्पदार्थस्य क्रियायामन्वयो व्यावर्त्यते। तेन यागस्वरूपमात्रस्य न भावनायामन्वयः किं तु साधनत्वविशिष्टस्यैव यागस्येति।

अथ सोमेन यजेतेत्यत्र सोमेनेत्यस्य मत्वर्थलक्षणामसहमानः पुनः प्रकारान्तरेणाशङ्कते- ननु यजेतेति। पूर्वं यदि तावत् (पृ. १८ प. ५) इत्यादिना अनुपपत्तिश्च स्यात् (पृ. १९ प. ५) इत्यन्तेन ग्रन्थेन सोमयागयोरनन्वयपक्षः खण्डितः। किं तु तत्र सोमेनेति तृतीयाश्रुत्या प्रत्ययवाच्यफलभावनायां

न्वयोऽस्तु कृतं मत्वर्थलक्षणया इति चेत्–न। सोमेनेति तृतीयया करणत्ववाचिन्या सोमस्येतिकर्तव्यतात्वानभिधानात्। तत्र यदीतिकर्तव्यतात्वं लक्षणयोच्यते ततो वरं सोमपद एव प्रकृतिभूते मत्वर्थलक्षणा। 'गुणे त्वन्याय्यकल्पना'( जै. सू.

---

सोमस्य करणत्वेनान्वय इत्यभिप्रायेण तत्पक्षोत्थापनं कृतम्। अधुना तु सोमयागयोरनन्वय एव। किं तु सोमस्य प्रत्ययवाच्यफलभावनायामिति कर्तव्यतात्वेनान्वयो गृह्यत इत्याशयः। कृतमिति। कृतमिति निष्फलेऽव्ययमिति विश्वलोचनकोशः। मत्वर्थलक्षणा निष्फलेत्यर्थः। निषेधार्थे वा। मास्तु मत्वर्थलक्षणेत्यर्थः। यथा शाकुन्तले दुष्यन्तोक्तौ अथवा कृतं संदेहेनेत्यत्र। कृतमित्यस्य स्थाने किमिति पुस्तकान्तरे पाठः। तृतीययेति। प्रत्ययवाच्यफलभावनाया इतिकर्तव्यताकाङ्क्षायां सोमस्य तत्रेतिकर्तव्यतात्वेनान्वयो वक्तव्यः। परंतु यस्य येन रूपेणान्वयः कर्तव्यस्तस्य तादृशान्वययोग्यतापेक्षिता। योग्यताच द्विविधा शाब्दी आर्थी च। शब्दात्प्रतीयमाना शाब्दी। अर्थस्वरूपवशसंपन्नार्थी। अग्निना सिञ्चतीत्यत्र सेकक्रियायामग्नेः करणत्वेनान्वयेऽग्निनेति तृतीयादर्शनाच्छाब्दी योग्यता प्रतीयते। अग्नेर्द्रवद्द्रव्यस्वरूपत्वाभावादार्थी योग्यता नास्ति। जलं सिञ्चतीत्यत्र तृतीयाया अदर्शनाच्छाब्दी योग्यता नास्ति। आर्थी तु विद्यते। अग्निः सिञ्चतीत्यत्र द्विविधापि नास्ति। जलेन सिञ्चतीत्यत्र द्विविधापि योग्यता वर्तते। अन्वये च द्विविधापि योग्यतापेक्ष्यते। क्वचिच्छाब्दयोग्यताया अदर्शनेपि अन्वयो भवति परंतु तत्र तादृशान्वयायोग्यताप्रदर्शकः कश्चन शब्दविशेषो यदि न स्यात्। यथा यजेतेत्यत्र यागस्य साधनत्वेन भावनान्वये। प्रकृते तु प्रत्ययवाच्यफलभावनायां सोमस्येतिकर्तव्यतात्वेनान्वये द्विविधापि योग्यता न दृश्यते। इतिकर्तव्यतात्वेनान्वये शाब्दी योग्यता चेत्येवमादिशब्दैः प्रदर्श्यते। तादृशश्च शब्दोत्र नास्त्येव। प्रत्युत तादृशान्वयायोग्यताप्रदर्शिका सोमेनेति तृतीयाविभक्तिरत्र दृश्यते। सा हि करणत्वबोधिका न कर्तव्यविशेषोयमिति बोधयति। अथ सोमेनेति तृतीयाविभक्तिर्जहल्लक्षणया स्वार्थं करणत्वं परित्यज्येतिकर्तव्यतात्वरूपमर्थं प्रतिपादयतीत्युच्यते तर्हि सोमस्य फलभावनायामितिकर्तव्यतात्वेनान्वये शाब्दी योग्यता कथंचित्संपादिता भवेत्। किंतु सोमपदे मत्वर्थलक्षणां गौरवभयात्परित्यजता भवता तत्रैव तृतीयाविभक्तौ लक्षणाश्रीयत इति कोयं प्रयासः। अथ नान्तरीयकतया क्वचिल्लक्षणावश्यमाश्रयणीयेति चेद्गुणताप्रधाने सोम एव सा भवतु नतु प्रत्ययार्थे। प्रकृतिप्रत्ययार्थयोर्मध्ये प्रत्ययार्थस्य प्राधान्यमिति नियमेन प्रत्ययार्थस्य प्रकृत्यर्थापेक्षया प्राधान्यात्। अप्रधान एव लक्षणाश्रयणीयेत्यत्र प्रमाणमाह–गुणे त्विति। गुणशब्देनाप्रधानमुच्यते। न्यायादनपेतं न्याय्यम्। 'धर्मपथ्यर्थन्यायादनपेते'

१।३।१५) इति न्यायात् । अथ 'वेदो वा प्रायदर्शनात्' (जै. सू. ३।३।२)

---

(पा. सू. ४।४।९२) इति पाणिनिसूत्रेण न्यायशब्दादनपेतमित्यर्थे यत्प्रत्ययः। तुशब्द एवार्थे। अप्रधान एवान्याय्यार्थस्य कल्पनेत्यर्थः। लक्षणयान्यार्थप्रतिपादनं न्याय्यं न भवतीत्यतो न तत्कल्पना कर्तव्या। यदि कर्तव्यतयावश्यं गले पतितैव तर्हि सा भवतु नामाप्रधान एव न तु कथमपि प्रधान इति तन्न्यायतात्पर्यम्। लोकेपि राजा तन्मित्रं चेत्येतौ द्वावपि शत्रुणा निगृहीतौ यद्यग्निसंभृतपरिखावेष्टिते क्वचित्प्रदेशे स्थापितौ तर्हि तत्र नान्तरीयकतया परिखायामेकेन देहपातः कार्योन्येन च सद्यस्तं देहं सेतुवदाश्रित्य परिखोल्लङ्घनीया भवति। यद्यपि देहपातो न न्याय्यस्तथापि अवश्यं केनचित्कर्तव्य एव। इतरथा शत्रुर्द्वावपि प्रहण्यात्। अतस्तादृशो देहपातो मित्रेण क्रियते। तं च देहं सद्यः सेतुवदाश्रित्य परिखां समुल्लङ्घ्य राज्ञा स्वार्थः साध्यते। शङ्कते–अथ वेद इति। वेदो वेति सूत्रस्यायमर्थः। प्रायशब्द उपक्रमवाची। उच्चैर्ऋचा क्रियत इत्यादिविधिषु ऋगादिशब्देन तत्तद्वेद एवाभिधीयते। त्रयो वेदा असृज्यन्त अग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद इत्युपक्रमे वेदशब्ददर्शनादिति। अयं भावः। ज्योतिष्टोमे श्रूयते। उच्चैर्ऋचा क्रियते, उपांशु यजुषा, उच्चैः साम्नेति। अत्रोच्चैर्ऋग्वेदेन क्रियत इत्येवं वेदशब्दो न प्रयुज्यते। तथाचोच्चैस्त्वमृचां धर्मो न तु ऋग्वेदस्यात्र प्रतीयते। अतो यजुर्वेदोत्पन्ना अध्वर्युणा प्रयुज्यमाना ऋचोऽप्युच्चैरेव पठितव्या इति पूर्वपक्षः। सिद्धान्तस्तूच्चैष्ट्वमृग्वेदस्यैव धर्मः। उच्चैर्ऋचा क्रियत इत्यादिविधिषु ऋग्यजुःसामशब्दा लक्षणया ऋग्वेदयजुर्वेदसामवेदार्थकाः। उपक्रमे वेदशब्ददर्शनात्। प्रजापतिरकामयत प्रजाः सृजेयेति स तपोतप्यत तस्मात्तेपानात् त्रयो देवा असृज्यन्ताग्निर्वायुरादित्यः, ते तपोतप्यन्त तेभ्यस्तेपानेभ्यस्त्रयो वेदा असृज्यन्ताग्नेर्ऋग्वेदो वायोर्यजुर्वेद आदित्यात्सामवेद इत्येवमुपक्रम्य तस्मादुच्चैर्ऋचा क्रियते उपांशु यजुषा उच्चैः साम्नेत्युपसंहृतम्। उपक्रमोपसंहारयोश्चैकवाक्यत्वं न्याय्यं भवति। ननूपसंहारानुरोधेनोपक्रमस्थऋग्वेदादिशब्दो लक्षणया ऋङ्मात्राद्यर्थको भवतु। तावताप्युपक्रमोपसंहारयोरेकवाक्यत्वोपपत्तेरिति चेन्न। लक्षणा हि जघन्या वृत्तिः। तत्र च स्वार्थातिक्रमो भवति। तत्र बीजं च विरोधज्ञानम्। विरोधज्ञानं च नोपक्रमे संभवति। अग्रिमाणामृगादिशब्दानां तदानीमनुसंधानाभावात्। उपक्रमे ऋग्वेदादिशब्दं श्रुत्वा तज्जनितसंस्कारव्याप्तमनसः पश्चादृगादिशब्दं श्रुतवत उपक्रमोपसंहारगतयोर्ऋग्वेदऋक्शब्दयोरसमानार्थत्वं विजानतो विरोधः परिस्फुरति। तथा चोपसंहार एव लक्षणा नोपक्रमे। यावद्विरोधो न संजायते तावन्न स्वार्थत्यागो युक्तः। अयमेवासंजातविरोधन्यायः। एवं चोच्चैर्ऋचा क्रियत इत्या-

इत्यधिकरणोक्तासंजातविरोधित्वन्यायेनान्त्ये प्रत्यय एव लक्षणेति चेत्, तथापि सोमस्येतिकर्तव्यतात्वेनान्वयानुपपत्तिः । सिद्धस्य वस्तुन इतिकर्तव्यतात्वाभावात्, क्रियाया एवेतिकर्तव्यतात्वात्, द्रव्यस्य केवलमङ्गत्वात् । अत एवेतिकर्तव्यतात्वाभावात् द्रव्यस्य प्रकरणादग्रहणम् । यथाहुः—

---

द्विविधेषु ऋगादिशब्दानामृग्वेदाद्यर्थकत्वाद्यजुर्वेदोत्पन्ना ऋचो नोच्चैः पठनीया इति तस्मिन्नधिकरणे प्रस्थापितम् । प्रकृते च सोमेन यजेतेत्यत्र सोमपदार्थस्य प्रत्ययार्थान्वयकाले सोमाभिन्नं यत्साधनमित्यन्वयसंभवान्न विरोधोद्भावनम् । ततस्तस्य प्रत्ययार्थस्य साधनस्य फलभावनायामन्वयो यदा चिकीर्षितस्तदा विरोधः परिस्फुरति । स चेत्थम् । फलभावनायाः साधनाकाङ्क्षा पूर्वमेवोत्थिता समानपदोपात्तयागस्यान्वयेनोपरता चाभूत् । अधुना तु तस्या इतिकर्तव्यताकाङ्क्षा समुत्पन्ना । सोमेनेति तृतीयाप्रत्ययस्तु साधनमर्थं ब्रूते । आकाङ्क्षा चैकस्य, उपस्थितिश्चान्यस्य । कथमनयोः संबन्धो घटेतेति । एवं च विरोधोद्भावनोत्तरं प्रविशन्ती लक्षणा प्रत्ययार्थ एवोचिता न तु प्रकृत्यर्थे । गुणे त्वन्याय्यकल्पनेति न्यायस्तु नेह प्रवर्तते । यत्र गुणप्रधानयोर्युगपदन्याय्यकल्पना प्राप्नोति तत्र तन्न्यायावसरो नान्यत्र । लोकेऽपि राजा तन्मित्रं चेत्येतावश्वारूढौ मृगयायां क्वचिदरण्ये स्वसैन्यात्परिभ्रष्टौ मध्याह्ने विश्रान्तौ भवतस्तदा द्वयोरप्यश्वयोर्जलप्राशनादिकार्यं मित्रेणैव क्रियते । यदा त्वेक एव राजा सैन्यात्परिभ्रष्टस्तदा तत्सर्वं कार्यं राज्ञैवानुष्ठेयं भवति । गत्यन्तराभावात् । तथा प्रकृते सोमपदे न लक्षणा किं तु प्रत्ययभाग एवेति शङ्काकारस्याशयः । यद्यप्येवं प्रत्ययस्येतिकर्तव्यतार्थे लक्षणामाश्रित्य फलभावनायां सोमस्येतिकर्तव्यतात्वेनान्वये शाब्दी योग्यता कथंचित्संपादिता तथाप्यार्थी योग्यता सोमस्य नास्त्येवेत्याह–तथापीति । इतिकर्तव्यतात्वेनान्वये आर्थी योग्यता हि क्रियाया एव न तु द्रव्यस्य गुणस्य वा । लोकेऽपि यदा काचिदितिकर्तव्यता बोध्यते तदा एवमेवं कर्तव्यमिति क्रियाविशेष एव कश्चित्तत्र चोद्यते । कुठारेण काष्ठच्छेदनं कथं कार्यमित्यपेक्षायामुद्यम्य निपात्येत्युच्यते । तत्रोद्यमनं निपातनं च क्रियाविशेष एव । कुठारस्तु तादृशोद्यमननिपातनक्रियायां केवलमङ्गभूतः । न तु स्वातन्त्र्येण च्छेदनं कर्तुमुत्सहते । अत एवेति । द्रव्यस्य स्वरूपत इतिकर्तव्यतात्वाभावादेव सोमस्य द्रव्यस्येतिकर्तव्यतात्वाभावेन प्रकरणात्प्राप्तमपि तस्य ग्रहणमत्र न भवतीत्यर्थः । अयं भावः । श्रुतिलिङ्गादीनि विनियोजकानि षट्प्रमाणान्यग्रे वक्ष्यन्ते । तेषु चतुर्थं प्रकरणनामकं प्रमाणम् । उभयाकाङ्क्षा प्रकरणम् । सोमेन यजेते-

नावान्तरक्रियायोगादृते वाक्योपकल्पितात्।
गुणद्रव्ये कथंभावैर्गृह्णन्ति प्रकृताः क्रियाः॥ (तन्त्रवा. १।४।३) इति।

तदेतदग्रे वक्ष्यामः। किंच सोमेन यजेतेति हि यागस्योत्पत्तिवाक्यं नाधिकारवाक्यम्। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यस्याधिकारवाक्यत्वात्। उत्पत्तिवाक्ये च नेतिकर्तव्यताकाङ्क्षा। इष्टविशेषाकाङ्क्षाकलुषितत्वेनेतिकर्तव्यताकाङ्क्षाया विस्पष्टमनुत्थानात्। तत्सिद्धं सोमस्य नेतिकर्तव्यतात्वेन भावनायामन्वयः। तस्माद्विशिष्टविधावन्वयानुपपत्त्याऽवश्यमत्वर्थलक्षणा वाच्येति।

---

त्यत्र प्रत्ययवाच्यफलभावनाया अस्ति कथंभावाकाङ्क्षा। सोमेनेत्यस्य च किं साध्यमित्यस्ति साध्याकाङ्क्षा। एवमुभयाकाङ्क्षारूपप्रकरणप्रमाणेन सोमस्य फलभावनायां संबन्धो वक्तव्यः। परं त्वत्राकाङ्क्षा कीदृशी संबन्धश्च कीदृशः। तादृशेनैव हि संबन्धेन भवितव्यं य उत्थितामाकाङ्क्षां निवर्तयितुं प्रभवति। न हि माता पुत्र्येत्युक्ते कथं पुत्र्येत्युत्थिताकाङ्क्षा पुत्रेणेत्युक्त्या निवर्त्यते। पाद्यप्रदानादिक्रियाविशेषोक्त्यैव हि सा निवर्तते। प्रकृते च फलभावनाया या कथंभावाकाङ्क्षा तन्निवर्तने सोमस्याक्रियारूपस्य न सामर्थ्यमिति न सोमस्येतिकर्तव्यतात्वेन फलभावनायामन्वयः। प्रकरणं प्रमाणमपि सत्यामेव योग्यतायां विनियोजकं भवति नान्यथेति। नावान्तरेति। ऋते इति विनेत्यर्थेऽव्ययम्। कथंभाव इतिकर्तव्यताकाङ्क्षा। प्रकृताः क्रिया मुख्याः फलभावनारूपाः क्रियाः। तत्तद्वाक्यसंदर्भानुगुण्येन प्रकल्पितो यो गुणो द्रव्ये वावान्तरक्रियासंबन्धस्तं विना फलभावना इतिकर्तव्यताकाङ्क्षायां सत्यामपि तया गुणं द्रव्यं वा न गृह्णन्ति स्वान्वितत्वेन न भावयन्तीत्यर्थः। अग्रे। प्रकरणप्रमाणनिरूपणावसरे। एवं सोमस्य न भावनायामितिकर्तव्यतात्वेनान्वयः संभवतीत्युक्तम्। अधुना सोमेन यजेतेत्यत्र भावनाया इतिकर्तव्यताकाङ्क्षैव स्पष्टतया नोदयमासादयतीत्याह— किं च सोमेनेति। कस्याश्चित्क्रियाया इदं फलमित्येवं फलविशेषे निर्ज्ञाते तत्फलं य इच्छति तस्य स फलविशेषः कथं संपादनीय इत्येवमितिकर्तव्यताया अत्यन्ताकाङ्क्षा जायते। यावच्च फलं न ज्ञायते तावत्किमस्याः क्रियायाः फलं स्यादित्येवामिष्टफलविशेषाकाङ्क्षया तस्य मनः कलुषितं भवति। कलुषितमनस्त्वादेव चास्यामवस्थायामितिकर्तव्यताकाङ्क्षा नोदेति। उदितायां वा तस्यां तन्निवर्तने नोत्कण्ठते। अतस्तदानीं नेतिकर्तव्यताकाङ्क्षायाः स्पष्टमुत्थानं भवति। लोके च क्रियाफलमज्ञात्वैव य इतिकर्तव्यताविचारं कर्तुं प्रवर्तते तं निन्दन्ति जना नायं समीक्षाकारीति। प्रकृते च यागादिक्रियाफलमधिकारवाक्यादवगम्यते। ज्योतिष्टोमेन स्वर्ग-

नन्वेवमपि सोमेन यजेतेत्यत्र न विशिष्टविधानम्। गौरवात्। मत्वर्थलक्षणापाताच्च। किंतु दध्ना जुहोतीतिवद्गुणमात्रविधानमस्तु।

---

कामो यजेतेत्येतदत्राधिकारवाक्यम्। स्वर्गकामस्य तादृशयागाधिकारकथनात्। तथा च तस्मादधिकारवाक्यात्स्वर्गरूपं फलमवगम्यते नतु सोमेन यजेतेति वाक्यात्। सोमेन यजेतेत्ययमुत्पत्तिविधिः। प्रमाणान्तरेणाप्राप्तस्य क्रियाविशेषस्यानेन बोधनात्। एवं च सोमेन यजेतेति वाक्यार्थकाले फलस्याज्ञानेनेतिकर्तव्यताकाङ्क्षायाः स्पष्टमनुत्थानान्न सोमस्येतिकर्तव्यतात्वेन भावनायामन्वयः संभवतीत्यतो यागे तस्य सामानाधिकरण्येनान्वयसिद्ध्यर्थं सोमपदस्य मत्वर्थे लक्षणावश्यं स्वीकार्येति सिद्धम्।

अथ मत्वर्थलक्षणामसहमानः पुनः प्रकारान्तरेण वाक्यार्थयोजनां कुर्वन्नाशङ्कते- 'नन्वेवमपि' इत्यादिना 'मत्वर्थलक्षणापत्तेः' इत्यन्तेन महता प्रबन्धेन। अयमाशयः। यागविशेषस्तत्र गुणस्तदधिकारश्चेति त्रयमत्र बोधनीयम्। तद्बोधकं चात्र वाक्यद्वयं दृश्यते ज्योतिष्टोमेन स्वर्गकामो यजेतेति सोमेन यजेतेति च। तत्र ज्योतिष्टोमेन स्वर्गकामो यजेतेति वाक्ये स्वर्गकामपददर्शनात्तदेवाधिकारबोधकं नतु सोमेन यजेतेति। तथा सोमेन यजेतेति वाक्ये गुणविशेषबोधकसोमपददर्शनात्तदेव गुणबोधकं नतु ज्योतिष्टोमेन स्वर्गकामो यजेतेति। एवं द्वयोर्निश्चयः। किंतु यागविशेषविधायकमत्र किं वाक्यमिति संशयः। उक्तवाक्यद्वयापेक्षया तृतीयवाक्यस्यात्राद‍र्शनादनयोर्द्वयोर्वाक्ययोर्मध्ये किंचिदेकं विधायकमिति मन्तव्यम्। तत्र कल्पद्वयम्। सोमेन यजेतेति वाक्यं सोमरूपगुणविशेषविधायकं सदेव यागविशेषमपि विधत्ते इति प्रथमः कल्पः। ज्योतिष्टोमेन स्वर्गकामो यजेतेति वाक्यमधिकारबोधकं सदेव यागविशेषमपि विधत्त इति द्वितीयः। अत्राद्यः कल्पः सिद्धान्तिना स्वीकृतः। तत्र च ज्योतिष्टोमेनेति वाक्यं केवलमधिकारमेव बोधयति। तादृशाधिकारवाक्यगताधिकारिविशेषणावगतं स्वर्गरूपमिष्टं फलमुद्दिश्य सोमेन यजेतेति वाक्येन सोमविशिष्टो यागो विधीयते सोमवता यागेनेष्टं स्वर्गं भावयेदिति। सोमविशिष्टयागविधानं च मत्वर्थलक्षणाधीनमित्यगत्या लक्षणा समाश्रिता। लक्षणानङ्गीकारे वाक्यभेदः स्यादिति पूर्वमुक्तम् (पृ. १८ प. २)। पूर्वपक्षी त्वधुना द्वितीयं कल्पमवलम्बते। तत्र च ज्योतिष्टोमेनेत्यधिकारवाक्य एव यागविधिरिति तं यागमुद्दिश्य सोमेन यजेतेति वाक्येन केवलं सोमरूपो गुणो विधेयः सोमेन यागं भावयेदिति। तथा च मत्वर्थलक्षणां विनैव सर्वेष्टसिद्धिरिति मन्यते। दध्ना जुहोतीति। यथाग्निहोत्रं जुहोतीति विहिताग्निहोत्रसंज्ञकं होममुद्दिश्य दध्ना जुहोतीति वाक्येन तत्र केवलं दधिरूपो गुणो विधीयते दध्ना होमं भाव-

विधिशक्तेर्गुणे संक्रमात्। यथाहुः—

सर्वत्राख्यातसंबद्धे श्रूयमाणे पदान्तरे।
विधिशक्त्युपसंक्रान्तेः स्याद्धातोरनुवादता॥ (तन्त्रवा० १।४।३) इति।

न च यागस्याप्राप्तत्वान्न तदुद्देशेन सोमविधानमिति वाच्यम्। 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यनेन यागस्य प्राप्तत्वात्। न चास्याधिकारविधित्वेन नोत्पत्तिविधित्वमिति वाच्यम्। 'उद्भिदा यजेत पशुकामः'

---

येदिति तद्वत्। ननु दध्ना जुहोतीत्यत्र ति इत्ययं विधिबोधक आख्यातप्रत्ययो न गुणवाचकाद्दधिशब्दात्परो दृश्यते। किंतु हुधातोः सकाशात्परीभूतः। तथा सोमेन यजेतेत्यत्रापि विधिबोधकस्त इत्ययमाख्यातप्रत्ययो न गुणवाचकात्सोमशब्दात्परो दृश्यते। किंतु यजधातोः सकाशात्परीभूतः। तथा च तादृशाख्यातप्रत्ययबोधिता विधिशक्तिर्धातूपात्ते होमे यागे चैव संगता भवेत्। ननु तं परित्यज्य तद्गुणीभूते दध्नि सोमे च। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वनियमादिति चेत्तत्राह–<u>विधिशक्तेरिति</u>। दध्ना जुहोतीत्यत्राख्यातप्रत्ययाभिहिता विधिशक्तिः प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति नियमानुसारेण हुधात्वर्थे होमे संयोज्यते चेद्विधिस्वरूपमेव भज्यते। अप्राप्तार्थविधानं हि विधेः स्वरूपम्। होमस्त्वत्राग्निहोत्रं जुहोतीति वचनान्तरेण प्राप्त एव भवति। अथ विधिस्वरूपसंरक्षणाय विधिशक्तिर्दधिरूपे गुणे संयोज्यते चेत्तर्हि दधिरूपस्य गुणस्य वचनान्तरेणाप्राप्तत्वाद्विधिस्वरूपं संरक्षितं भवति। किंतु प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति नियमभङ्गः। एवं सोमेन यजेतेत्यत्रापि ज्योतिष्टोमेन स्वर्गकामो यजेतेति वचनान्तरेण यागस्य प्राप्तत्वाद्विधिशक्तेर्यागे उपसंक्रमे विधिस्वरूपभङ्गः। सोमरूपे गुणे विधिशक्तेरुपसंक्रमे तु प्रत्ययानामित्युक्तनियमभङ्गः। का तर्ह्यत्र गतिः। उच्यते। स्वरूपप्रणाशनियमभङ्गयोरन्यतरदवश्यमत्र सोढव्यं भवति। तत्र प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति नियमसंरक्षणापेक्षया स्वरूपसंरक्षणं वरम्। एवं च प्रकृते दध्नि सोमे च विधिशक्तिरुपसंक्रम्यत इति बोध्यम्। <u>सर्वत्रेति</u>। अनुवादता नाम अनुवादकत्वम्। आख्यातपदेनात्र तिङन्तं जुहोति यजेतेत्यादि क्रियापदं गृह्यते। तत्संबद्धं दध्ना सोमेनेत्यादिकं पदान्तरं यत्र श्रूयते तादृशे सर्वत्र स्थले पदान्तरप्रतिपाद्ये दधिसोमादौ प्रत्ययावद्योतिता विधिशक्तिः संयोजिता भवति। धात्वर्थस्य होमस्य यागस्य च वचनान्तरेण प्राप्तत्वात्तदनुवादमात्रमेव केवलं धातुना क्रियत इत्यर्थः। ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यस्य केवलमधिकारविधित्वमेव नोत्पत्तिविधित्वमिति मन्वानः सिद्धान्त्यनुसारी शङ्कते–<u>न च यागस्येति</u>। <u>उद्भिदेति</u>। उद्भिदिति यागविशेषस्य नाम। उद्भिद्यते

इतिवदेकस्यैवोभयविधित्वोपपत्तेः । एवं च सोमेन यजेतेत्यत्र न मत्वर्थलक्षणा । यदि ह्यत्र विशिष्टविधानं स्यात्तदान्वयानुपपत्त्या मत्वर्थलक्षणा स्यात् । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र तु यागविधाने कचिन्न मत्वर्थलक्षणा । न तावदेतस्मिन् वाक्ये । ज्योतिष्टोमेन यागेन स्वर्गं भावयेदिति सामानाधिकरण्येनैव नामपदस्यान्वयात् । नापि सोमेन यजेतेत्यत्र । यागोद्देशेन सोमविधानात् । सोमेन यागं भावयेदिति ।

नन्वनुवादेऽप्यस्ति मत्वर्थलक्षणा । अत एवोक्तम्—

विधाने वानुवादे वा यागः करणमिष्यते ।
तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चति ॥ ( तन्त्रवा. १।४।२) इति ।

---

पश्वादिफलमनेनेति व्युत्पत्तेः । उद्भिन्नामकेन यागेन पशुं भावयेदिति वाक्यार्थः । अत्रेदमेकमेव वाक्यं वचनान्तरेणाप्राप्तमुद्भिन्नामकं यागमपि विधत्ते । तत्र च पशुकामस्याधिकारमपि विधत्ते । तथा चात्र यथैकस्यैवास्य वाक्यस्योत्पत्तिविधित्वमधिकारविधित्वं च स्वीक्रियते तद्वत्प्रकृते ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यस्योत्पत्तिविधित्वमधिकारविधित्वं चोपपद्यत इत्याशयः । क्वचिन्नेति । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र सोमेन यजेतेत्यत्र चेति वाक्यद्वयेपि न लक्षणाश्रयणीया भवतीत्यर्थः । सामानाधिकरण्येनैवेति । ज्योतिष्टोमाभिन्नो यो यागस्तत्करणिका स्वर्गकर्मिका भावनेति वाक्यार्थः । विधाने वेति । सोमेन यजेतेत्यत्र यागस्य वचनान्तरेणाप्राप्तत्वाद्विधानमस्तु । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यनेन यागस्य विहितत्वे तेन प्राप्तत्वात्सोमेन यजेतेत्यत्र यागस्यानुवादो वास्तु । यागस्य प्रत्ययार्थभावनायां करणत्वेनान्वय इष्यते । अतस्तत्समीपोच्चारितः सोमेनेति तृतीयान्तः शब्दो यागक्रियावाचित्वं न मुञ्चति । तच्च सोमशब्दस्य यागक्रियावाचित्वं मत्वर्थलक्षणाधीनम् । सोमवान्हि यागो नतु सोम एव यागः । तथा चात्रापरिहार्यैव लक्षणेति तात्पर्यम् । ननु विधानानुवादकृतवैषम्येपि धात्वर्थस्य यागस्य प्रत्ययार्थभावनायां करणत्वेनान्वयः समान एवेत्यत्र किं नियामकमिति चेदुच्यते । उद्देश्यविधेयभावो हि वाक्यार्थः । तत्रोद्देश्यस्य भावनायां कर्मत्वेनान्वयः । विधेयस्य तु भावनायां करणत्वेनान्वयः । उद्भिदा यजेत पशुकाम इत्यत्र पशुमुद्दिश्योद्भित्संज्ञको यागो विधीयते—उद्भिद्यागेन पशुं भावयेदिति । एवं स्थिते यजेतेत्यादौ प्रकृत्यर्थो यागः प्रत्ययार्थश्च विधिः । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति चौत्सर्गिको नियम इति प्रकृत्यर्थ एव विधेयो भवति । विधेयस्य च करणत्वेनान्वयाद्धात्वर्थस्य यागस्य प्रत्ययार्थ-

अतश्च विशिष्टविधाविव गुणविधावप्यस्त्येव मत्वर्थलक्षणेति चेत्, मैवम् । गुणान्वयानुपपत्त्या हि मत्वर्थलक्षणाऽङ्गीक्रियते । यदा तु भावनायां धात्वर्थस्य करणत्वेनान्वयस्तदान्वयानुपपत्त्या साङ्गीकर्तव्या । गुणविधौ च न धात्वर्थस्य करणत्वेनान्वयो मानाभावात् । न हि दध्ना जुहोतीत्यत्र होमस्य करणत्वं श्रूयते । तद्वाचकतृतीयाद्यभावात् । कल्प्यते इति चेन्न । गुणस्य तत्र विधित्सितत्वेन साध्याकाङ्क्षायां साध्यत्वकल्पनाया एवोचितत्वात् । दध्ना होमं भावयेदिति । न चायमस्ति नियमो भावनायां धात्वर्थस्य करणत्वेनैवान्वयो न प्रकारान्तरेणेति । षष्ठाद्यपूर्वपक्षानुत्थानापत्तेः ।

---

भावनायां करणत्वेनैवान्वय इति नियमः सिध्यति । नन्वेवमपि विधाने वानुवादे वेति वार्तिकेनुवादस्थलेपि यागस्य करणत्वेनान्वय उक्तः स कथं संगच्छते ? अनूद्यमानं ह्यन्यतः प्राप्तमेवेति तस्याप्राप्तप्रापणात्मको विधिर्न संभवति । विधिस्वरूपस्यैव तत्राऽसंभवात् । अतोनूद्यमानस्य भावनायां कर्मत्वेनान्वयो वक्तव्यो न तु करणत्वेनेति चेन्न । स्यादेतदेवं यदि केवले धात्वर्थे यागे प्रत्ययावद्योतिताया विधिशक्तेरुपसंक्रमोऽङ्गीकृतः स्यात् । न तु तथाङ्गीक्रियते । किंतु सोमरूपगुणविशिष्टे यागे विधिशक्तिरुपसंक्रम्यते । धात्वर्थस्य विधेयत्वाभ्युपगमान्न प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति नियमभङ्गः । विशिष्टविधिस्वीकाराच्च तदन्तर्गतं विशेषणांशमादाय विधिस्वरूपं च संरक्षितं भवति । एवं चेदृशस्थले विशिष्टविधिः शाब्दः । आर्थो गुणविधिः । अप्राप्तेपि सोमादौ प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमितिनियमभङ्गभिया संबन्धुमप्रभवन्तीं प्रत्ययावद्योतितां विधिशक्तिं वचनान्तरेण प्राप्तत्वादनूद्यमानस्वरूपोपि यागः कक्षीकृतसोमादिगुणः सन्नप्राप्त इव भूत्वा प्रदर्शितविधिशक्तिसंबन्धयोग्यस्वरूपोऽप्रयायी भूत्वा स्वस्मिन्विधिशक्तिं स्वीकृत्य स्वाङ्गभूते सोमादौ गुणे तामवतारयतीति तात्पर्यम् । गुणविधौ चेति । अयमाशयः । सोमेन यजेतेत्यत्र यागस्य भावनायां करणत्वेनान्वये दृढतरं किंचित्प्रमाणं नोपलभ्यते । मुख्यं प्रमाणं च तत्र तृतीयादिश्रुतिः । सा च नैवात्र दृश्यते । न च यागस्यात्र विधेयत्वात्तस्य भावनायां करणत्वेनान्वय इति वाच्यम् । ज्योतिष्टोमेन स्वर्गकामो यजेतेति वचनान्तरेण यागस्य प्राप्तत्वेन तत्र विधेयत्वस्यैवासिद्धत्वात् । न च प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति नियमात्प्रत्ययाभिहिताया विधिशक्तेः प्रकृत्यर्थे यागे उपसंक्रमाद्यागे विधेयत्वप्रतीतिरिति वाच्यम् । यतोत्र प्रकृतिप्रत्ययार्थयोः संबन्धे कस्य पुरस्कर्तृत्वं प्रकृतेर्वा प्रत्ययस्य वा । तत्र न तावत्प्रकृतेः । तृतीयाद्यभावेन

षष्ठाद्ये हि यजेत स्वर्गकाम इत्यादौ प्रत्ययवाच्यायां वक्ष्यमाणार्थभावनायां समानपदश्रुत्या यागस्य भाव्यत्वमाशङ्क्यापुरुषार्थत्वेन परिहृतम् । यदि च धात्वर्थस्य करणत्वेनैव भावनायामन्वयस्तदा भाव्यत्वशङ्कैव नोदेतीति व्यर्थं षष्ठाद्यमधिकरणमापद्येत ।

---

तस्याः पश्चात्त्वात् । नापि प्रत्ययस्य । प्रकृत्यर्थस्यान्यतः प्राप्तत्वेन तत्र विधेयत्वयोग्यताया अदर्शनेनात्र प्रत्ययस्यान्यपरत्वात् । प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वं चौत्सर्गिकं न नियतमिति न तद्बाधोऽत्र दोषावहः । किं च यजेतेति तप्रत्ययो विधिशक्तिमार्थभावनामेकत्वं चाभिधत्ते । तत्रार्थभावनांशेन प्रकृत्यर्थान्वितत्वमस्त्येवेति नात्र तद्व्युत्पत्तिभङ्गः । नहि सर्वांशेन प्रकृत्यर्थान्वयोऽपेक्ष्यते । प्रत्ययाभिहितस्यैकत्वस्य कर्तर्यन्वयेन प्रकृत्यर्थानन्वयात् । किं च भावनायाः प्रथमं साध्याकाङ्क्षोदेति ततः साधनाकाङ्क्षेति प्रागुक्तमेव (पृ. १० प. १५)। तथा च यजेतेत्यत्र प्रत्ययवाच्यार्थभावनायाः प्रथमं साध्याकाङ्क्षायां समानपदोपात्तत्वेन यागस्य तत्र साध्यत्वेनान्वये वृत्ते साधनत्वेन यागान्वयशङ्कापि नात्रावकाशं लभते । न च यागो न स्वरूपतः सुखं नापि सुखसाधनत्वेनावगत इति न यागे साध्यत्वेनान्वययोग्यतेति वाच्यम् । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यस्याधिकारविधिरूपत्वेऽपि विधित्वस्यापि पूर्वपक्षेणाङ्गीकृतत्वेन यागे सुखसाधनत्वस्यावगमात् । ततः साधनाकाङ्क्षायां सोमस्य साधनत्वेनान्वय इति सर्वं सुस्थमिति । विधाने वानुवादे वेति वार्तिकाशयस्त्वग्रे मूल एव वक्ष्यते । षष्ठाद्य इति । षष्ठाध्यायस्य प्रथमे पादे प्रथमाधिकरणे हीत्थमुक्तम् । यजेत स्वर्गकाम इत्यत्र प्रत्ययवाच्यायामार्थभावनायां यागस्वर्गयोरन्वयः । तत्र यागस्य साधनत्वेनान्वयः । स्वर्गस्य च साध्यत्वेनान्वय इति सिद्धान्तः । अत्र पूर्वपक्षः । प्रत्ययवाच्यार्थभावनायाः स्वर्ग आसन्नः । समानवाक्योपात्तत्वात् । यागस्तु तदपेक्षयासन्नतरः । समानपदोपात्तत्वात् । भावनायाश्च साध्यसाधनयोर्द्वयोराकाङ्क्षायां समानायामपि तत्र प्रथमं साध्याकाङ्क्षा ततः साधनाकाङ्क्षेति प्रागुक्तम् (पृ. १० प.१५) । तत्र प्राथमिक्यामाकाङ्क्षायामासन्नतरस्यैव संबन्धो वक्तव्यः । आसन्नापेक्षया तस्य शीघ्रमुपस्थितेः । पश्चाद्भाविन्यां साधनाकाङ्क्षायां तु भवतु नामासन्नस्य संबन्ध इति । सिद्धान्तस्तु प्राथमिक्यां साध्याकाङ्क्षायामासन्नतरस्यापि यागस्य न संबन्धः । यागस्य साध्यत्वेनान्वयायोग्यत्वात् । सुखं तत्साधनं वा पुरुषार्थत्वात्साध्यत्वेनान्वेतुमर्हति । यागश्च न सुखम् । नाप्यधुना सुखसाधनत्वेनावगतः । अस्मिन्नेव वाक्ये स्वर्गस्य साध्यत्वेन यागस्य च साधनत्वेनान्वये निश्चिते हि यागस्य सुखसाधनत्वेनावगतिः । वाक्यार्थ एव तु यावत्संदिह्यते न तावद्यागस्य कथमपि सुखसाधनत्वेनावगमः । तथा च

किं च वाजपेयाधिकरणे (जै. १।४।६) तन्त्रसंबन्ध आशङ्क्य परिहृतः। धात्वर्थस्य करणत्वेनैवान्वये तन्त्रसंबन्धशङ्कैव न स्यात् । तन्त्रसंबन्धशङ्कापरिहारौ च व्याख्यातौ ।

---

प्राथमिक्यां साध्याकाङ्क्षायामनासन्नतरस्यापि स्वर्गस्यैव साध्यत्वेन संबन्धः। स्वर्गो हि सुखविशेषरूप एव । यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम्। अभिलाषोपपन्नं च तत्सुखं स्वःपदास्पदम् ( गाभडे १०९।४४ ) इति तल्लक्षणात् । अतः स्वर्गस्य साध्यत्वेनान्वये योग्यता नास्तीति न शङ्क्यमिति । यदि तु भावनायां धात्वर्थस्य करणत्वेनैवान्वय इति शङ्काकृदुक्तो नियमः स्यात्तर्हि तादृशनियमे प्रमाणान्तराभावेन शब्दशक्तिस्वभाव एव केवलं तादृशनियमे प्रमाणत्वेन शरणीकरणीयः स्यात् । तथा चासन्नतरस्यापि धात्वर्थस्य शब्दशक्तिस्वभावविरोधात्साध्यत्वेनान्वयशङ्कैव नोदेतीति शङ्कासमाधानयोरुभयोरपि निर्दलत्वापत्तिरिति साधनत्वेनान्वयस्थापनायारब्धं तदधिकरणं व्यर्थं स्यादित्याशयः। किं च वाजपेयेति। प्रथमाध्याये चतुर्थपादे षष्ठमधिकरणमिदम् । तत्रायं पूर्वपक्षः । 'वाजपेयेन स्वाराज्यकामो यजेत' इत्यत्र वाजपेयशब्देन गुणो विधीयते । वाजशब्दोऽन्नवाची । तच्चान्नमत्र पेयं सुराद्रव्यम् । अथवा वाजस्यान्नस्य पेयं द्रवीभूतो रसो यवागूरूपः । तथा च सोमेन यजेतेत्यत्र यथा सोमरूपो गुणो विधीयते तथात्र वाजपेयरूपो गुणो विधीयते। नन्वेवं वाजपेयशब्दे मत्वर्थलक्षणा स्वीकर्तव्या । तेन वाजपेयरूपगुणवता यागेन स्वाराज्यं भावयेदित्यर्थो भवतीति चेन्न। वाजपेयगुणे स्वाराज्यफले च यागस्य तन्त्रेण संबन्धाङ्गीकारात्। वाजपेयेन द्रव्येण स्वाराज्याय यजेतेत्येवं यागस्य तन्त्रेणोभयसंबन्धः । ननु यागस्य गुणसंबन्धे सति वाजपेयगुणेन यागं कुर्यादित्येवं यागस्य कर्मकारकत्वं भवति। तथा यागेन स्वाराज्यं भावयेदित्येवं यागस्य फलसंबन्धे करणकारकत्वं भवति । ततः कथमुभयसंबन्ध इति चेन्न । यजेः साधारणत्वेनोभयरूपत्वसंभवात्। यजेतेत्यत्र यजधातुना याग उक्तः। प्रत्ययेन भावनोक्ता । तयोस्तु समभिव्याहारात्संबन्धमात्रं गम्यते। तच्च कर्मत्वकरणत्वयोः साधारणम्। न खलु तत्र कर्मत्वस्यैव करणत्वस्यैव वा साक्षादभिधायिका काचिदसाधारणी विभक्तिः श्रूयते। अतः साधारणस्य यजेरुभाभ्यां युगपत्संबन्धे सति यथोचितसंबन्धविशेषस्तत्र तत्र पर्यवस्यति। एवं तन्त्रेण संबन्धाङ्गीकारे वाजपेयद्रव्येण यागं कुर्यादित्यर्थस्य लभ्यमानत्वाद्गुणविधित्वेऽपि नास्ति मत्वर्थलक्षणेति। सिद्धान्तस्तु यजेरत्र तन्त्रेणोभयसंबन्धाङ्गीकारे विरुद्धत्रिकद्वयापत्तिदोषः स्यात्। तथा च तन्त्रमत्र न संभवति। विरुद्धत्रिकद्वयापत्तिदोषस्वरूपं च प्रागुक्तमेव ( पृ. २४ प. ५ )। ननु मा भूत्तन्त्रेणोभयसंबन्धः । किंतु यजेते-

किं च धात्वर्थस्य न करणत्वेनैवान्वयः । गुणकामाधिकरणे (जै. २।२।२५) आश्रयत्वेन धात्वर्थान्वयस्योक्तत्वात् । तथाहि—दध्नेन्द्रियकामस्य जुहुयात् (तै. ब्रा. २।१।५।६, आप–श्रौ. ६।१५।१) इत्यत्र न तावद्धोमो विधीयते । तस्य वचनान्तरेण विहितत्वात् । नापि होमस्य फलसंबन्धः । गुणपदानर्थक्यापत्तेः । नापि गुणसंबन्धं विधत्ते । फलपदानर्थक्यापातात् । नाप्युभयसंबन्धं विधत्ते । प्राप्ते कर्मण्यनेकविधाने वाक्यभेदापत्तेः । यथाहुः—

---

त्यस्यावृत्त्या वाजपेयद्रव्येण यागं कुर्यात्, यागेन च स्वाराज्यं भावयेदित्येवमुभयसंबन्धोऽस्त्विति चेन्न । तथा सति वाक्यभेदप्रसङ्गात् । तस्माद्वाजपेयशब्दोऽत्र न गुणविधायकः । किंतु कर्मनामधेयमिति । अस्मिन्नधिकरणे यागस्य भावनायां कर्मत्वेन करणत्वेन चेति प्रकारद्वयेन तन्त्रेण संबन्ध आशङ्क्य परिहृतः । धात्वर्थस्य भावनायां करणत्वेनैवान्वय इति नियमाङ्गीकारे तु तादृशशङ्कैव नोदेति । तथा च वाजपेयाधिकरणविरोधः स्पष्ट एवेति भावः । तथा धात्वर्थस्य भावनायां करणत्वेनैवान्वय इति नियमाङ्गीकारे गुणकामाधिकरणविरोधं प्रदर्शयति— 'किं च धात्वर्थस्य' इत्यादिना 'आश्रयत्वेनान्वयः' इत्यन्तेन प्रबन्धेन । द्वितीयाध्याये द्वितीयपादे एकादशाधिकरणमिदम् । यस्मिन्वाक्ये गुणः कामश्च निर्दिश्यते तादृशवाक्यविशेषस्यार्थोऽस्मिन्गुणकामाधिकरणे विचार्यते । अग्निहोत्रसमीपे श्रूयते दध्नेन्द्रियकामस्य जुहुयादिति । अत्र दधिरूपो गुणो निर्दिष्टः । काम्यत इति काम इच्छाविषयीभूतोऽर्थः । स चेन्द्रियकामस्येत्येवं निर्दिष्टः । अत्र च जुहुयादित्यनेन होमो विधीयत इति वक्तुं न शक्यते । अग्निहोत्रं जुहुयादिति वचनान्तरेण प्राप्तत्वात् । अतश्च प्राप्तं होममनूद्याप्राप्तं किंचिदनेन विधीयत इति वक्तव्यम् । तच्च किमिन्द्रियरूपं फलमथवा दधिरूपो गुणः । आद्ये होममनूद्य तस्येन्द्रियरूपफलसंबन्धोऽत्र विधीयत इति चेद्दध्नेति गुणपदस्यानन्वयः । दधिरूपो गुणो हि होमस्य नतु फलस्य । दध्नेत्यस्य होमेन्वये तु दध्यंशस्याप्राप्तत्वेन दधिमतो होमस्यानूद्यमानत्वं न स्यात् । दधिशब्दस्य मत्वर्थलक्षणाप्रसङ्गश्च । द्वितीये होममनूद्य तत्र दधिरूपो गुणोऽत्र विधीयत इतिचेदिन्द्रियकामस्येति फलपदस्यानन्वयः । इन्द्रियरूपं फलं हि होमस्य नतु दध्नः । इन्द्रियकामपदस्येन्द्रियफलकेत्यर्थेन होमविशेषणत्वं तु न संभवति । होम इन्द्रियफलकत्वस्यैतद्वचनेनैव साध्यमानत्वेनैतद्वाक्यार्थकाले होमे इन्द्रियफलकत्वस्यासिद्धेः । लक्षणादोषस्य तादवस्थ्याच्च । अथ प्राप्तं होममनूद्य तत्र दधिरूपो गुणस्तस्येन्द्रियरूपफलसंबन्धश्चेत्युभयमत्र विधीयत इत्युच्यते चेत्तदपि न संभवति । तथा सत्युद्देश्यविधेयभावद्वयेन वाक्यभेदापत्तेः । यथोपवरा कन्या, जामाता-

न्वेषणीय इति प्रथमत उक्ते जामात्रन्वेषणार्थं प्रवृत्तौ सत्यां ततो यदि शूरः सुन्दरो वाग्मी च जामातान्वेषणीय इत्युच्यते तर्हि तत्र प्राथमिकवाक्येनान्वेषणीयत्वेन प्राप्तं जामातरमनूद्य शूरत्वादिगुणत्रयविधाने उद्देश्यविधेयभावत्रयेण वाक्यार्थत्रयमपरिहार्यं भवति तद्वत्। यदि तु शूरः सुन्दरो वाग्मी च जामातान्वेषणीय इति प्रथमत एवोच्यते तदान्वेषणीयत्वेन जामातुः पूर्वं प्राप्त्यभावात्तस्यानुवादो न संभवति। किंतु तत्र शूरत्वादिगुणविशिष्टो जामातान्वेषणीयत्वेन विधीयत इति न वाक्यत्रयं किंतु वाक्यैक्यमेव। एकेनैवोद्देश्यविधेयभावसंबन्धरूपयत्नेन बहुभिर्विशेषणैर्युक्तस्य विशेष्यस्य विधानसंभवात्। विधेयार्थस्तु तत्र विशेषणत्रयविशिष्टो गुरुर्भवतीत्यन्यदेतत्। नन्वेवमत्रापि प्राप्तं होममनूद्य गुणविशिष्टं फलं वा विधीयतां फलविशिष्टो गुणो वा विधीयताम्। तथा च न वाक्यभेददोषः स्यादिति चेन्न। तयोर्मिथः संबन्धासंभवात्। यथा जामातुः श्वशुरेण सह संबन्धो भार्याद्वारक एव न स्वातन्त्र्येण तथात्र होमद्वारैव हि तयोः संबन्धो वक्तव्यः। नहि दधिरूपो गुणः फले संभवति किंतु होमे। तथा नेन्द्रियरूपं फलं दध्नः किंतु होमस्य। होमस्तत्र वचनान्तरेण प्राप्तत्वात्कथमपि हि विधेयकुक्षिप्रविष्टो न भवति। एवं चात्र विशिष्टविधानासंभवादुभयोः पार्थक्येन विधानं वक्तव्यमिति वाक्यभेददोषो दुरुद्धरः। ननु परिह्रियतेत्र वाक्यभेददोषः। यद्यपि गुणफलयोर्मिथो न संबन्धः संभवति तथापि होमे तयोः संबन्धः संभवत्येव। तथा च गुणविशिष्टो होमोत्र फलमुद्दिश्य विधीयते। न च होमस्य वचनान्तरेण पूर्वं विहितत्वात्पुनः कथं तस्य विधानमिति शङ्क्यम्। प्रकृतस्य होमस्य संबन्धे हि स्यात्तथा। नात्र प्रकृतस्य होमस्य संबन्धोङ्गीक्रियते। किंतु दधिगुणरूपविशेषणविशिष्टं होमान्तरमेवात्रेन्द्रियरूपं फलमुद्दिश्य विधीयते। तथा च न वाक्यभेददोष इति चेत्-मैवं वादीः। अनारभ्याधीते हि वाक्ये स्यान्नाम विशिष्टविधानसंभवः। अत्र तु पूर्वमग्निहोत्रप्रकरणं प्रकृतम्। तस्य च प्रकृतस्य वाक्यभेददोषपरिहाराय विच्छेदस्त्वयेदानीमुच्यते। तथा सति प्रकृतार्थस्य त्यागोऽप्रकृतार्थस्य कल्पनं चेत्यहो महत्पाण्डित्यं प्रदर्शितम्। वाक्यारूष्यं निवर्तयन्दण्डवाक्यभेददोषभिया प्रकरणभेदं कर्तुं प्रवृत्तोसि। वाक्पारुष्यं निवर्तयन्दण्डपारुष्ये प्रवृत्तोसि। किं च दधिपदस्य मत्वर्थे लक्षणा तदवस्थैवेति यत्किंचिदेतत्। कथं तर्हि दध्नेन्द्रियकामस्य जुहुयादित्यत्र वाक्यार्थ इति चेत्-उच्यते। प्रत्ययवाच्यार्थभावनायां धात्वर्थस्य होमस्यात्र न साध्यत्वेन संबन्धो नापि साधनत्वेन संबन्धः। किंतु तत्र साध्यत्वेन संबन्धः फलस्येन्द्रियस्य। साधनत्वेन च तत्र संबन्धो दध्नेत्यस्य। धात्वर्थो होमस्तु पूर्वप्राप्त एवात्रानूद्यमानो दध्नेत्यत्राश्रयत्वेनान्वेति। नन्वत्र दध्नेत्यस्येन्द्रियभावनायां साधनत्वेन संबन्ध उक्तः। साधनं च किंचित्क्रियाद्वारा स्वसाध्यं

साधयितुं क्षमते। यथा छेदनसाधनीभूतः कुठार उद्यमननिपतनरूपक्रियाविशेषद्वारा छेदनं साधयति। अत्र च दध्नः कः क्रियाविशेषो येन तदिन्द्रियाणि साधयेदिति चेत्-भ्रान्तोसि। न वयं फलभावनायां दध्नः साधनत्वेनान्वयं ब्रूमः। किं तर्हि दध्नेति तृतीयान्तपदोपात्तस्य दधिकरणत्वस्य। अयं भावः। होमे दध्नोवदानं प्रक्षेपश्च भवति। तथा चावदानप्रक्षेपरूपक्रियाविशेषद्वारा दध्नो यद्धोमकरणत्वं तेन तादृशेन दध्नो होमकरणत्वेनेन्द्रियं भावयेदित्यर्थः। अत्र दध्नो यद्धोमे करणत्वं तद्दधिशब्दादुत्पन्नया तृतीयाविभक्त्या प्रतिपाद्यते। तादृशं च यद्दधिनिष्ठं होमकरणत्वं तृतीयान्तपदोपात्तं तस्य यत्फलभावनायां साधनत्वं तत्प्रतिपादको नात्र कश्चन प्रत्ययः। किंतु यथा यजेत स्वर्गकाम इत्यत्र स्वर्गभावनायां यागस्य साधनत्वं प्रत्ययेनानुपात्तमपि योग्यताबलात्प्रतीयते तद्वदेवात्र दध्नेति तृतीयान्तपदोपात्तस्य होमे दधिकरणत्वस्य फलभावनायां योग्यताबलात्साधनत्वेन संबन्ध इति। एवं स्थिते यदि धात्वर्थस्य भावनायां करणत्वेनैवान्वय इति शङ्काकुदुक्तो नियमः स्यात्तर्ह्यत्र गुणकामाधिकरणे धात्वर्थस्य होमस्य दध्नेति तृतीयान्तपदोपात्ते दधिकरणत्व आश्रयत्वेनान्वय उक्तो न संगच्छते। एवं च गुणकामाधिकरणविरोधः स्पष्ट एव। अत्रायं विवेकः। धात्वर्थस्य भावनायां करणत्वेनैवान्वय इति शङ्काकुदुक्तनियमाङ्गीकारे षाष्ठप्रथमाधिकरणं वाजपेयाधिकरणं गुणकामाधिकरणं च विरुध्यत इत्युक्तम्। तत्रैतावान्विशेषः। विषयसंशयाद्यंशपञ्चकात्मकेधिकरणे पूर्वपक्षसिद्धान्तरूपमंशद्वयं वर्तते। तथा धात्वर्थस्य भावनायां करणत्वेनैवान्वय इति शङ्काकुदुक्ते नियमेप्यंशद्वयम्। धात्वर्थस्य भावनायामेवान्वय इत्येकोंशः। स च भवन्करणत्वेनैवेति द्वितीयोंशः। तत्र नियमशरीरान्तर्गतः कोंशः कस्मिन्नधिकरणेधिकरणान्तर्गतेन केनांशेन विरुध्यते तदिदानीमुच्यते। तत्र षाष्ठप्रथमाधिकरणोक्तेन पूर्वपक्षांशेन नियमशरीरान्तर्गतः करणत्वेनैवान्वय इति द्वितीयोंशो विरुध्यते। सिद्धान्तांशेन तु न विरोधः। सिद्धान्ते यजेतेत्यत्र धात्वर्थस्य यागस्य भावनायां करणत्वेनैवान्वयस्य साधितत्वात्। पूर्वपक्षांशेनापि च न नियमशरीरान्तर्गतो धात्वर्थस्य भावनायामेवान्वय इत्यंशो विरुध्यते। पूर्वपक्षेपि यागस्य भावनायामेवान्वयस्वीकारात्। तथा च करणत्वेनैवान्वय इत्यंशस्य पूर्वपक्षेण सह विरोधः सिध्यति। तथा वाजपेयाधिकरणे तत्रत्यसिद्धान्तेन न नियमशरीरघटकः कोप्यंशो विरुध्यते। यागस्य स्वाराज्यभावनायां करणत्वेनैवान्वयस्य तत्र सिद्धान्तितत्वात्। पूर्वपक्षेपि तत्र यागस्य भावनायां करणत्वेनैवान्वयस्वीकाराच्च पूर्वपक्षांशेनापि नियमो विरुध्यते। किंतु नियमशरीरान्तर्गतो यः करणत्वेनैवान्वय इति द्वितीयोंशस्तत्रत्यावधारणांशो विरुध्यते। पूर्वपक्षे धात्वर्थस्य यागस्य भावनायां तन्त्रेण साध्यत्वेनान्वय इत्युक्तत्वात्। गुणकामा-

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।
अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥ (तन्त्रवा. २।२।६) इति ।

अत्र च कर्मपदवत् गुणेऽप्युपलक्षणम् । एकोद्देशेनानेकविधाने वाक्यभेदात् ।

अत एव ग्रहैकत्वाधिकरणे ( जै. ३।१।१२ अधि. ७ ) ग्रहं संमार्ष्टीत्यत्र ग्रहोद्देशेन एकत्वसंमार्गविधौ वाक्यभेदाद् ग्रहैकत्वमविवक्षितमित्युक्तम् ।

---

धिकरणे तु सिद्धान्तांशेनापि नियमो विरुध्यते । किंच तत्र नियमशरीरान्तर्गतो धात्वर्थस्य भावनायामन्वय इत्ययं प्रथमांशोऽपि विरुध्यते । धात्वर्थस्य होमस्य दध्नेत्यत्रान्वयो न तु भावनायामिति तत्र सिद्धान्तितत्वादिति बोध्यम् ।

प्राप्ते कर्मणीति । यस्मिन्वाक्ये कर्म तदङ्गभूता अनेके गुणाश्च निर्दिश्यन्ते तत्र तत्कर्म वचनान्तरेण प्राप्तं चेत्तत्र तस्याप्राप्तत्वाभावाद्विधानं न संभवति । किंतु तत्र तस्यानुवाद एव कृत इति वक्तव्यम् । तथा च तत्कर्मानूद्य तत्र निर्दिष्टानामनेकेषां गुणानां विधाने उद्देश्यविधेयभावभेदेन वाक्यभेददोषो दुष्परिहर इत्यतस्तत्र तत्कर्मानुवादेनानेकेषां गुणानां विधानमिति न शक्यते वक्तुम् । यदि च तत्कर्म वचनान्तरेण प्राप्तं न स्यात्तर्हि तत्र निर्दिष्टाङ्गभूतानेकगुणविशिष्टं तत्कर्म किंचित्फलमुद्दिश्य विधातुं शक्यते । तत्र च यद्यपि विधेयं गुरुभूतं तथाप्युद्देश्यविधेयभावरूपः प्रयत्न एक एवेति न वाक्यभेददोष इति भावः । अत्र प्राप्ते कर्मणीत्यत्र कर्मपदं द्रव्यादीनां सर्वेषामुपलक्षणम् । तथा गुणपदमपि द्रव्यादीनां सर्वेषामुपलक्षणम् । द्रव्ये गुणे कर्मणि वा प्राप्ते सति तदनुवादेन द्रव्याणां गुणानां कर्मणां वा सजातीयानामनेकेषां तथा विजातीयानां द्रव्यगुणकर्मणामप्यनेकेषां विधानं न युज्यत इति तात्पर्यम् । न चोपलक्षणाङ्गीकारे किं प्रमाणमिति वाच्यम् । अत्र प्राप्तं कर्मानूद्यानेके गुणा विधातुं न शक्यन्त इत्यत्र बीजं हि वाक्यभेददोषप्रसङ्गः । स च यथा कर्मानुवादेनानेकगुणविधाने संभवति तथान्यमपि किंचिदेकमनूद्य केषांचिदप्यनेकेषां विधाने सम एव । अतः प्राप्ते कर्मणीत्येवमुक्तवतोऽपि तन्त्रवार्तिककारस्य सामान्यतस्तात्पर्यमवगम्यते ।

अत एवेति । कर्मवदन्यत्र द्रव्यादिष्वप्येकोद्देशेनानेकविधाने वाक्यभेददोषप्रसङ्गादेवेत्यर्थः । तृतीयाध्याये प्रथमपादे सप्तमं ग्रहैकत्वाधिकरणम् । ज्योतिष्टोमप्रकरणे दशापवित्रेण ग्रहं संमार्ष्टीति श्रूयते । दशापवित्रं खण्डपटः । ग्रहः सोमपात्रम् । संमार्जनं शुद्धीकरणम् । वस्त्रखण्डेन सोमपात्रस्य शुद्धीकरणमत्र विधीयते । तत्र च ग्रहमिति द्वितीयैकवचनेन ग्रहगतैकत्वसंख्या प्रतीयते । ग्रहाश्चैन्द्रवायवादयो दश । तेषां मध्ये कस्याप्येकस्य संमार्जनं

रेवत्यधिकरणे (जै. २।२।२७ अधि. १२) च 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' ( ता. ब्रा. १७।७।१ ) इत्यत्र वारवन्तीयस्य रेवतीसंबन्धे अग्निष्टोमसामसंबन्धे फलसंबन्धे च विधीयमाने

---

कर्तव्यमिति पूर्वपक्षः। सिद्धान्तस्तु ग्रहस्यात्र संमार्जनक्रियायामुद्देश्यत्वादुद्देश्यगतायाश्चैकत्वसंख्याया अविवक्षितत्वात्कस्यैकस्य संमार्जनं कर्तव्यमित्यत्र विनिगमकाभावाच्च सर्वेषां संमार्जनम्। ननु तथा सति संमार्जनक्रियाया आवृत्तिः स्यादिति चेदस्तु। प्रधानानुरोधेन गुणावृत्तौ बाधकाभावात्। संमार्जनक्रियया हि ग्रहः संस्क्रियते इति संस्कार्यत्वाद्ग्रहस्य संमार्जनक्रियापेक्षया प्राधान्यम्। नन्वत्रैकत्वस्योद्देश्यविशेषणत्वं न स्वीक्रियते। किंतु संमार्जनीयं ग्रहमुद्दिश्यैकत्वसंख्यात्र विधीयतामिति चेन्न। तथा सति ग्रहं संमृज्याच्चैकमित्येवं विधेयार्थभेदेन वाक्यभेदः स्यात्। एकत्वस्य विधाने हि तेनेतरग्रहेषु प्राप्तस्य संमार्जनस्य निवृत्तिः कार्या भवति। सा च प्रवृत्तिमन्तरा न संभवतीत्यतः प्रवृत्त्युपपत्तये संमार्जनस्य विधानान्तरमाश्रयितव्यं भवति। तथा च वाक्यभेदः स्पष्ट एव। अत्र च ग्रहो द्रव्यं न कर्म। तथैकत्वं संमार्जनं चेति विधेययोर्द्वयोर्न गुणत्वम्। तथाप्यत्र वाक्यभेददोष उक्तः। तथा चैतदनुरोधेन प्राप्ते कर्मणीति वार्तिके कर्मगुणपदयोरुपलक्षणत्वं युक्तमिति भावः।

वाक्यभेदे उदाहरणान्तरमाह—रेवत्यधिकरण इति। द्वितीयाध्याये द्वितीयपादे द्वादशाधिकरणमिदम्। ताण्ड्यब्राह्मणे–त्रिवृदग्निष्टुदग्निष्टोमः। तस्य वायव्यास्वृक्षु एकविंशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत ( ता. ब्रा. ) इत्येवमग्निष्टुतं प्रकृत्य पठ्यते। अस्यार्थः। अग्निष्टोमस्य विकृतिरूपः कश्चिदेकाहोऽग्निष्टुन्नामकः क्रतुः। स च प्रथमस्तोत्रे त्रिवृत्स्तोमसंयुक्तत्वात् त्रिवृदित्युच्यते। सोमयागेषु च्छन्दोगैः क्रियमाणा प्रथमादिसंज्ञिका स्तुतिः स्तोमः। स च स्तोमः पञ्चदशः सप्तदश एकविंशश्च। पञ्चदश मन्त्राः परिमाणमस्य पञ्चदशः। संख्यायाः संज्ञा० ( पा. सू. ५।१।५८ ) इति सूत्रे स्तोमे डविधिरिति वार्तिकेन डप्रत्ययः। साम्ना स्तुवीत। एकं साम तृचे क्रियते इति श्रुतावुक्तम्। तृचे तिस्र ऋचः। तृचस्य पञ्चकृत्व आवृत्त्या पञ्चदश मन्त्रा भवन्ति। स पञ्चदशः स्तोमः। सप्तदशे स्तोमे तु आद्ययोर्द्वयोर्ऋचोः पञ्चकृत्व आवृत्तिः। तृतीयाया ऋचस्तु सप्तकृत्व आवृत्तिः। एवं सप्तदशः स्तोमो भवति। एकविंशे स्तोमे तु तिसृणामपि ऋचां सप्तकृत्व आवृत्तिः। स एकविंशः स्तोमः। यद्यपि स्तोमसंघाते इति धातुपाठे उक्तम्। तदनुसारात्सामाधारो मन्त्रसंघातः स्तोमशब्दार्थो भवति। ननु स्तुतिः। तथा च पातञ्जलमहाभाष्यव्याख्यायां कैयटेनोक्तं स्तोमो मन्त्रसमूहः ( म. भा. कै. ५।१।५८ ) इति। किंच पञ्चदशः स्तोमः सप्तदशः स्तोम इत्यादौ

पञ्चदशादिसंख्यारूपं परिमाणं मन्त्रसंघातस्य संभवति न तु स्तुतेः । तथापि तादृशमन्त्रसमूहसाध्यायां स्तुतौ स्तोमशब्दस्यात्र लाक्षणिकत्वान्न दोषः । स्तुतौ पञ्चदशादिसंख्यारूपं परिमाणं तु मन्त्रद्वारा बोध्यम् । एवं च पञ्चदशेन स्तुवते इत्यादौ धात्वर्थभूतस्तुतिसामानाधिकरण्यं पञ्चदशशब्दस्योपपद्यत इति बोध्यम । अग्निष्टोमोक्थ्यादिषु सप्तसु सोमसंस्थासु अग्निष्टोमसाम्ना क्रतुसमाप्तेरग्निष्टोम इत्युच्यते । तत्र प्रकृतौ तृतीयसवने आर्भवपवमानस्योपरि यज्ञायज्ञीयं साम गीयते । यज्ञायज्ञशब्दोऽस्मिन्नस्तीति यज्ञायज्ञीयं साम । यज्ञायज्ञशब्दान्मतौ छः सूक्तसाम्नोः (पा. सू. ५।२।५९ ) इति सूत्रेण छप्रत्ययः । अस्यैव यज्ञायज्ञीयस्य साम्नोऽपरं नाम अग्निष्टोमसामेति । यतोऽनेनैव साम्नाऽग्निष्टोमक्रतुः समाप्यते । तच्च साम प्रकृतिभूतेऽग्निष्टोमे यज्ञायज्ञा वो अग्नय: ( ऋ. सं. ४ । ८ । १ ) इत्याग्नेयीष्वृक्षु गीयते । अग्निष्टुन्नामके विकृतिरूपे क्रतौ तु तदेव साम ब्रह्मवर्चसकामेन वायो शतं हरीणाम् ( ऋ. सं. ३।७।२४ ) इति वायुदेवतास्वृक्षु गातव्यम् । तच्च तत्र प्रकृतावेवैकविंशस्तोमयुक्तत्वादेकविंशमित्युच्यत इति । तदुत्तरं च तत्रैव ताण्ड्यब्राह्मणे एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत इति पठ्यते । तस्यायमर्थः । पशुकामेन रेवतीर्नः सधमाद ( ऋ. सं. १।१।३० ) इत्येवं रेवतीपदघटितास्वृक्षु वारवन्तीयं साम गातव्यमिति । अत्रायं पूर्वपक्षः एतस्यैवेत्यत्रैतच्छब्देन पूर्वप्रकृतपरामर्शिना प्रकृतोऽग्निष्टुन्नामकः क्रतुः परामृश्यते । तादृशाग्निष्टुद्यागस्यात्र आश्रयत्वेन संबन्धमङ्गीकृत्य तत्र यागे वारवन्तीयेन साम्ना रेवत्यृचं भावयेत्, वारवन्तीयेन साम्ना अग्निष्टोमसमापकं साम भावयेत्, वारवन्तीयेन साम्ना पशुं भावयेदित्येवं वारवन्तीयस्य त्रिषु संबन्धो विधेयः । न त्वत्र यागो विधातुं शक्यते । तस्य प्राप्तत्वादिति । सिद्धान्तस्तूक्तरीत्या वाक्यभेददोषो दुर्वार इत्यतोऽत्र विशिष्टस्य यागस्य विधिरास्थेयः । रेवत्यृगधिकरणकाग्निष्टोमसमापकवारवन्तीयसामगानविशिष्टयागेन पशुं भावयेदिति । रेवत्यृगधिकरणकाग्निष्टोमसामाभिन्नवारवन्तीयसामकरणकभावनाभाव्यभूतयागकरणिका पशुकर्मिका भावनेति बोधः । न च यागस्य प्राप्तत्वात्कथमत्र तद्विधानं संभवतीति वाच्यम् । अपूर्वस्यैवात्र स्वतन्त्रस्य यागस्य विधेयत्वाङ्गीकारात् । न च प्रकरणभेदो दोष इति वाच्यम् । तस्यात्रावश्यं सोढव्यत्वात् । पूर्वस्याग्निष्टुतो वायव्यर्गधिकरणकसाम्ना ब्रह्मवर्चसफलेन चोत्पत्तिविशिष्टेनावरुद्धत्वात्तस्यात्र संबन्धासंभवात् । एतस्यैवेत्येतच्छब्दस्तु न पूर्वप्रकृतपरामर्शकः । किं त्वत्र योऽपूर्वो यागो विधीयते तस्य विधेयस्यैव परामर्शक इति । अत्रैकस्य वारवन्तीयस्य साम्नो रेवत्यृग्भिरग्निष्टोमेन फलेन चेत्येवमनेकैः सह संबन्धे वाक्यभेदः स्यादिति विशिष्टविधिरपूर्वं आश्रितः । तथा च नैकस्य कर्मणोऽनेकैर्गुणैः संबन्धे एव

वाक्यभेदाद्भावनोपसर्जनं भावनान्तरं विधीयते इत्युक्तम्। तस्मात्प्राप्ते होमे नोभयविधानं संभवति। नापि होमान्तरं विधीयते। गौरवात्। प्रकृतहानाप्रकृतकल्पनाप्रसङ्गात्। मत्वर्थलक्षणाप्रसङ्गाच्च।

नापि दध्येव केवलं करणत्वेन विधीयते इति युक्तम्। केवलस्य व्यापारानाविष्टस्य करणत्वानुपपत्तेः। कर्तृव्यापारव्याप्यत्वनियमात्करणत्वस्य। किं तर्हि विधीयते इति चेत् दध्नेति तृतीययोपात्तं दधिकरणत्वं फलभावनायां करणत्वेन विधीयते। प्रत्ययार्थत्वेन दध्नोऽपि तस्य प्राधान्यात्। एवं च

---

वाक्यभेदः। किंतु कस्याप्येकस्य कैरप्यनेकैः संबन्धे वाक्यभेदो भवतीति स्थितम्। अतस्तदनुरोधेन प्राप्ते कर्मणीति वार्तिके कर्मपदं गुणपदं चोपलक्षणमित्युक्तमिति बोध्यम्। तस्मादिति। दध्नेन्द्रियकामस्य जुहुयादित्यत्र वचनान्तरेण प्राप्तं होममुद्दिश्य तस्य दधिरूपेण गुणेनेन्द्रियरूपफलेन च संबन्धे विधीयमाने वाक्यभेदप्रसङ्गादित्यर्थः। नापि होमान्तरमिति। अनुपदमेवैतदुपपादितम् (पृ. ३७ प. २४)। नापि दध्येवेति। केवलपदेन दध्नेति तृतीयान्तपदोपात्तस्य दधिकरणत्वस्य व्यवच्छेदः। तृतीयाप्रत्ययप्रकृत्युपात्तं दधिमात्रमिन्द्रियरूपफलभावनाकरणत्वेन विधीयत इति न युक्तम्। तथा सति शिक्यस्थेन दध्नापीन्द्रियप्राप्त्यापत्तेः। अभ्युपेत्यैतदुक्तम्। वस्तुतस्तु व्यापारानाविष्टस्य केवलस्य दध्यादेर्द्रव्यस्य करणत्वमेव न संभवति। तदाह—केवलस्येति। तथा च हरिणोक्तम् 'क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्। विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्' इति। परिनिष्पत्तिः सिद्धिः। यस्य व्यापारादनन्तरं क्रियासिद्धिर्वक्तुमिष्टा तत्करणं स्मृतमित्यर्थः। अत्र व्यापारादनन्तरमित्युक्ते करणव्यापारस्यावश्यकत्वमिति स्पष्टमेवोक्तं भवति। कर्तृव्यापारव्याप्यत्वेति। करणव्यापारो हि कर्तृसाध्यः। यथा छिदिक्रियायाः करणे कुठारे उद्यमननिपतनव्यापारं कर्ता साधयति। तथा च करणं कर्त्रा तत्प्रसाधितव्यापारद्वारा व्याप्तं भवत्येव। कर्त्रा किंचित्कार्यं क्रियते येन साधनेन तत्करणमिति करणशब्दव्युत्पत्तिः। तृतीययोपात्तमिति। उपपादितमेतत् (पृ. ३८ प. ४)। प्रत्ययार्थत्वेनेति। जुहुयादित्यत्राख्यातार्थभावनायाः प्रथमं साध्याकाङ्क्षायामिन्द्रियरूपफलस्य तत्र साध्यत्वेनान्वये ततस्तया विशिष्टायाः फलभावनायाः साधनाकाङ्क्षायां तत्र किं दध्नेत्यत्र प्रकृत्यर्थस्य दध्नः करणत्वेनान्वय उत तत्रत्यतृतीयाप्रत्ययार्थस्य दधिकरणत्वस्य करणत्वेनान्वय इति संदेहे तत्र प्रकृत्यर्थस्य प्रत्ययार्थोपसर्जनत्वेनोपस्थितस्य प्रत्ययार्थापेक्षया अप्राधान्याच्च तस्य फलभावनायां साधनत्वेनान्वयो युक्तः। किंतु प्रकृत्यर्थापेक्षया प्रधानस्य

दधिकरणत्वेनेन्द्रियं भावयेदिति वाक्यार्थः। करणत्वं च किंप्रतियोगिकमित्यपेक्षायां संनिधिप्राप्तो होम आश्रयत्वेन संबध्यते। ततश्च सिद्धो धात्वर्थस्याश्रयत्वेनान्वयः।

प्रकृतमनुसरामः। तत्सिद्धं धात्वर्थस्य न करणत्वेनैवान्वय इति। किं तर्हि क्वचित्करणत्वेन क्वचित्साध्यत्वेन क्वचिदाश्रयत्वेनेति। गुणविधौ साध्यत्वेनैवान्वयः संभवतीति न मत्वर्थलक्षणायाः प्रयोजनम्। किंच गुणविधौ

---

प्रत्ययार्थस्य करणत्वस्यैव करणत्वेनान्वयो युक्त इति भावः। नन्वेवं दध्ना जुहोतीत्यत्र गुणविधौ वचनान्तरेण प्राप्तं होममनूद्य तस्य साधनत्वेन दधि विधीयत इत्युक्तं न संगच्छते। उक्तरीत्या तत्रापि दधिकरणत्वस्य होमसाधनत्वेनान्वयौचित्यादिति चेन्नैवम्। द्वयोः संभवे हि तत्रौचित्यानौचित्यविचारो न तु तत्रैकस्यासंभवे। दध्नेन्द्रियकामस्येत्यत्र दधिकरणत्वमदृष्टद्वारेन्द्रियरूपफलभावनायाः साधनं संभवति। तच्च दध्नः करणत्वं किंनिरूपितमिति प्रतियोग्याकाङ्क्षायां जुहुयादिति हुधातुना हवनाक्षेपस्थापनाद्धवनक्रियानिरूपितमित्यवगम्यते। अतस्तत्र प्रत्ययार्थस्य फलभावनायां भवति करणत्वेनान्वयः। दध्नो यद्धोमीयं करणत्वं तेनेन्द्रियं भावयेदिति। दध्ना जुहोतीत्यत्र तु होमभावनायां साधनत्वेनान्वयो वक्तव्यः। स च दध्न एव संभवति। न तु दधिकरणत्वस्य। तथा सति होमसाधनत्वेनाभिमतं यद्दधिकरणत्वं तत्किंनिरूपितमित्येवं तादृशदधिकरणत्वस्यप्रतियोग्याकाङ्क्षायां प्रतियोगिभूतस्य क्रियान्तरस्य कस्याप्यत्रानुपस्थितत्वे नाकाङ्क्षाया अनुपरमात्। एवमधिकरणत्रयविरोधं प्रदर्श्य भावनायां धात्वर्थस्य करणत्वेनैवान्वय इति प्रागुक्तो (पृ. ३२ प. ८) नियमः खण्डितः। तथा च सोमेन यजेतेत्यत्र धात्वर्थस्य यागस्य भावनायां साध्यत्वेनान्वये न किंचिद्बाधकमिति तत्र भावनायां सोमस्य साधनत्वेनान्वय इति सोमपदे मत्वर्थलक्षणां विनापि वाक्यार्थः सिध्यतीति पूर्वपक्ष्याशयः। क्वचित्करणत्वेनेति। उद्भिदा यजेत पशुकाम इत्यत्र धात्वर्थस्य यागस्य प्रत्ययार्थभावनायां करणत्वेनान्वयः। दध्ना जुहोतीत्यत्र धात्वर्थस्य होमस्य प्रत्ययार्थभावनायां साध्यत्वेनान्वयः। दध्नेन्द्रियकामस्य जुहुयादित्यत्र धात्वर्थस्य होमस्य दध्नेति तृतीयान्तपदोपात्ते दधिकरणत्वे आश्रयत्वेनान्वय इति बोध्यम्। एवं सोमेन यजेतेत्यत्र मत्वर्थलक्षणामनङ्गीकुर्वता पूर्वपक्षिणा स्वमते लक्षणामन्तरेण वाक्यार्थमुपपाद्येदानीं मत्वर्थलक्षणां स्वीकुर्वतः सिद्धान्तिनो मते दोषमुपपादयति—किं च गुणविधाविति। अयमाशयः। पूर्वपक्षिणो मते सोमेन यजेतेत्यत्र मत्वर्थलक्षणा नास्ति। प्रत्ययार्थभावनायां धात्वर्थस्य यागस्य साध्यत्वेनान्वयः। सोमस्य च तत्र साधनत्वेनान्वयः। एवं च यागसोमयोः साध्यसाधनभावः पर्यवसन्नः। यागश्च हविःप्रक्षेपरूपः। तत्र सोमस्य साधनत्वं च हविष्ट्वेन रूपेण। तथा च सोमस्य यागाङ्गत्वं सिद्धम्। एवं दध्ना जुहोतीत्यादावपि दध्यादेर्होमाङ्गत्वं

मत्वर्थलक्षणायां गुणस्य धात्वर्थाङ्गत्वे किं मानमिति वक्तव्यम् । न तावच्छ्रुतिः । मत्वर्थलक्षणायां तृतीयाश्रुतिर्मत्वर्थस्यैवाङ्गत्वे मानं स्यात्, न गुणस्याङ्गत्वेऽपि । समभिव्याहारात्मकं वाक्यमिति चेत्तर्हि स्वतन्त्रमेव

---

बोध्यम् । सोमपदे मत्वर्थलक्षणायां तु भावनायां साध्यत्वेनान्वयः फलस्य साधनत्वेन च यागस्येति फलयागयोः साध्यसाधनभावो नतु यागसोमयोः । तथा च सोमस्य यागाङ्गत्वं नावगम्यते । केवलं लक्षणया सोमोऽस्ति यस्मिन्नित्यर्थे सोमस्य तत्र विद्यमानत्वमात्रमवगम्यते । तथा च सोमस्य हविष्ट्वेन रूपेण यागे उपयोगः कर्तव्य इत्यत्र किंचित्प्रमाणं नास्तीति दोष इति । ननु सोमेनेति तृतीयाश्रुतिस्तत्र प्रमाणम् । तृतीयाप्रत्ययो हि यस्याः प्रकृतेः सकाशात्परो दृश्यते तादृशप्रकृत्यर्थस्यान्याङ्गत्वं स तृतीयाप्रत्ययो बोधयति । अत्र च सोमेनेति तृतीयाप्रत्ययः श्रूयत इति सोमस्याङ्गत्वं सिध्येदिति चेत्--स्यादेतदेवं यदि सोमपदे लक्षणा न स्यात् । लक्षणया ह्यत्र सोमशब्दस्य सोमवानित्यर्थः संपन्न इति सोमवतो यागस्यास्तु नामान्याङ्गत्वबोधनं तृतीयया, नतु सोमस्य गुणस्येति । अथ सत्यामपि सोमपदे मत्वर्थलक्षणायां सोमशब्दार्थैकदेशस्यापि सोमस्य धात्वर्थयागाङ्गत्वे प्रमाणान्तरमस्तीति प्रदर्शयन्नाशङ्कते--<u>समभिव्याहारात्मकमिति</u> । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि विनियोजकानि षट्प्रमाणान्यग्रे विनियोगविधिसहकारिनिरूपणप्रसङ्गेन वक्ष्यन्ते । तत्र वाक्यनामकं तृतीयं प्रमाणम् । समभिव्याहारो वाक्यमिति वाक्यप्रमाणलक्षणम् । समभिव्याहारः सामीप्यम् । वाक्ये च तदन्तर्गतानां भागानां मिथः सामीप्यमस्त्येव । अतो वाक्यान्तर्गतस्यैकपदात्मकस्यानेकपदात्मकस्य वा कस्यचिद्भागस्य यत्सामर्थ्यं तत्सामर्थ्यं केवलसामीप्यरूपप्रमाणबलादेव तादृशवाक्यान्तर्गतस्य भागान्तरस्याप्यस्तीत्यनुमानेन कल्प्यते । सामर्थ्यमेव लिङ्गमित्यभिधीयते । तादृशेन कल्पितेन सामर्थ्यप्रमाणेन च स्वानुरूपा श्रुतिरनेन मन्त्ररूपेण वाक्येनामुकं कर्म कर्तव्यमित्येवं रूपा कल्प्यते । इयं च कल्पिता श्रुतिस्तत्र विनियोक्त्री । तया तस्य मन्त्रस्य विनियोगः । एवं वाक्यप्रमाणं, लिङ्गं श्रुतिं च कल्पयित्वा तद्द्वारा विनियोजकं भवति नतु स्वातन्त्र्येण । स्वातन्त्र्येण विनियोक्तृत्वस्य युक्तिरहितत्वेन वक्तुमशक्यत्वात् । एवं च वाक्यप्रमाणेन जायमानो विनियोगो द्व्यन्तरितो भवति । लिङ्गश्रुतिरूपेण प्रमाणद्वयेन व्यवहितत्वात् । द्वाभ्यामन्तरितो द्व्यन्तरितः । अन्तरितो व्यवहितः । एवं लिङ्गप्रमाणेन जायमानो विनियोगः श्रुतिं कल्पयित्वा तद्द्वारा जायत इत्येकान्तरितः । श्रुतिप्रमाणेन जायमानो विनियोगस्तु साक्षादेव जायत इत्यव्यवहित एव । प्रकरणादिप्रमाणेषु तु व्यवधानाधिक्यमेव । तत्र प्रकरणप्रमाणेन जायमानो विनियोगस्त्र्यन्तरितः । वाक्यलिङ्गश्रुतिभिस्त्रिभिः प्रमाणैर्व्यवहितत्वात् ।

मानमुत लिङ्गश्रुती कल्पयित्वा। नाद्यः। बलाबलाधिकरण-( जै. ३।३।१४ ) विरोधात्। तत्र हि वाक्यं लिङ्गश्रुती कल्पयित्वाऽङ्गत्वे मानमित्युक्तम्। द्वितीये प्रत्यक्षां श्रुतिमुत्सृज्य श्रुत्यन्तरकल्पने तस्या एव वा आवृत्तिकल्पने

---

स्थानप्रमाणेन जायमानो विनियोगश्चतुरन्तरितः। समाख्याप्रमाणेन जायमानो विनियोगः पञ्चान्तरित इति बोध्यम्। यथा यथा च प्रमाणस्य विनियोगे व्यवधानाधिक्यं तथा तथा तस्य दुर्बलत्वम्। विलम्बेन विनियोजकं यत्प्रमाणं तदपेक्षया शैघ्र्येण विनियोजकस्य प्रमाणस्य प्राबल्यं युक्त्यैव सिद्धं भवति। तदुक्तं जैमिनिना तृतीयाध्याये तृतीयपादे श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ( जै. सू. ३।३।१४ ) इति। समवायः संनिपातः। दुर्बलस्य भावो दौर्बल्यम्। ब्राह्मणादेराकृतिगणत्वाद्भावे ष्यञ्। परस्य दौर्बल्यं परदौर्बल्यम्। तदेव पारदौर्बल्यम्। विप्रकर्षो विलम्बः। श्रुत्यादीनां षण्णां प्रमाणानां मध्ये विरुद्धयोर्द्वयोस्त्रयाणां वा प्रमाणानामेकत्र समवाये संनिपाते पारदौर्बल्यमुत्तरोत्तरस्य पूर्वपूर्वापेक्षया दुर्बलत्वं भवति। अर्थस्य प्रमाणकार्यस्य विनियोगस्य विप्रकर्षाद्विलम्बात्। उत्तरप्रमाणं हि तदपेक्षया यावन्ति पूर्वप्रमाणानि तावन्ति क्रमेण परिकल्प्य तद्द्वारा विनियोगं बोधयति। तथा चैकत्रानेकप्रमाणसंनिपात उत्तरस्य पूर्वं बाधकं भवति। बाधश्चायमुत्तरप्रमाणस्य तत्राप्रवृत्तिरूपः। उत्तरप्रमाणेन स्वापेक्षया पूर्वाणि प्रमाणानि परिकल्प्य कंचिदर्थं क्वचिद्विनियोक्तुं प्रवृत्तेन यस्मिन्क्षणे विनियोगो भाव्यस्तस्मात्पूर्वक्षण एवोत्तरप्रमाणानपेक्षेण पूर्वप्रमाणेन स एवार्थः क्वचिदन्यत्र विनियुक्तो भवति। जाते च विनियोगे क्व विनियोग इत्याकाङ्क्षाया निवृत्तत्वात्तावत्कालपर्यन्तं तमर्थं विनियोक्तुं प्रवृत्तमप्युत्तरं प्रमाणं सद्य एव विरतव्यापारं भवति। अतस्तस्याप्रवृत्तिरिति। एतदेव बलाबलाधिकरणतात्पर्यम्। बलाबलाधिकरणं तु तृतीयाध्याये तृतीयपादे सप्तममिति बोध्यम्। द्वितीये प्रत्यक्षामिति। मत्वर्थलक्षणावादिनोऽयमभिप्रायः। सोमेन यजेतेत्यत्र सोमस्य यागाङ्गत्वं समर्थनीयम्। तच्चेत्थम्। सोमेन यजेतेत्यत्र वाक्ये सोमशब्दस्य यजधातोश्च समभिव्याहारेण सोमे यागोपयोगीभवनसामर्थ्यं कल्प्यते। तेन च सामर्थ्येन तत्रान्याङ्गत्वावबोधिका तृतीयान्यैव कल्प्यते। तया च कल्पितया सोमस्य यागाङ्गत्वं बोध्यते। यदि चात्रैवं मन्यसे सोमस्य तत्रान्याङ्गत्वं बोधनीयम्। तत्र च सोमशब्दादुत्पन्नां प्रत्यक्षतो दृश्यमानामङ्गत्वावबोधनसमर्थां तृतीयामुपेक्ष्य किमन्या कल्प्यते। गृहे विद्यमानं हितोपदेष्टारं पितरमुत्सृज्य श्वशुरान्वेषणं कुतः क्रियत इति। तर्हि सोमशब्दादुत्पन्नया प्रत्यक्षतो दृश्यमानयैव तृतीयाविभक्त्यास्तु सोमस्य यागाङ्गत्वविधानम्। अथ सोमशब्दस्य लक्षणया सोमविशिष्टार्थप्रतिपादकत्वात्सोमविशिष्टस्य स्वर्गादिफलाङ्गत्वमवबोध्य परिक्षीणा सा

व्यर्थः प्रयासः समाश्रितः स्यात् । विशिष्टविधौ चागत्या तदाश्रयणम् ।

किंच भवतु श्रुत्यन्तरकल्पनम् । तथापि तत्सहकृतः प्रत्यक्ष एव विधिर्धात्वर्थाङ्गत्वेन गुणं विधत्ते, उत कल्पितं विध्यन्तरम् । कल्पितमिति चेन्न । श्रुतविधेर्व्यर्थतापत्तेः । नहि तेन तदा गुणो विधीयते । कल्पितविध्यन्तराङ्गीकारात् । नापि धात्वर्थः । तस्य वचनान्तरेण विहितत्वात् ।

---

प्रत्यक्षतो दृश्यमाना तृतीयेति चेदस्तु नाम तस्या एव तृतीयाया आवृत्तिः । एका सोमवतः फलाङ्गत्वं बोधयेदपरा च सोमस्य यागाङ्गत्वं बोधयेदिति । पूर्वपक्षी तु मत्वर्थलक्षणामनङ्गीकुर्वन्नेवं मन्यते । नायं सिद्धान्तिनोभिप्रायो युक्तः । मत्वर्थलक्षणायां गृहीतायां सोमस्य यागाङ्गत्वं न सिध्यतीत्यतस्तदुपपत्तये कोयं प्रयासो भवतः । यद्वाक्यरूपप्रमाणान्तरेण लिङ्गश्रुतिकल्पनद्वारा सोमस्य यागाङ्गत्वोपपादनं सोमेनेति तृतीयाविभक्तेरावृत्त्या वा तदुपपादनम् । कोयमभिनिवेशो लक्षणायाम्—यत्तां कुर्वन् गृहीत्वैतावान्महाप्रयासः सोढव्यः । त्यजैनं दुराग्रहम् । मास्तु सोमशब्दस्य सोमविशिष्ट इत्यर्थः । भवतु च शक्यार्थस्यैव सोमस्य साधनत्वेन यागभावनायां संबन्धः । तथा च लक्षणा नास्ति, प्रमाणान्तरानुसरणं च नास्ति, तेन लिङ्गश्रुतिकल्पनं च नास्ति, तृतीयाया आवृत्तिश्च नास्ति । इष्टं सोमस्य यागाङ्गत्वं च तृतीयाश्रुत्यैव सिध्यतीति । विशिष्टविधावित्यिति । सोमेन यजेतेत्यत्र सोमशब्दस्य मत्वर्थ लक्षणया सोमविशिष्टयागविधानेस्वीकृते सोमस्य यागाङ्गत्वं न सिध्यतीत्यतो गत्यन्तराभावेनोक्तः प्रयासोवश्यमाश्रयितव्यः स्यात् इत्यर्थः ।

अथ स्वीकृतेपि प्रयासे सोमेन यजेतेत्यत्र न वाक्यार्थ उपपादयितुं शक्यत इत्याह-किंच भवत्विति । मत्वर्थलक्षणावादिना सोमस्य यागाङ्गत्वोपपत्तये वाक्यप्रमाणेन सामर्थ्यकल्पनाद्वारा या प्रकल्पिता सोमस्याङ्गत्वबोधिका तृतीयाश्रुतिस्तादृशश्रुतिप्रमाणं सहकारित्वेनादाय सोमस्य यागाङ्गत्वविधायको विधिरत्र किं सोमेन यजेतेति वाक्यघटकः प्रत्यक्ष एवोत सहकारिभूतश्रुतिप्रमाणवद्विधिरपि कल्पित एवेति कल्पद्वयम् । विध्यन्तरकल्पनापक्षे श्रौतेन विधिना किं विधीयते यागमुद्दिश्य तदङ्गत्वेन सोमो विधीयतेथवा स्वर्गरूपं फलमुद्दिश्य तत्साधनत्वेन धात्वर्थो यागो विधीयते । आद्ये पक्षे कल्पितेन विधिनैव यागमुद्दिश्य तदङ्गत्वेन सोमविधानाच्छ्रौतो विधिर्निष्प्रयोजनः स्यात् । द्वितीयपक्षेपि निष्प्रयोजन एव श्रौतो विधिः । ज्योतिष्टोमेन स्वर्गकामो यजेतेति वचनान्तरेणैव स्वर्गमुद्दिश्य तत्साधनत्वेन यागविधानात् । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्राधिकारविधेरुत्पत्तिविधेश्च पूर्वपक्षिणा स्वीकृतत्वात् । नहि तेनेति । तेन श्रौतेन विधिना तदा विध्यन्तरकल्पनापक्षे सोमरूपो गुणो यागाङ्गत्वेन न विधातुं शक्यत इत्यर्थः । अथ वाक्यप्रमाणेन सामर्थ्यकल्पना

अथ श्रूयमाण एव विधिः कल्पितश्रुतिसहकृतो धात्वर्थाङ्गत्वेन गुणं विधत्ते इति चेत् तर्हि तत्र कथं धात्वर्थस्यान्वयः । करणत्वेनेति चेन्न । अन्वयानुपपत्तेः । नहि संभवति दध्ना होमेनेति चान्वयः । साध्यत्वेनैवान्वयः–दध्ना होमं भावयेदिति चेत्–न । तथा सत्यनुवादेऽपि धात्वर्थः करणत्वेनैवान्वेतीत्येतदुपेक्षितं स्यात् । विवक्षितवाक्यार्थश्च विनैव मत्वर्थलक्षणयाङ्गीकृतः स्यात् । तस्मान्न गुणविधौ मत्वर्थलक्षणा ।

यत्तु 'विधाने वानुवादे वा' इति वार्तिकं, तत्प्रतीतिमवलम्ब्य, न वस्तुगतिम् । तथाहि—यावद्धि अग्निहोत्रं जुहुयादिति वाक्यं नालोच्यते, केवलं दध्ना जुहोतीति वाक्यमालोच्यते, तदा षष्ठाद्यन्यायेन होमस्याभाव्यतां जानतां प्रतिपदाधिकरणभावार्थाधिकरणवासनावासितान्तःकरणानां भवत्येता-

द्वारा कल्पितां तृतीयाश्रुतिं सहकारित्वेनादाय श्रौत एव विधिः सोमस्य यागाङ्गत्वविधायक इति द्वितीयं कल्पमनूद्य दूषयति–अथ श्रूयमाण इति । इत्येतदिति । विधाने वानुवादे वा इत्यादिवार्तिकमूलकमनुवादेऽपि धात्वर्थः करणत्वेनैवान्वेतीत्येतत्त्वयाङ्गीकृतमिदानीं त्यक्तं स्यादित्यर्थः । इदानीं मत्वर्थलक्षणावादिना स्वसाधकत्वेन प्राक् (पृ. ३२ प. ८) प्रदर्शितं विधाने वानुवादे वेत्यादिवार्तिकमभिप्रायान्तरेण योजयति–यत्तु विधान इति । वाक्यान्तरतो जायमाना या प्राथमिकी प्रवृत्तिस्तदनुसारेण वार्तिककृता विधाने वानुवादे वेत्याद्युक्तम् । वस्तुतो या गतिरन्वयप्रकारो वाक्यान्तरालोचनपूर्वकं निश्चितः साधनत्वसाध्यत्वादिः पार्यन्तिकस्तदनुसारेण न प्रवृत्तमित्यर्थः । केवलं दध्नेति । वाक्यार्थबोधे हि वाक्यघटकीभूतपदपदार्थज्ञानं कारणं नतु वाक्यान्तरालोचनं तत्र कारणम् । वाक्यान्तरालोचनाभावे वाक्यार्थबोधप्रतिबन्धस्यादृष्टत्वादनुपपन्नत्वाच्च । अतस्तस्यामवस्थायां कीदृशो वाक्यार्थो भवतीत्येतदत्रोपपाद्यते । षष्ठाद्यन्यायेनेति । प्रागुपपादितमेतत् (पृ. ३४ प. १) । प्रतिपदाधिकरणेति । द्वितीयाध्याये प्रथमपादे प्रथमाधिकरणे वर्णकद्वयम् । तत्राद्यवर्णकानुसारेण तदधिकरणं प्रतिपदाधिकरणमित्युच्यते । द्वितीयवर्णकानुसारेण तदधिकरणं भावार्थाधिकरणमित्युच्यते । तत्राद्ये वर्णके प्रतिपदमपूर्वप्रतिपादनमथवा केनचिदेकेनैव पदेनेति विचार्यते । पदं पदं प्रतिपदम् । यजेत स्वर्गकाम इत्यत्र यागेन स्वर्गं भावयेदिति यागस्य क्रियाविशेषरूपस्याशुतरविनाशित्वात्तस्य स्वर्गसाधनत्वं न संभवतीत्यतो यागजन्यं किंचिदपूर्वं फलकालावस्थायि कल्प्यते । यागेन स्वर्गं भावयेदित्यस्य यागजन्यापूर्वेण स्वर्गं भावयेदित्यर्थः फलितः । तथा च यथा यागस्यापूर्वद्वारा फलेन संबन्धस्तथा विधिवाक्यान्तर्गतपदान्तराणामपि सोमेन दध्नेत्यादीनामपूर्व-

प्रतिपादकत्वं प्रकल्प्य तादृशापूर्वद्वारा फलेन संबन्धो भाव्यः। न च पदान्तराणां सोमेनेत्यादीनां क्रियाकारकभावेन जायमानं मिथः संबन्धमनादृत्य कथं तेषां फलेन सह संबन्ध उच्यत इति वाच्यम्। फलं हि सर्वापेक्षया प्रधानम्। तेन च प्रधानेन सह संबन्धे संभवति सति तेषां पदान्तराणामप्रधानेन सह संबन्धस्य वक्तुमनुचितत्वात्। एवं पूर्वपक्षं कृत्वा एकस्यैव करणत्वेन फलभावनायामन्वय इति सिद्धान्तितम्। भावनाकरणत्वं च भावनाया भाव्यं यत्स्वर्गादिफलं तदुत्पादकत्वेन भवति। स्वर्गादिफलोत्पादनं च दृष्टद्वारा न संभवतीत्यतस्तत्रादृष्टं किंचिदपूर्वं मध्ये द्वारभूतं कल्पनीयम्। तच्च लाघवादेकत्रैव पदार्थे कल्पनीयं नतु सर्वेषु पदार्थेष्विति प्रतिपदाधिकरणसिद्धान्तः। यच्चेदमपूर्वं लाघवादेकत्रैव कस्मिंश्चिद्विधिवाक्यघटकपदार्थे कल्पनीयमित्युक्तं तत्किं धात्वर्थेऽथवान्यत्र द्रव्यादिष्विति विचारो भावार्थाधिकरणे कृतः। सोमेन यजेत हिरण्यमात्रेयाय ददातीत्यत्र सोमो हिरण्यं च द्रव्यम्। सुवर्णं हिरण्यं धार्यमित्यत्र सुवर्णत्वं हिरण्यस्य गुणः। सुवर्णं शोभनवर्णमिति तदर्थात्। एवं द्रव्यगुणादिशब्दैस्तत्तदपूर्वप्रतिपादने सोमापूर्वेण फलं भावयेद्धिरण्यापूर्वेण फलं भावयेत्सुवर्णापूर्वेण फलं भावयेदित्येवं प्रतिवाक्यं कस्यचिदेकस्य द्रव्यादेरपूर्वद्वारा फलभावनायां संबन्धः स्यात्। द्रव्यादेः सिद्धवस्तुत्वात्। सिद्धं निष्पन्नम्। नतु धात्वर्थस्य फलभावनायां संबन्धः। धात्वर्थस्य यागहोमादेरसिद्धत्वात्। भूतं हि भव्यायोपदिश्यते इति न्यायः। भूतं सिद्धं वस्तु। भव्यं भावनाभाव्यं स्वर्गादिफलम्। सिद्धं वस्तु किंचिन्निर्दिश्य तेनेदं फलं साधनीयमित्युपदेशो युज्यते। नत्वासिद्धं किंचिन्निर्दिश्य तथोपदेशो युक्तः। एवं पूर्वपक्षं कृत्वा फलभावनायां धात्वर्थस्यैव साधनत्वेनान्वय इति सिद्धान्तितम्। भावना हि यजेतेत्यादौ प्रत्ययार्थः। तस्मिन्नेव यजेतेत्यादिपदे प्रकृत्यंशेन यागादेर्धात्वर्थस्योपस्थितिः। अतः प्रत्ययवाच्यभावनायाः साधनाकाङ्क्षायां समानपदोपात्तत्वेन शीघ्रोपस्थितिकत्वाद्धात्वर्थस्यैव फलभावनायामन्वयो नतु पदान्तरोपात्तस्य सोमादिद्रव्यादेः। एतादृशमेव च शीघ्रोपस्थितिमूलकं पदश्रुतेर्बलीयस्त्वम्। यद्यपि यागहोमादिधात्वर्थो न सिद्धस्तथापि तं निष्पाद्य सिद्धं कृत्वा तेन फलं भावयेदित्युपदेशो युज्यत एवेति न काचिदनुपपत्तिः। एवं च धात्वर्थस्यैव फलभावनायामन्वय इति सिद्धम्। तथा च जैमिनेः सूत्रम्--भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेतैष ह्यर्थो विधीयते (जै. सू. २।१।१) इति। कर्मशब्दाः कर्मप्रतिपादका यजेतेत्यादिषु यजादयो धातवः। ते भावार्थाः। भावः प्रत्ययार्थो भावनासामान्यम्। तदर्थास्तद्विशेषस्वरूपनिश्चायकत्वेन तदर्थाः। यागादिविशेषार्थको यजादिधातुर्हि दानहोमादीतरभावनातः प्रत्ययार्थं व्यावर्तयन्भावार्थो भवति। तेभ्यश्च क्रिया--अपूर्वोत्पत्तिरूपा प्रतीयेत। यत एष यागाद्यर्थो विधीयत इति सूत्रार्थः। अत एवैतदधिकरणं भावार्थाधि-

दृशी मतिः यदग्निमता होमेनेष्टं भावयेदिति । प्रतिपदाधिकरणे (जै. २।१।१) हि सोमेन यजेतेत्यादिषु किं गुणधात्वर्थयोः फलभावनाकरणत्वेनान्वयः, उत एकस्यैवेति संदिह्य प्रधानसंबन्धलाभाद्, विनिगमनाविरहाच्च सर्वेषां फलभावनाकरणत्वेनान्वयमाशङ्क्य लाघवादेकस्यैव फलभावनाकरणत्वमित्युक्तम् । भावनाकरणत्वं हि भावनाभाव्यनिर्वर्तकतया । भाव्यं च स्वर्गादि नादृष्टमन्तरेणेति अनेकेषां करणत्वेऽनेकादृष्टकल्पनाप्रसङ्गात् । तस्मादेकस्यैव करणत्वम् ।

यदाप्येकस्य तदापि किं द्रव्यगुणयोः फलभावनाकरणत्वम्, उत धात्वर्थस्येति भावार्थाधिकरणे (जै. २।१।१) संदिह्य द्रव्यगुणयोरेव भावनाकरणत्वम्, 'भूतं भव्यायोपदिश्यते' इति न्यायादित्याशङ्क्य धात्वर्थस्यैव भावनाकरणत्वम्, पदश्रुतेर्बलीयस्त्वादित्युक्तम् । अतश्च सिद्धमेतद्वाक्यान्तरानालोचनदशायां गुणविधावपि धात्वर्थस्य करणत्वाशङ्कायां गुणपदे मत्वर्थलक्षणेति ।

---

करणमित्युच्यते । एवं यागप्रथमाधिकरणेन स्वर्गादेरेव साध्यत्वं न धात्वर्थस्येति धात्वर्थस्य साध्यत्वे निराकृते साधनत्वं प्राप्तम् । तच्च साधनत्वं प्रतिपदाधिकरणेन न सर्वेषां किंत्वेकस्यैवेति निश्चितम् । भावार्थाधिकरणेन च तत्साधनत्वं धात्वर्थस्यैवेति निश्चितम् । एवमधिकरणत्रयसिद्धान्तिता अर्था यस्य बुद्धावारूढाः स यदि वाक्यान्तराण्यनालोच्य प्रथमत एव दध्ना जुहोतीत्येतद्वाक्यार्थं कर्तुं प्रवृत्तश्चेत्तत्र धात्वर्थस्य फलभावनायां साधनत्वेनान्वयं कुर्यात् । दध्नेत्यादेर्लक्षणया धात्वर्थवाचित्वं च स्वीकुर्यादेव । तथा चैतदभिप्रायेण विधाने इत्यादिवार्तिकं प्रवृत्तं न तु वस्तुतत्त्वकथनं तदिति पूर्वपक्ष्याशयः ।

अन्ये तु विधाने वानुवादे वेत्यादिवार्तिकस्येत्थमाशयं वर्णयन्ति । अग्निहोत्रं जुहोतीत्यत्र होमस्य विधानम् । दध्ना जुहोतीत्यत्र होमस्यानुवादः । उभयत्रापि धात्वर्थः करणमिष्यते । नन्वग्निहोत्रं जुहोतीत्यत्र विधिस्थले अग्निहोत्रहोमेनेष्टं भावयेदित्येवं धात्वर्थस्य करणत्वमस्तु । दध्ना जुहोतीत्यत्रानुवादस्थले न धात्वर्थस्य करणत्वम् । तत्र हि होममनूद्य तत्र दधिरूपगुणविधानेन दध्ना होमं भावयेदिति वाक्यार्थ इति चेत्—उच्यते । जुहोतीत्येतत्क्रियापदस्थप्रत्ययवाच्या या विधिशक्तिः सा तादृशप्रत्ययप्रकृतिभूतधातूपस्थाप्येऽर्थे एव संबन्धुमर्हति । प्रत्यासत्तेः । न तु पदान्तरोपस्थापिते दध्यादौ गुणे । तस्य धात्वर्थापेक्षया विप्रकृष्टत्वात् । न च होमस्य वचनान्तरेण प्राप्तत्वात्तत्र विधिशक्तेः संबन्धो न संभवतीति वाच्यम् । केवले होमे तदसंभवेऽपि दधिविशिष्टे होमे तत्संभवात् । तत्र च प्राप्ताप्राप्तविवेकन्यायेन विशेष्यभूते होमांशे विधि-

यदा त्वग्निहोत्रं जुहोतीति होमविधायकं वाक्यान्तरमालोच्यते तदा होमस्य वाक्यान्तरेणैव विहितत्वात्तदुद्देशेन गुणमात्रं विधीयते इत्यालोचनान्न मत्वर्थलक्षणेति । अत एवोक्तं पार्थसारथिमिश्रैराघाराग्निहोत्राधिकरणे ( जै. २।२।१३) 'फलतो गुणविधिरयं न प्रतीतितः' (शास्त्रदीपिका २।२ अधि. ५) इति ।

---

शक्तिर्बाधिता सती विशेषणीभूते दध्यंशे पर्यवसिता भवति। विधिप्रतिषेधौ विशेषणे पर्यवस्यतः सति विशेष्ये बाधे, इति न्यायादित्यन्यदेतत् । दध्नो होमविशेषणत्वं च दधिशब्दस्य दधिमदित्यर्थेन संभवति । दधिमांश्च धात्वर्थो होम एवेति दधिमदर्थकदधिशब्दादुत्पन्नया तृतीयाविभक्त्या बोधितं करणत्वं धात्वर्थस्यैवेत्यतोऽनुवादेऽपि धात्वर्थः करणमिष्यत इति युक्तमुक्तम् । तादृशविधिबोधकप्रत्ययान्तक्रियापदसमीपे उच्चारितस्तृतीयान्तो दध्नेत्यादिशब्दस्तद्वाचित्वं क्रियावाचित्वं न मुञ्चति । तत्र यागविशेषनामधेयानामुद्भिदा यजेत चित्रया यजेतेत्यादावुद्भिदा चित्रयेत्यादीनां तृतीयान्तानां शब्दानां क्रियावाचित्वमस्त्येव । दध्ना सोमेनेत्यादीनां गुणवाचिनां तृतीयान्तानां शब्दानां तु मत्वर्थलक्षणया क्रियावाचित्वमिति वार्तिकार्थः । दध्ना जुहोतीत्यत्राग्निहोत्रं जुहोतीत्येतद्वाक्यान्तरालोचनदशायामप्ययमर्थः संभवति । तथा च वाक्यान्तरानालोचनदशायां वार्तिककारैस्तथा वर्णितमिति कल्पना न कर्तव्या भवति । किं च वाक्यान्तरानालोचनदशायां वार्तिकं प्रवृत्तमिति कल्पनायामपि विधाने वानुवादे वेत्यत्रानुवादे इति यद्वार्तिककृद्भिरुक्तं तन्न संगच्छते । वाक्यान्तरालोचने ह्यनुवादसंभवः। वाक्यान्तरानालोचने तु सर्वत्र धात्वर्थस्य विधानमेव न क्वचिदप्यनुवाद इति अनुवादे वेत्यस्योदाहरणमेव न संभवति । अतोऽनुवादे इत्यस्य वस्तुतोऽनुवादे इत्यर्थो वक्तव्यः । वाक्यान्तराण्यालोच्य क्रियमाणे वाक्यार्थे योऽनुवाद इति निश्चितो भवति स वस्तुतोऽनुवादः । एवं योजनायामपि क्लेश एव । फलतो गुणविधिरिति वदतां पार्थसारथिमिश्राणामयमेवाशय इति।

पार्थसारथिमिश्रैरिति । पार्थसारथिमिश्रैश्च शास्त्रदीपिकायामेवमुक्तम् । यद्यपि न क्रियां विहाय द्रव्ये विधिः प्रतीयते तथापि तस्यामेव विशिष्टायां प्रतीयमानो विधिः स्वरूपेण तस्याः प्राप्तत्वादप्राप्तगुणमात्रपरतामवलम्बमानः फलतो गुणविधिरित्युच्यते न प्रतीतितः ( शा. दी० २।२। अधि. ५ ) इति । आघाराग्निहोत्रेति । द्वितीयाध्याये द्वितीयपादे पञ्चममधिकरणमिदम् । अधिकरणतात्पर्यमित्थम् । तैत्तिरीयसंहितायां द्वितीयाष्टके पञ्चमप्रपाठके एकादशानुवाके आघारमाघारयति...ऋजुमाघारयति......संततमाघारयति ( तै. सं. २।५।११।६–७ ) इति श्रूयते । क्षरद्घृतमाघार इति जैमिनीयन्यायमालायामुक्तम् । धारारूपेण घृतस्य क्षारणमाघारणम् । ऋजुमवक्रम् । संततमविच्छि-

त्नम्। तथा तैत्तिरीयसंहितायां प्रथमाष्टके पञ्चमे प्रपाठके नवमेनुवाके अग्निहोत्रं जुहोति ( तै. सं. १।५।९।१ ) इति श्रूयते। अन्यत्र च दध्ना जुहोति पयसा जुहोति ( तै. ब्रा. २।१।५ दध्यादि होमा उक्ताः ) इति पठ्यते। आघारशब्दोऽग्निहोत्रशब्दश्च कर्मनामधेयम्। तत्राघारमाघारयतीति वाक्येनापूर्वं कर्म किंचिद्विधीयतेऽथवा ऋजुमाघारयति संततमाघारयतीत्यादिवाक्यैर्विहितं कर्मानूद्यत इति संशयः। एवमग्निहोत्रं जुहोतीति वाक्येनाप्यपूर्वं कर्म किंचिद्विधीयतेऽथवा दध्ना जुहोति पयसा जुहोतीत्यादिवाक्यैर्विहितं कर्मानूद्यत इति संशयः। अत्र पूर्वपक्षः। आघारमाघारयतीत्यत्राग्निहोत्रं जुहोतीत्यत्र च नापूर्वं कर्म विधीयते। यागरूपस्य तत्राश्रवणात्। यागस्य हि द्वे रूपे द्रव्यं देवता च। आघारमाघारयतीत्यत्राग्निहोत्रं जुहोतीत्यत्र च न द्रव्यं निर्दिश्यते नापि देवता निर्दिश्यते। अतस्तत्र वाक्यान्तरविहितस्य कर्मणोऽनुवाद एवेति। सिद्धान्तस्त्वाघारमाघारयतीत्यत्राग्निहोत्रं जुहोतीत्यत्र च विधिरेवाश्रयितव्यो नत्वनुवादः। अनुवादाङ्गीकारे हि ऋजुमाघारयतीत्यादिवचनान्तरेषु तथा दध्ना जुहोतीत्यादिवचनान्तरेषु विधिः स्वीकर्तव्यः स्यात्। तत्र च ऋजुत्वादेर्दध्यादेश्च गुणमात्रस्य विधानमिति तु पूर्वपक्षिमते सुतरां न संभवति। गुणिनमनूद्य हि गुणो विधेयो भवति। अनुवादश्चान्यत्र विहितस्यैव। तच्च विधानं पूर्वपक्षिमतेऽन्यत्र नास्ति। आघारमाघारयति अग्निहोत्रं जुहोतीत्यत्र च नापूर्वं किंचिद्विधीयत इति तेनोक्तत्वात्। अथ ऋजुमाघारयतीत्यादिषु दध्ना जुहोतीत्यादिषु च वचनान्तरेषु गुणविशिष्टस्य गुणिनो विधानमिति चेत्किमर्थमयं गुरुभूतविधेयाश्रयणप्रयासः। यत्र च तादृशप्रयासं विना प्रकारान्तरेण गतिर्न संभवति तत्रागत्या तादृशः प्रयासः सोढव्यो भवति। प्रकृते चाघारमाघारयतीत्यत्राग्निहोत्रं जुहोतीत्यत्र च कर्मविधाने स्वीकृते ऋजुमाघारयतीत्यादिषु दध्ना जुहोतीत्यादिषु च केवलं गुणविधानमेवेति न गौरवम्। यद्यप्याघारमाघारयतीत्यत्राग्निहोत्रं जुहोतीत्यत्र च न द्रव्यं देवता वा निर्दिश्यते तथापि तत्र वचनान्तरादाज्यं दध्यादि च लब्धुं शक्यम्। देवता तु मन्त्रार्थानुसंधानाल्लब्धुं शक्येति। अस्मिन्नधिकरणे पार्थसारथिमिश्रैरुक्तं दध्ना जुहोतीत्ययं प्रतीतितो न गुणविधिः किं तु फलतो गुणविधिरिति। प्रतीतित इत्यस्य तद्वाक्यमात्रालोचनजन्यप्राथमिकशाब्दप्रतीतित इत्यर्थः। तस्यां चावस्थायां गुणविशिष्टस्य कर्मणो विधिराश्रयितव्यो भवतीति न गुणमात्रविधिः संभवति। गुणविधिरित्यस्य गुणमात्रविधिरित्यर्थः। फलतो गुणविधिरित्यस्य वाक्यान्तरालोचनजन्यवाक्यार्थनिर्णये सति गुणमात्रविधिः फलितो भवतीत्यर्थः।

ननु वार्तिककृतां कुमारिलभट्टाचार्याणामीदृशाभिप्रायवर्णनं न युक्तम्। न हि तादृशा निबन्धकारा वाक्यान्तराण्यनालोच्यैव कंचिदर्थं सिद्धवत्कृत्य वक्तुं

यद्वा एतद्वार्तिकमधिकारविध्यभिप्रायम् । उद्भिदा यजेत (ता. ब्रा. १९।७।२) इत्यादीनामधिकारात् । तत्र हि यागो विधीयताम्, उत्पत्तिवाक्यसिद्धो वानूद्यताम् उभयथापि धात्वर्थस्य करणत्वेनान्वयात् तृतीयान्तस्य तद्वाचित्वम् । अन्यथान्वयानुपपत्तेरिति । तस्माद् गुणविधौ विनापि लक्षणा-

---

प्रवर्तन्त इत्यरुचेराह-यद्वेति । उद्भिदधिकरणे हि वार्तिककारैर्विधाने वानुवादे वेत्याद्युक्तम् । प्रथमाध्याये चतुर्थपादे द्वितीयमुद्भिदधिकरणम् । उद्भिदा यजेत पशुकामः (ता. ब्रा. १९।७।२) इति तत्र विषयवाक्यम् । तादृशवाक्यस्य प्रारम्भे उद्भिच्छब्द इत्येतदधिकरणमुद्भिदधिकरणमित्युच्यते । तच्च वाक्यमधिकारविधिः । तत्र पशुकाम इति फलनिर्देशेन पशुकामस्य तादृशयागविशेषेधिकारबोधनात् । अधिकारविधौ च प्रत्ययवाच्यभावनायां साध्यत्वेन संबन्धः फलस्यैव भवति नत्वन्यस्य कस्यचित् । फलस्य सुखतरसाधनान्यतरत्वेन पुरुषार्थत्वात् । अतस्तत्र धात्वर्थस्य यागादेर्भावनायां साध्यत्वेनान्वयः कुतो नेत्येवं शङ्का लेशतोपि नोदयमासादयति । तथा च तत्र धात्वर्थस्य भावनायां साधनत्वेनैवान्वय इत्यवश्यमेव स्वीकार्यम् । तत्र च धात्वर्थस्य यागादेर्वचनान्तरेणाप्राप्तत्वाद्विधानं वास्तु वचनान्तरेण प्राप्तत्वादनुवादो वास्तु न तत्कृतं किंचिदप्यन्यथात्वं धात्वर्थस्य भावनायां साधनत्वान्वये । तदेतदुक्तं वार्तिककृद्भिर्विधाने वानुवादे वा यागः करणमिष्यत इति । एतादृशश्च यत्र वाक्ये धात्वर्थस्य भावनायां साधनत्वेनान्वयो निश्चितस्तादृशेधिकारवाक्ये तृतीयान्त उद्भिदादिः शब्दो विद्यते चेत्तस्य धात्वर्थेन्वयायोद्भिच्छब्दस्य मत्वर्थलक्षणया वा नामधेयत्वाङ्गीकारेण वा भावनाकरणीभूतधात्वर्थवाचित्वमवश्यमभ्युपेयम् । एतदेवोक्तं वार्तिककृद्भिस्तत्समीपे तृतीयान्तस्तद्वाचित्वं न मुञ्चतीति । न च मास्तु धात्वर्थे तस्यान्वयः किंतु पार्थक्येनैव भावनायां साधनत्वेनान्वयोस्त्विति वाच्यम् । समानपदोपात्तत्वेन शीघ्रोपस्थितिकत्वाद्धात्वर्थस्य प्रत्ययवाच्यभावनायां साधनत्वेनान्वये वृत्ते साधनांशे भावनाया निराकाङ्क्षत्वेन तत्र तृतीयान्तपदार्थान्वयायोगात् । तथा च तस्य धात्वर्थे एवाभेदेनान्वयो वाच्यः । तत्र चोद्भिद्यतेनेनेत्युद्भिदित्यवयवशक्त्या भूमिविलेखनसाधनं खनित्राद्युद्भिच्छब्देनोच्यते । तादृशोद्भिद्वता यागेन पशुं भावयेदित्येवं यद्युद्भिद्विशिष्टयागविधिः स्वीक्रियते तर्ह्युद्भिच्छब्दे मत्वर्थलक्षणाप्रसङ्गः स्यात् । अतस्तत्र विशिष्टविधिपक्षं परित्यज्योद्भिच्छब्दो यागविशेषनामधेयमिति तदधिकरणे सिद्धान्तितम् । एवं चाधिकारविध्यभिप्रायेण वार्तिककृद्भिर्विधाने वानुवादे वेत्याद्युक्तमिति न तदनुसारेण सोमेन यजेतेत्यत्र सोमेनेति तृतीयान्तस्य धात्वर्थवाचित्वं वक्तुं शक्यम् । सोमेन यजेतेत्यस्याधिकारविधित्वाभावात् । धात्वर्थवाचित्वानावश्यकत्वे च मत्वर्थलक्षणां विनैव सोमेन

मन्वयेोपपत्तेर्न मत्वर्थलक्षणेति । अतश्च सोमेन यजेतेत्यत्र न विशिष्टविधानम् । किंतु गुणमात्रविधानम् । यागस्तु ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यस्मिन्वाक्ये विधीयते इत्येव युक्तम् । अन्यथा मत्वर्थलक्षणापत्तेरिति ।

अत्रोच्यते ।

---

यागं भावयेदित्येवं यागमुद्दिश्य सोमरूपगुणमात्रविधानेन वाक्यार्थोपपत्तिर्भवतीति पूर्वपक्ष्याशयः ।

एवं 'नन्वेवमपि' ( पृ. ३० प. १ ) इत्यादिना 'मत्वर्थलक्षणापत्तेः' ( पृ. ५३ प. ३ ) इत्यन्तेन महता ग्रन्थसंदर्भेण पूर्वपक्षिणा स्वमतानुसारेण पूर्वपक्ष उद्घाटितः । वादे हि द्वयोरपि पक्षयोः साधकबाधकप्रमाणविचारो भवति । तत्र वादिनः प्रतिवादिनश्च कर्तव्यचतुष्टयम् । प्रथमतः स्वपक्षसाधकोपन्यासः (१) ततः परपक्षसाधकनिरासः (२) ततः परपक्षबाधकोपन्यासः (३) ततः स्वपक्षबाधकनिरासः (४) श्चेति । एतच्चतुष्टये चायमेव क्रमो युक्तिसिद्धः । अनेनैव च क्रमेणात्र पूर्वपक्षिणा स्वकीयः पूर्वपक्ष उदीरितः । तत्रादौ नन्वेवमपि ( पृ. ३० प. १ ) इत्यादिना यागं भावयेदिति ( पृ. ३२ प. ६ ) इत्येतदन्तेन ग्रन्थेन मत्वर्थलक्षणानङ्गीकारमूलकं लाघवं साधकत्वेनोपन्यस्तम् । ततः नन्वनुवादे ( पृ. ३२ प. ७ ) इत्यादिना न मत्वर्थलक्षणायाः प्रयोजनम् ( पृ. ४३ प. ६ ) इत्यन्तेन ग्रन्थेन परपक्षसाधकस्य विधाने वानुवादे चेत्यादिवार्तिकस्य तद्विरुद्धोदाहरणप्रदर्शनेनासाधकत्वमुपपादितम् । ततः किं च गुणविधौ (पृ. ४३ प. ६ ) इत्यादिना मत्वर्थलक्षणा ( पृ. ४७ प. ६ ) इत्यन्तेन ग्रन्थेन सोमयागयोरङ्गाङ्गिभावाप्रतिपत्तिरूपं परपक्षे बाधकमुपन्यस्तम् । ततो यत्तु विधाने ( पृ. ४७ प. ७ ) इत्यारभ्य मत्वर्थलक्षणापत्तेरिति ( पृ. ५३ प. ३ ) इत्यन्तेन स्वपक्षे बाधकस्य वार्तिकस्याभिप्रायान्तरवर्णनेनाबाधकत्वमुपपादितमिति बोध्यम् ।

अथेदानीमेतं पूर्वपक्षं दूषयितुमुपक्रमते-<u>अत्रोच्यत इति</u> । अत्र च पूर्वपक्षिण इव सिद्धान्तिनोपि कर्तव्यचतुष्टयं समापतति । परंतु तत्र पूर्वपक्षिणा विधाने वानुवादे चेत्यादिवार्तिकस्य सामान्यतो विधिवाक्यमात्रविषयत्वाङ्गीकारेधिकरणत्रयविरोधोद्भावनं कृतं यच्चाग्रे तद्वार्तिकमुद्भिदधिकरणस्थमित्यतः प्रकरणानुरोधेनाधिकारवाक्यमात्रविषयं तदित्येवं वार्तिकाभिप्रायवर्णनं कृतं तत्तथैवेति न तद्विषये सिद्धान्तिना किंचिदुच्यते । यच्च सोमयागयोरङ्गाङ्गिभावाप्रतिपत्तिरिति बाधकं पूर्वपक्षिणोपन्यस्तं तद्विषयेप्युक्तप्रायमेव । समभिव्याहारात्मकवाक्यप्रमाणेन लिङ्गश्रुती कल्पयित्वा तद्द्वारा सोमस्य यागाङ्गत्वमित्युक्तत्वात् । कल्पितश्रुतिवत्तादृशश्रुतिसहकृतोङ्गत्वबोधको विधिरपि तत्र कल्पित एव गृह्यते न तु प्रत्यक्षः । ननु 'कल्पितमिति चेन्न, श्रुतविधिर्व्यर्थतापत्तेः'

यद्यपि यागोद्देशेन सोमविधौ न मत्वर्थलक्षणा, तथापि यागस्याप्राप्तत्वात्सोमेन यजेतेत्यत्र न यागोद्देशेन सोमविधानं संभवति। न च ज्योतिष्टोमेनेत्यादिना यागस्य प्राप्तत्वात्तदुद्देशेन गुणमात्रं विधीयत इति वाच्यम्। तस्याधिकारविधित्वेनोत्पत्तिविधित्वानुपपत्तेः। कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः। तेन च विहितस्य कर्मणः फलविशेषसंबन्धमात्रमधिकारविधिना क्रियते। फलविशेषसंबन्धबोधकस्याधिकारविधित्वात्। यथा आग्नेयोऽष्टाकपालो भवतीत्येतद्विहितस्य कर्मणः फलविशेषसंबन्धमात्रं दर्शपूर्णमा-

---

(पृ. ४६ प. ३, ४) इति पूर्वपक्षिणा दूषणमुक्तमिति चेत्सत्यमुक्तम्। किं तु पूर्वपक्षिणा स्वमतानुसारेण तथोक्तम्। पूर्वपक्षी हि सोमेन यजेतेत्यत्र सोमेन यागं भावयेदित्येवं यागोद्देशेन सोमविधानं वाक्यार्थतया मन्यते। सिद्धान्ती तु सोमपदे मत्वर्थलक्षणया सोमविशिष्टयागविधानं वाक्यार्थतया मन्यते तथा च श्रौते विधौ सोमविशिष्टयागो विधेयः। कल्पिते विधौ तु यागाङ्गत्वेन सोमो विधेय इति न श्रुतविधेर्वैयर्थ्यम्। तदेतद्ध्वनयन्मत्वर्थलक्षणानङ्गीकारमूलकं लाघवं पूर्वपक्षिणा स्वमतसाधकत्वेनोपन्यस्तं दूषयंश्चाह—<u>यद्यपीति</u>। <u>तस्याधिकारविधित्वेनेति</u>। ज्योतिष्टोमेन स्वर्गकामो यजेतेति वाक्ये स्वर्गकामपदश्रवणेन तस्याधिकारविधित्वनिर्णयादिति भावः। <u>कर्मस्वरूपेति</u>। द्रव्यं देवता चेति द्वयं कर्मणः स्वरूपम्। तन्मात्रबोधकत्वं ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र नास्ति। द्रव्यदेवताव्यतिरिक्तस्य स्वर्गरूपस्य फलस्य स्वर्गकामपदेन बोधनात्। अतस्तस्य नोत्पत्तिविधित्वसंभवः। न च सोऽधिकारविधिरस्तु। स एव चोत्पत्तिविधिरपि भवतु। तथा हि ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यस्याधिकारविधित्वं तदन्तर्गतस्य च ज्योतिष्टोमेन यजेतेत्यस्य भागस्यावृत्तिं प्रकल्प्य वाक्यभेदेन संबन्धं स्वीकृत्य तस्योत्पत्तिविधित्वं चोपपादयितुं शक्यते। आवर्त्यमाने च ज्योतिष्टोमेन यजेतेति भागे द्रव्यदेवताव्यतिरिक्तस्य कस्यचिदनिर्देशात्कर्मस्वरूपस्यात्र बोधकत्वं वर्तत एव। तथा चैवमुत्पत्तिविधित्वाङ्गीकारे न किंचिद्बाधकमिति चेन्न। वाक्यभेदप्रयुक्तस्य गौरवदोषस्य बाधकस्य संभवात्। इदं च गौरवं लाक्षणिकार्थाङ्गीकारजन्यगौरवापेक्षयाप्यधिकम्। वाक्यभेदस्य लक्षणापेक्षयापि गौणत्वमित्यग्रे मूलेऽनुपदमेव वक्ष्यते। <u>आग्नेय इति</u>। अग्निर्देवतास्येत्याग्नेयः। अग्निशब्दात्सास्य देवतेत्यर्थेऽग्नेर्ढक् (पा. सू. ४।२।३३) इति सूत्रेण ढक्प्रत्ययः। अष्टसु कपालेषु संस्कृतः पुरोडाशोऽष्टाकपालः। अत्र चाग्निदेवतायाः पुरोडाशरूपद्रव्यस्य च निर्देशात्तद्व्यतिरिक्तस्य कस्यचिदनिर्देशादस्य वाक्यस्योत्पत्तिविधित्वं स्पष्टमेव। अयमाग्नेयो यागः। <u>दर्शपूर्णमासाभ्यां स्वर्गकाम इति</u>। आग्नेययागादयः षड्यागा दर्शपूर्णमासशब्दे

साभ्यां स्वर्गकामो यजेतेति वाक्यं विधत्ते इति तस्याधिकारविधित्वं, नोत्पत्तिविधित्वम् ।

स्यादेतत् । दर्शपूर्णमासाभ्यामित्येतस्य नोत्पत्तिविधित्वं संभवति । आग्ने-

---

नोच्यन्ते । आग्नेय एकः । अग्नीषोमीयोपांशुयाजौ द्वौ । ऐन्द्रौ द्वौ । ऐन्द्राग्न एकः । एते षडाग्नेयादयो यागाः । एते च यागा नानेन दर्शपूर्णमासाभ्यामित्यनेन विधीयन्ते । किंतु आग्नेयोऽष्टाकपाल इत्यादिभिर्वचनान्तरैर्विहितानां तेषां षण्णां केवलमनेन स्वर्गरूपफलसंबन्धो बोध्यत इति बोध्यम् । अथ दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यस्य यथा केवलमधिकारविधित्वं तथा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यस्यापि केवलमधिकारविधित्वमेव नोत्पत्तिविधित्वमिति यत्सिद्धान्तिनोक्तं तन्न संभवति । दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यादित्याशयेनाशङ्कते–स्यादेतदित्यादिना न वाक्यभेद इतिचेत् ( पृ. ५७ प. १ ) इत्यन्तेन । स्यादेतदित्येवं शङ्कारम्भे प्रयुज्यते । एवं यत्सिद्धान्तिनोक्तं तदेतच्छब्देन परामृश्यते । यदेतत्सिद्धान्तिनोक्तं तत्तथा स्यादित्यर्थः । अस्य 'मयाग्रे यदुच्यते तद्यदि स्थिरं न स्यात्तर्हि' इति शेषः । दर्शपूर्णमासाभ्यामित्येतस्येति । यत्कर्मसंबन्धेन यावन्ति वाक्यानि वेदे समुपलभ्यन्ते एकं वा द्वे वा त्रीणि वा ततोऽप्यधिकानि वा तेषां सर्वेषां वाक्यानां तत्तत्प्रतिपाद्यार्थानुसारेण सार्थक्यमुपपादनीयम् । तत्र कश्चित्कर्मस्वरूपमात्रबोधको विधिः कश्चिदधिकारमात्रबोधकः कश्चिद्गुणमात्रबोधकः कश्चिद्गुणविशिष्टकर्मविधिः कश्चिदावृत्त्योभयविधिरित्येवं तत्र तत्र यथावचनं यथानिर्देशं व्यवस्था कर्तव्या भवति । तत्र गुणविशिष्टकर्मविधौ मत्वर्थलक्षणा दोषः । आवृत्त्योभयविधाने वाक्यभेदो दोषः । वचनव्यवस्था च सत्यां गतौ दोषमन्तरेण कार्या । गत्यन्तराभावे तु दोषोऽपि स्वीकर्तव्यः । तत्र लक्षणादोषः पददोषत्वाद्वाक्यभेदापेक्षया लघीयान् । वाक्यभेददोषश्च लक्षणादोषापेक्षया गरीयान् । वाक्यस्य पदसमूहरूपत्वात् । तथा चार्थादेव यत्र लक्षणाश्रयणेनापि वचनानां व्यवस्थोपपादयितुं न शक्यते तत्रागतिकगतित्वाद्वाक्यभेदोऽपि स्वीकार्यो भवति । अनया रीत्या सर्वत्र व्यवस्थाश्रीयते । प्रकृते च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेति वाक्यं स्वर्गकामपददर्शनादधिकारबोधकं सदेव तत्र दर्शपूर्णमासाभ्यां यजेतेति पदसमुदायस्यावृत्त्या यागोत्पत्तिबोधकमपि तदेवेति यद्युच्यते तर्ह्याग्नेयोऽष्टाकपाल इतिवाक्यं व्यर्थं स्यात् । यागस्य दर्शपूर्णमासाभ्यामिति वचनेन सिद्धत्वात् । न च दर्शपूर्णमासाभ्यामिति वचनेन विहितं यागमनूद्य तत्राग्निरूपदेवताष्टकपालसंस्कृतपुरोडाशरूपद्रव्यं चेत्येतद्गुणद्वयमाग्नेयोऽष्टाकपाल इति वचनेन विधीयते । तथा चाग्नेयोऽष्टाकपाल इति वाक्यस्य न वैयर्थ्यमिति वाच्यम् । यागमुद्दिश्याग्निदेवता विधेया तथा यागमुद्दिश्य पुरोडाश-

योऽष्टाकपाल इत्यादिवाक्यानर्थक्यापत्तेः । नहि तदा तेन कर्म विधीयते । तस्य दर्शपूर्णमासाभ्यामित्यनेन विहितत्वात् । नापि गुणविधानं संभवति । प्राप्ते कर्मणि अनेकगुणविधाने वाक्यभेदापत्तेः । अतः आग्नेयोऽष्टाकपाल इत्यस्योत्पत्तिविधित्वं दर्शपूर्णमासाभ्यामित्यस्य चाधिकारविधित्वं युक्तम् । ज्योतिष्टोमेनेत्यस्य तु अधिकारविधेरुद्भिदा यजेत पशुकाम इत्यादिवदुत्पत्तिविधित्वेऽपि स्वीक्रियमाणे न कस्यचिदानर्थक्यम् । सोमेन यजेतेत्यस्य गुणविधित्वाद्यागोद्देशेन

---

द्रव्यं च विधेयमित्येवमुद्देश्यविधेयभावद्वयेन वाक्यभेददोषापत्तेः । नह्यत्र विशिष्टविधानं संभवति । अग्निदेवतायाः कपालाष्टकवैशिष्ट्याभावात् । कपालाष्टकस्य चाग्निदेवतावैशिष्ट्याभावात् । यागद्वारा हि तयोः संबन्धः संभवति । स यागस्तु नात्रविधेयः । तस्य दर्शपूर्णमासाभ्यामित्यनेन विहितत्वात् । एवं च दर्शपूर्णमासाभ्यामित्यत्रापि वाक्यभेद आग्नेयोष्टाकपाल इत्यत्रापि वाक्यभेद इत्यतो नेयं व्यवस्था साधीयसी । किंतु दर्शपूर्णमासाभ्यामित्येतत्केवलमधिकारवाक्यम् । आग्नेयोष्टाकपाल इत्येतच्च कर्मविधायकं केवलमुत्पत्तिवाक्यम् । विधिश्चायं गुणद्वयविशिष्टकर्मविधिरित्यन्यत् । एवं च दर्शपूर्णमासाभ्यां स्वर्गकाम इति दृष्टान्तभूतस्य वाक्यस्यास्तु नाम केवलमधिकारविधित्वम् । दार्ष्टान्तिके ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र तु न तथा वक्तुं शक्यम् । ततो वैलक्षण्यात् । तदेवोपपादयति–ज्योतिष्टोमेनेत्यस्य त्विति । उद्भिदा यजेत पशुकाम इति वाक्यस्य यथाधिकारविधित्वमुत्पत्तिविधित्वं च स्वीक्रियते तथैव ज्योतिष्टोमेन स्वर्गकामो यजेतेति वाक्यस्याप्यधिकारविधित्वमुत्पत्तिविधित्वं च स्वीकर्तव्यम् । न तत्र बाधकं वचनानर्थक्यादिकं किंचिद्दृश्यते । वाक्यभेददोषस्तूद्भिदा यजेत पशुकाम इत्यत्रेव ज्योतिष्टोमेनेत्यत्रापि सोढव्य इति शङ्काशयः । ननु सोमेन यजेतेत्यत्र सिद्धान्तिना स्वीकृतं लघीयांसं लक्षणादोषं परिहर्तुकामेन शङ्काकृता तदपेक्षया महान्दोषो वाक्यभेदरूपः स्वीक्रियते । नैतद्युक्तिसहमिति चेत्–अत्र शङ्काकृदेवं मन्यते । सोमेन यजेतेत्यत्र सिद्धान्तिना लक्षणादोषः स्वीकृत एव । परंतु न तावतैवेष्टसिद्धिः । किंतु तत्र वाक्यभेददोषोऽप्यपरिहार्य एव भवति । लक्षणया सोमविशिष्टयागविधानमित्युक्तेपि तत्र यागस्य सोमस्य चेति द्वयोरपि वचनान्तरेणाप्राप्तत्वाद्विधिद्वये पर्यवसानेन वाक्यभेदस्यावश्यकत्वात् । तथा च शङ्काकृन्मते ज्योतिष्टोमेनेत्यत्र वाक्यभेद एक एव दोषः । सोमेन यजेतेत्यत्र तु गुणमात्रविधानाश्रयणेन न लक्षणा नापि वाक्यभेदः । सिद्धान्तिमते तु ज्योतिष्टोमेनेत्यत्र यद्यपि न कश्चिद्दोषस्तथापि सोमेन यजेतेत्यत्र लक्षणा वाक्यभेदश्चेति दोषद्वयम् । अतः शङ्काकृतेत्थं प्रतिपादितमिति ।

सोममात्रविधानाच्च न वाक्यभेद इति चेत्–मैवम्। यद्यपि सोमेन यजेतेत्यत्र न वाक्यभेदः, तथापि ज्योतिष्टोमेनेत्यस्मिन्वाक्ये कर्मस्वरूपे तस्य च फलसंबन्धे विधीयमाने गौरवलक्षणो वाक्यभेदोऽस्त्येव। सोमेन यजेतेत्येतद्वाक्यविहितकर्मणः फलसंबन्धमात्रविधाने तदभावात्। उद्भिदा यजेतेत्यत्र तु वचनान्तराभावेनागत्या तदाश्रयणम्।

---

समाधत्ते-मैवमिति। अयं भावः। सिद्धान्तिमते सोमेन यजेतेत्येतद्वाक्यविहितं यागमनूद्य ज्योतिष्टोमेन स्वर्गकाम इत्यत्र केवलमधिकारबोधनान्न वाक्यभेददोषः। नापि सोमेन यजेतेत्यत्र। तत्र हि सोमविशिष्टयागविधाने समाश्रीयमाण एक एव शाब्द उद्देश्यविधेयभाव इति न वाक्यभेददोषः। यागमुद्दिश्य सोमगुणविधानं तु तत्रार्थिकं नतु शाब्दमिति बोध्यम्। यत्र तूद्देश्यविधेयभावद्वयं शब्दतः प्रतीयते इत्यवश्यं स्वीकार्यं भवति तत्रैव वाक्यभेददोषः। शङ्काकृन्मते तु यद्यपि सोमेन यजेतेत्यत्र गुणमात्रविधानेन वाक्यभेददोषो नास्ति तथापि ज्योतिष्टोमेन स्वर्गकाम इत्यत्र वाक्यभेददोषो दुर्वार एव। अत्रेदं बोध्यम्। वाक्यस्य भेदो वाक्यभेदः। भेदो नानात्वम्। तच्च द्विधा। वाक्यस्य खण्डेनावृत्त्या च। तत्राद्ये वाक्ये यावन्ति पदानि संदृश्यन्ते तेषां मध्ये कानिचित्पदानि संहत्यैकं वाक्यार्थं बोधयन्ति। अन्यानि च पदानि संहत्य पार्थक्येनापरं वाक्यार्थं बोधयन्ति। अत्र च कस्यचित्पदस्यावृत्तिर्भवतु मा वा भूत्। अयमेकः खण्डलक्षणो वाक्यभेदः। द्वितीयो वाक्यभेदश्च वाक्ये यावन्ति पदानि संदृश्यन्ते तानि सर्वाणि संहत्यैकं वाक्यार्थं बोधयन्ति। पुनश्च तान्येव सर्वाणि पदानि तदन्तर्गतानि कानिचिद्वा पदान्यावृत्त्यापरं वाक्यार्थं बोधयन्ति। अयं च गौरवलक्षणो वाक्यभेदः। पदसमूहस्यावृत्त्या पुनरनुसंधानं तत्र च पदानामर्थान्तरस्वीकारेण योजनान्तरेण वा पूर्ववैलक्षण्येन वाक्यार्थकरणमिति गौरवं स्पष्टमेव। प्रकृते च ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र गौरवलक्षणो वाक्यभेदः। तत्र हि फलमुद्दिश्य तत्साधनत्वेन कर्मस्वरूपं बोधनीयम्। कर्मस्वरूपं चोद्दिश्य तत्कर्मविशेषपरिच्छेदकत्वेनाधिकारी बोधनीय इत्येवं शाब्दमुद्देश्यविधेयभावद्वयम्। अत्र वाक्यार्थद्वये क्रमेणाङ्गाङ्गिभावद्वयं प्रतीयते। प्रथमे वाक्यार्थे यागस्य फलाङ्गत्वम्। द्वितीये चाधिकारस्य यागाङ्गत्वम्। न चात्र सोमेन यजेतेत्यत्रेव विशिष्टविधानाश्रयणेन न वाक्यभेद इति भ्रमितव्यम्। किमत्राधिकारिविशेषविशिष्टस्य कर्मणो विधानमथवा कर्मविशिष्टस्याधिकारिविशेषस्य विधानम्। उभयमपि न संभवति। तथा सति स्वर्गकामपदे तृतीयापत्तेः। आद्ये स्वर्गकामपदस्य स्वर्गकामकर्तृकेत्यर्थे लक्षणया यागवाचित्वात्। यागस्य च साधनत्वेन विधानात्। अन्त्ये च स्वर्गकामस्यैव साधनत्वेन विधानात्। किंचात्रोद्देश्यमपि न किंचिद्विद्यते। यतस्तत्र स्ववाक्ये

नच सोमेन यजेतेत्यत्रापि कर्मणः स्वरूपे गुणे च विधीयमाने वाक्यभेदः स्यादिति वाच्यम्। श्रूयमाणेन विधिना गुणस्याविधेयत्वात्। विशेषणविधेरार्थिकत्वात्। सर्वत्र हि विशिष्टविधौ विशेषणविधिरार्थिकः। ज्योतिष्टोमेनेत्यस्य तूत्पत्तिविधित्वे कर्मस्वरूपं फलसंबन्धश्चेति उभयं श्रूयमाणेनैव विधिना विधातव्यमिति दृढो गौरवलक्षणो वाक्यभेदः। यथाहु:—

श्रौतव्यापारनानात्वे शब्दानामतिगौरवम्।
एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते॥

(त. वा. २।३।३) इति।

---

निर्दिष्टं दृश्यते। ज्योतिष्टोमयागस्य स्वर्गकामस्य च विधेयकुक्षिप्रविष्टत्वात् पदान्तरस्य चादर्शनात्। नापि वाक्यान्तरात्किंचिदवसीयते। तथाविधस्य वाक्यान्तरस्याभावात्। न च स स्वर्गः स्यात्(जै.सू.४।३।१३)इति न्यायेन कल्पितं स्वर्गरूपं फलमुद्देश्यमिति वाच्यम्। तथा सति वाक्ये स्वर्गकामपदानर्थक्यं स्यात्। कल्पितफलोद्देशेन च तत्साधनतयाधिकारिविशेषविशिष्टस्य कर्मणो विधानमिति पक्षस्य संभवेपि कर्मविशिष्टस्याधिकारिविशेषस्य विधानमिति पक्षस्यासंभवस्तदवस्थ एव। फलाधिकारिणोर्यागद्वारैवात्र संबन्धस्य विवक्षितत्वात्। किं च ज्योतिष्टोमेनेत्यत्र विशिष्टविधावाश्रीयमाणे लक्षणावश्यं स्वीकार्या स्यात्। तथा च सोमेन यजेतेत्यत्र मत्वर्थलक्षणामसहमानस्य शङ्काकृतो न कश्चिल्लाभः। किं च विशिष्टविधावधिकारियागयोरङ्गाङ्गिभावसंपत्तये वाक्यप्रमाणबलेन लिङ्गश्रुतिकल्पनद्वारा विध्यन्तरकल्पनमिति गौरवं तदवस्थमेव। तथा च शङ्काकृन्मते ज्योतिष्टोमेनेत्यत्र न कयापि विधया वाक्यभेददोषः परिहर्तुं शक्यते। अतोयं सुदृढो वाक्यभेद इति भावः। <u>अविधेयत्वादिति</u>। इदं प्रागुपपादितम् (पृ. ५७ प. ८)। <u>श्रौतव्यापारेति</u>। वाक्यघटकाः शब्दाः श्रुताः सन्तः श्रोतुर्मनसि स्वस्वमर्थमुपस्थाप्य तत्तदन्वयानुसंधानपूर्वकमुद्देश्यविधेयभावरूपं वाक्यार्थमवबोधयन्ति। अयं च शब्दानां श्रौतो व्यापारः। एतादृशव्यापारस्य नानात्वे गौरवमतिशयितं भवति। तादृशस्थले च वाक्यभेदोवश्यंभावी। यत्र च नैतादृशं व्यापारनानात्वं तत्रैकेनैवोद्देश्यविधेयभावबोधनेन विरतव्यापारेषु शब्देषु पश्चाद्यदि स शब्दप्रतिपादितोर्थः कंचिदर्थान्तरमाक्षिपति तर्हि न तद्विरुद्धम्। तत्र गौरवदोषो नास्तीति तात्पर्यम्। यथा सोमेन यजेतेत्यत्रेष्टं फलमुद्दिश्य सोमविशिष्टयागविधाने शब्दैरवबोधिते सति पश्चात्तत्र सोमयागयोरङ्गाङ्गिभाव आर्थिक

न च सोमेन यजेतेत्यस्योत्पत्तिविधित्वे यद्यपि न वाक्यभेदः तथापि मत्वर्थलक्षणा स्यादेवेति वाच्यम्। तस्याः स्वीक्रियमाणत्वात्। लक्षणातो वाक्यभेदस्य जघन्यत्वात्। लक्षणा हि पददोषो वाक्यभेदस्तु वाक्यदोषः। पदवाक्यदोषयोर्मध्ये पदे एव दोषकल्पनाया उचितत्वात्। 'गुणे त्वन्याय्यकल्पना' (जै. सू. १।३।१५) इति न्यायात्।

अत एव 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यत्राधानानुवादेन जातपुत्रत्वकृष्णकेशत्वविधाने वाक्यभेदात्तदद्वयेनावस्थाविशेषो लक्ष्यत इत्युक्तम्। तस्माद्वाक्यभेदप्रसक्तौ लक्षणैव स्वीकार्या। तस्मात्सोमेन यजेतेत्ययमेवोत्पत्तिविधिर्न ज्योतिष्टोमेनेत्ययम्। गौरवलक्षणवाक्यभेदापत्तेः।

---

त्वेनाक्षिप्तो भवति न तद्गौरवावहं भवति। जघन्यत्वादिति। गौणत्वादित्यर्थः। लक्षणापेक्षयापि वाक्यभेददोषो गौण इति भावः। गुणे त्वन्याय्येति। एतद्व्याख्यानम् ... यस्वरूपं प्रागुपदर्शितम् (पृ. २६ प. ३२)। पदसमूहस्य वाक्यत्वेन पदस्य वाक्याङ्गत्वाद्वाक्यापेक्षया गुणत्वम्। तथा चात्रावश्यं क्वचिद्दोषे समाश्रयितव्ये स वाक्याङ्गभूते पद एवोचितो न तु तदपेक्षया मुख्ये वाक्ये स उचित इति भावः। अत एवेति। लक्षणापेक्षया वाक्यभेददोषस्य गौणत्वादेवेत्यर्थः। जातपुत्रः कृष्णकेशोऽग्नीनादधीतेत्यत्र नाग्न्याधानं विधीयते। वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादिवाक्यैस्तस्य विहितत्वात्। किंतु तादृशाग्न्याधानकर्तारमुद्दिश्यात्र जातपुत्रत्वं कृष्णकेशत्वं चेति धर्मद्वयं विधेयम्। तथा चोद्देश्यविधेयभावद्वयेन वाक्यभेदो दुर्वारः। न च वचनान्तरप्राप्तमाधानमुद्दिश्य तत्कर्तृत्वेन जातपुत्रत्वकृष्णकेशत्वरूपधर्मद्वयविशिष्टो धर्मी विधीयत इत्येकेनैवोद्देश्यविधेयभावेन विशिष्टविधानमिति न वाक्यभेद इति वाच्यम्। वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादिषु विधिवाक्येषु ब्राह्मणादिः कर्ता निर्दिष्ट एवेत्यतः कर्तुरुत्पत्तिवाक्यसिद्धत्वेनात्र कर्तृविधानासंभवात्। किं तु वचनान्तरसिद्धं ब्राह्मणादिकं कर्तारमुद्दिश्य जातपुत्रत्वं कृष्णकेशत्वं चेति धर्मद्वयं विधेयम्। तादृशं चोभयविधानं वाक्यभेददोषग्रस्तम्। तथा चोक्तं प्राक् (पृ. २९ प. १) प्राप्ते कर्मणीत्यादि। तत्र कर्मपदं यस्य कस्यापि द्रव्यादेरुपलक्षणम्। अतोत्र प्राप्तस्याधानकर्तुः कर्मपदेन संग्रहः। एवं प्राप्ते वाक्यभेदपरिहाराय जातपुत्रः कृष्णकेश इति पदद्वये लक्षणाङ्गीक्रियते। जातपुत्रपदं बाल्यावस्थाव्यावर्तकम्। कृष्णकेशपदं च वार्धक्यावस्थाव्यावर्तकम्। पदद्वयेन च लक्षणया तारुण्यरूपोऽवस्थाविशेषो गृह्यते। तारुण्यस्य मर्यादा च विंशतिवर्षोत्तरं चत्वारिंशद्वर्षपर्यन्तेत्याहुः। तथा चात्राग्न्याधानकर्तारमुद्दिश्य तदङ्गत्वेन तारुण्यरूपो धर्मो विधीयत इत्येक एवोद्देश्यविधेयभाव इति न वाक्यभेददोषः। ईदृशवाक्यार्था-

किंच सोमेन यजेतेत्यत्र यागविधाने श्रुत्यर्थविधानं गुणविधाने तु वाक्यार्थविधानम् । तच्च श्रुत्यर्थविधानसंभवेऽयुक्तम् । यथाहु :—

वाक्यार्थविधिरन्याय्यः श्रुत्यर्थविधिसंभवे । ( आप. श्रौ. १२।१४।८, मान. श्रौ. २।३।५।४, कात्या. श्रौ. ९।६।६ ) इति ।

---

ङ्गीकारस्य फलं चाजातपुत्रस्यापि रोगादिना शुक्लकेशस्यापि च तरुणस्याधानसिद्धिः । लक्षणाया अनङ्गीकारे तु अपुत्रस्य शुक्लकेशस्य वा तरुणस्याप्याधानाधिकारो न स्यात् । अत्र च पदद्वये लक्षणायामपि तदपेक्षया वाक्यभेदे गौरवाधिक्यमेव । अग्नीनादधीतेति पदद्वयस्यावृत्तेरुद्देश्यविधेयभावद्वयस्य च वाक्यभेदेवश्यंभावात् । किं च जातपुत्रः कृष्णकेश इति पदद्वये न पार्थक्येन लक्षणाद्वयम् । तथा सति तयोः पदयोर्मध्ये एकेनैव सिद्धावन्यतरस्य वैयर्थ्यापत्तेः । किं तु तत्पदद्वयं मिलितं सल्लक्षणयैकमर्थं तारुण्यरूपमवस्थाविशेषं बोधयति । एकत्रैव लक्षणा अपरं तात्पर्यग्राहकमिति वा । अतश्चात्रैक एव लक्षणाव्यापारो न द्विगुण इति बोध्यम् ।

अथ सोमेन यजेतेत्यत्र यागमुद्दिश्य तदङ्गत्वेन सोमरूपगुणविधाने दूषणान्तरमाह–किं च सोमेनेति । श्रुतेरर्थः श्रुत्यर्थः । श्रुतिः शब्दः । स चात्र विधेः प्रक्रमाद्विधिबोधको यजेतेति शब्दः । तदर्थस्तद्घटकयजधात्वर्थो यागः । यजेतेत्यत्र प्रत्ययबोध्याया विधिशक्तेर्यागे उपसंक्रमे श्रुत्यर्थविधानं भवति । तस्या एव विधिशक्तेः सोमे उपसंक्रमे तु वाक्यार्थविधानं भवति । वाक्यस्यार्थो वाक्यार्थः । वाक्यं च विधिबोधकं सोमेन यजेतेत्यादि । तस्यार्थस्तद्वाक्यघटकसोमशब्दार्थः । तादृशवाक्यार्थविधानं च श्रुत्यर्थविधिसंभवे न युक्तम् । वाक्यार्थापेक्षया श्रुत्यर्थस्य समानपदोपात्तत्वेन शीघ्रोपस्थितिकत्वात् । शीघ्रोपस्थितिकं परित्यज्य विलम्बोपस्थितिकेन साकं संबन्धस्यान्याय्यत्वात् । ननु सोमेन यजेतेत्यत्र विशिष्टविधिपक्षे विधेयस्य यागस्य शीघ्रोपस्थितिकत्वेपि विधेयतावच्छेदकस्य सोमविशिष्टत्वस्य विलम्बोपस्थितिकत्वमेवेति चेत्–सत्यम् । तथापि गुणमात्रविधानमिति पक्षे विधेयः सोमो विधेयतावच्छेदकं च सोमत्वमिति द्वयमपि विलम्बोपस्थितिकमिति तदपेक्षया विशिष्टविधिपक्षे विधेयतावच्छेदकमेकमेव विलम्बोपस्थितिकमिति विशेषस्य सत्त्वेन लाघवाद्विशिष्टविधिपक्ष एवोचित इति भावः । नन्वेवं श्रुत्यर्थविधिसंभवे वाक्यार्थविधेरन्याय्यत्वे कथं सिद्धान्तिना ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र केवलमधिकारविधित्वं स्वीक्रियते । केवलाधिकारविधित्वे हि सोमेन यजेतेत्यनेन प्राप्तं यागमुद्दिश्याप्राप्तं स्वर्गरूपं फलं विधीयत इति वक्तव्यम् । फलं च न श्रुत्यर्थः । तस्य विधायकयजेतेतिपदप्रतिपाद्यत्वाभावात् । किं तु वाक्यघटकस्वर्गकामपदबोध्यं फलमिति फलविधाने

वाक्यार्थः पदान्तरार्थ इत्यर्थः । ज्योतिष्टोमेनेत्यत्रापि फलोद्देशेन यागस्यैव विधानान्न वाक्यार्थविधानम् । तदुत्पत्तिविधित्ववादिनापि तदङ्गीकाराच्च । तस्मात् ज्योतिष्टोमेनेत्ययमधिकारविधिरेव ।

अपि च कर्मस्वरूपविधिस्तत्र स्वीकार्यो यत्र कर्मणो रूपमुपलभ्यते । यागस्य च द्वे रूपे, द्रव्यं देवता चेति । सोमेन यजेतेत्यत्र यद्यपि देवता

---

वाक्यार्थविधानं स्यात् । तच्च श्रुत्यर्थविधिसंभवे न युक्तमिति चेत्तत्राह- ज्योतिष्टोमेनेत्यत्रापीति । ज्योतिष्टोमेनेत्ययमधिकारविधिरिति यदुच्यते तदार्थिकविध्यभिप्रायेण । शाब्दप्रतीतितस्तु न तत्र यागमुद्दिश्य स्वर्गरूपं फलं विधीयते । किंत्वधिकारिविशेषणावगतं फलमुद्दिश्य याग एव विधीयते । एवं शाब्दान्वये विधिशक्तियागे संबद्धापि यागस्य सोमेन यजेतेत्यनेन प्राप्तत्वात्तत्रानवकाशा तदुद्देश्ये फले पर्यवस्यति । तथा च फलतोऽधिकारविधिः स भवति । शाब्दप्रतीतौ तु यागस्यैव विधानमिति श्रुत्यर्थविधिरेव, नतु वाक्यार्थविधिरिति न कश्चिद्दोषः । न केवलमस्माभिरेवमुच्यते । किं तु सोमेन यजेतेत्यत्र मत्वर्थलक्षणामसहमानेन पूर्वपक्षिणापि ज्योतिष्टोमेनेत्यत्र तथैवाङ्गीकृतमित्याह-तदुत्पत्तिविधित्वेति । ज्योतिष्टोमेनेत्यस्याधिकारविधित्वमुत्पत्तिविधित्वं च यो मन्यते तेनापि तस्याधिकारविधित्वमुक्तरीत्यैवोपपादितं नतु प्रत्ययबोध्याया विधिशक्तेः फले शाब्दं संबन्धं स्वीकृत्योपपादितम् । तथा च श्रुत्यर्थविधानसंरक्षणमावश्यकमिति भावः । न च यथा ज्योतिष्टोमेनेत्यत्राधिकारमात्रविधिं मन्यमानेन सिद्धान्तिना शाब्दान्वयानुसरणेन श्रुत्यर्थविधानं संरक्षितं तथा सोमेन यजेतेत्यत्र गुणमात्रविधिं मन्यमानेन पूर्वपक्षिणापि शाब्दान्वयानुसरणेन श्रुत्यर्थविधानं संरक्षितं भवेच्चेन्नायं 'किंच सोमेन' इत्यादिग्रन्थेनोक्तो दोष इति वाच्यम् । तथा सति मूल एव कुठारपातप्रसङ्गः स्यात् । सोमेन यजेतेत्यत्र मत्वर्थलक्षणानङ्गीकारो ह्यस्य पूर्वपक्षस्य मूलम् । तदर्थं च प्रयतमानेन पूर्वपक्षिणा यदि सोमेन यजेतेत्यत्र श्रुत्यर्थविधानसंरक्षणाय विधिशक्तेर्यागे शाब्दोन्वयः स्वीकृतः स्यात्तर्हि तत्सामानाधिकरण्याय सोमपदे लक्षणा गले पतितैव भवेदिति बोध्यम् । उपसंहरति-तस्मादिति ।

सोमेन यजेतेत्यत्र वोत्पत्तिविधिः स्वीकार्योऽथवा ज्योतिष्टोमेनेत्यादिवाक्ये स स्वीकार्य इत्येतद्विषये सिद्धान्तिपूर्वपक्षिणोर्मतभेदः । आद्यः पक्षः सिद्धान्तिनः । द्वितीयः पूर्वपक्षिणः । अनयोश्च पक्षयोर्मध्ये कतरः श्रेयानिति संदेहे लाघवगौरवविचारेण निर्णयं कृत्वा सिद्धान्तिना स्वपक्षः स्थापितः । इदानीं त्वत्र संदेह एव नास्ति दूरे लाघवगौरवचर्चेत्याह-अपि चेति । अयं भावः ।

नोपलभ्यते सोमयागस्याव्यक्तत्वात् । अव्यक्तत्वं च स्वार्थचोदितदेवताराहित्यम् । न तु देवताराहित्यमात्रम् । ऐन्द्रवायवं गृह्णातीत्यादिवाक्यविहितग्रहदेवतानां सत्वात् । ग्रहणार्थाभिरपि देवताभिः प्रसङ्गतो यागोपकारस्य क्रियमाणत्वात् । तथापि द्रव्यमुपलभ्यत एव । तेनापि यागस्वरूपं ज्ञातुं शक्यमेव । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र न द्रव्यं देवता वा श्रूयते । अतस्तस्योत्पत्ति-

---

अज्ञातकर्मविशेषस्वरूपज्ञापको हि विधिरुत्पत्तिविधिः । द्रव्यं देवता च कर्मस्वरूपम् । स्वरूपभेदादेव च कर्मभेदो भवति । द्वयोः कर्मणोर्द्रव्यैक्येपि देवताभेदश्चेत्कर्मभेद एव । तथा देवतैक्येपि द्रव्यभेदश्चेत्कर्मभेद एव । द्रव्यदेवतयोर्द्वयोरपि भेदस्तु सुतरां कर्मभेदः । द्वयोरप्येकत्वे तु कर्मैक्यमेव । एवं कर्मस्वरूपे निश्चिते यद्वाक्यं कर्मस्वरूपपरिचायकं तत्रोत्पत्तिविधिरवश्यं स्वीकार्य एव न संदेहः । यथा वायव्यं श्वेतमालभेतेति । एतच्च पूर्वं निरूपितमेव ( पृ. १३ पं. ८ ) । यत्र चैकस्मिन्वाक्ये द्रव्यं श्रूयते परत्र देवता श्रूयते तत्र कोत्पत्तिविधिरित्येतद्विषये संदेहोस्तु नाम । परंतु यत्रैकस्मिन्वाक्ये द्रव्यदेवतान्यतरच्छ्रूयते परत्र च न किमपि तत्र लेशतोपि न संदेहावसरः । प्रकृते च, सोमेन यजेतेत्यत्र द्रव्यवाचकं सोमपदं श्रूयते ज्योतिष्टोमेनेत्येतद्वाक्ये तु न किमपि द्रव्यवाचकं वा देवतावाचकं वा श्रूयते । तथा च तत्रोत्पत्तिविधित्वोक्तिर्गर्भस्रावेणैव गतार्थेति । स्वार्थचोदितेति । स्वं यागः । तदर्थं चोदिता विहिता या देवता तद्राहित्यमव्यक्तत्वम् । ऐन्द्रवायवं गृह्णातीत्यत्र ग्रहणं विधीयते । इन्द्रवायू देवतास्येत्यैन्द्रवायवः । सास्य देवता ( पा. सू. ४।२।२४ ) इति सूत्रेणाण्प्रत्ययः । गृह्यते हविर्द्रव्यमनेनेति ग्रहः सोमपात्रम् । इन्द्रवायुदेवताकं यत्सोमपात्रं तद्गृह्णातीत्यर्थः । अत्रेन्द्रवायुरूपदेवता या निर्दिष्टा सा तदीयपात्रग्रहणाङ्गत्वेन निर्दिष्टा नतु यागाङ्गत्वेन । तद्वाक्ये यागप्रतिपादकस्य यजधातोरभावात् । तच्चैन्द्रवायवग्रहग्रहणं यागप्रसङ्गेन विहितमित्यतः सोमपात्रस्य या देवता सैव सोमयागस्य कल्पनीया । पात्रसंबन्धित्वेनोपस्थितत्वात् । देवतान्तरस्य तथानुपस्थितत्वात् । एवं च सोमेन यजेतेत्यत्र विहितस्य सोमयागस्य देवता वर्तत एव । किंतु यथा तत्र सोमो यागार्थत्वेन विहितः । तस्य च सोमस्य यागार्थत्वं तत्र न शाब्दं किं त्वार्थिकमित्यन्यत् । तथा तद्वाक्ये यागार्थत्वेन देवता न विहिता यस्या यागार्थत्वमार्थिकत्वेनापि सिध्येत् । तथा च सोमयागस्याव्यक्तत्वं सिद्धम् । तेनापीति । सोमेन यजेतेत्यत्र निर्दिष्टेन सोमरूपद्रव्यमात्रेणाप्ययं सोमयाग इत्येवं यागविशेषस्वरूपं यागान्तरेभ्यः पार्थक्येन ज्ञातुं शक्यं भवतीत्यर्थः । अतस्तस्येति । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र यागविशेषसंबन्धिनो हविर्द्रव्यविशेषस्य देवताविशेषस्य च निर्देशाभावेपि यदि केवलं विधिबोधका-

विधित्वे यागविशेषज्ञानं यागसामान्यस्याविधेयत्वात् विशेषस्यैव विधेयत्वादित्यादिक्लेशेन स्यात्। अतो नायं कर्मोत्पत्तिविधिः।

नन्वेवमपि अग्निहोत्रं जुहोतीत्ययमपि होमोत्पत्तिविधिर्न स्यात्। रूपाश्रवणात्। तच्छ्रवणाच्च दध्ना जुहोतीत्ययमेवोत्पत्तिविधिः स्यात्। तथा चाघाराग्निहोत्राधिकरण ( जै. २।२ अधि. ५ ) विरोधः। तत्र हि अग्निहोत्रं

---

स्यातप्रत्ययबलादुत्पत्तिविधिराश्रीयते तर्हि पूर्वमज्ञातं यागविशेषस्वरूपं कीदृशं तेनोत्पत्तिविधिना ज्ञाप्यत इत्याकाङ्क्षायां तत्प्रकरणस्थार्थवादादिवाक्यान्तरालोचनेन तदीदृशमिति यथाकथंचित्कल्पनीयं भवेदिति क्लेशः। स्ववाक्यात्तु न तदीदृशमिति ज्ञातुं शक्यते। ज्योतिष्टोमेनेति पदं यागविशेषनामधेयम्। ज्योतिराख्यास्त्रिवृदादिस्तोमा यस्मिन्याग इति व्युत्पत्तेः। न तु यागविशेषस्वरूपपरिचायकम्। एतद्वाक्यार्थबोधात्प्रागमुकस्यार्थविशेषस्यैतन्नामधेयमित्येवं संकेताग्रहणात्। तथा स्वर्गकामपदं स्वर्गफलकोऽयं याग इत्येतावन्मात्रमवबोधयेन्नतु तादृशयागविशेषस्वरूपपरिचयं कर्तुं प्रभवति। तथा यजेतेति यजधातुरपि न यागविशेषस्वरूपपरिचायकः। तस्य यागसामान्यार्थबोधकत्वात्। सामान्यरूपेण तु न कोऽप्यर्थो विधातुं शक्यते। नहि द्वादशेऽहि पिता नाम कुर्यादित्युक्ते नामसामान्यकरणेन कृती भवति। तथा च यस्मिन्वाक्ये द्रव्यस्य देवताया वा न निर्देशस्तस्योत्पत्तिविधित्वं सत्यां गतौ नैवादर्णीयमिति सिद्धम्।

यत्र तु वचनस्य नान्या काचन गतिः संभवति तत्रागत्या द्रव्यस्य देवताया वा निर्देशाभावेऽपि उत्पत्तिविधित्वं स्वीकर्तव्यं भवति, कर्मविशेषस्वरूपपरिचयाय जायमानो वाक्यान्तराद्यालोचनादिक्लेशश्च सोढव्यो भवतीत्येतच्छङ्कासमाधानाभ्यां प्रदर्शयति-नन्वेवमपीत्यादिना। जुहोतीति क्रियापदं जुहुयादित्यर्थकम्। तत्र चाख्यातपदबोध्या विधिशक्तिः प्रथमतः समानपदोपात्तत्वेन शीघ्रोपस्थितिके धात्वर्थे होमे उपसंक्रान्तापि होमविशेषस्वरूपस्य द्रव्यदेवतात्मकस्य स्ववाक्यादनवगतत्वेन पर्यवसिता न भवति। किं तु यथा गुणविधौ पदान्तरोपात्ते गुणे प्रत्ययबोध्या विधिशक्तिरुपसंक्रान्ता भवति तथात्र पदान्तरोपात्ते कस्मिंश्चिदर्थे उपसंक्रान्ता भवतु नाम नतु धात्वर्थे होम इत्यतोऽयं कर्मोत्पत्तिविधिर्न स्यात्। एतदपेक्षया वरं दध्ना जुहोतीत्यत्र मत्वर्थलक्षणयोत्पत्तिविधित्वाश्रयणम्। द्रव्यं देवता चेति कर्मणो रूपद्वयम्। तयोरन्यतरदपि यत्र न श्रूयते तत्रोत्पत्तिविधित्वाङ्गीकारापेक्षया यत्रान्यतरच्छ्रूयते तादृशे दध्ना जुहोतीत्यत्रोत्पत्तिविधित्वाश्रयणस्योचितत्वादित्याशयः। आघाराग्निहोत्रेति। एतदधिकरणतात्पर्यं प्रदर्शितं प्राक् ( पृ. ५०

जुहोतीत्यस्योत्पत्तिविधित्वं दध्ना जुहोतीत्यादीनां च गुणविधित्वमुक्तमिति चेत्--सत्यम् । अग्निहोत्रं जुहोतीत्यत्र यद्यपि रूपं नोपलभ्यते। अग्निहोत्रशब्दस्य तत्प्रख्यन्यायेन ( जै. १।४।४ ) नामधेयत्वात् । तदेतदग्रे वक्ष्यामः । तथापि तस्योत्पत्तिविधित्वं स्वीक्रियते । अन्यथानर्थक्यापत्तेः । दध्ना जुहोतीत्यस्य च नानर्थक्यं गुणविधित्वात् । अतः अग्निहोत्रं जुहोतीत्ययं कर्मोत्पत्तिविधिरिति युक्तम् । ज्योतिष्टोमेनेत्यस्य च नानर्थक्यमधिकारविधित्वोपपत्तेः । अतः

---

पं. २९ ) । समाधत्ते-सत्यमित्यादिना । नोपलभ्यत इति । नन्वग्निहोत्रं जुहोतीत्यत्र द्रव्यं किंचिन्न निर्दिश्यते तथापि देवता निर्दिश्यत एव । अग्निहोत्रमित्यत्राग्निशब्दस्य देवतावाचकस्य निर्दिश्यमानत्वात् । अग्नये होत्रं होमो यस्मिन्नित्यग्निहोत्रशब्दव्युत्पत्तिः । तथा च रूपं नोपलभ्यत इति कथमुक्तमिति चेत्तत्राह-अग्निहोत्रशब्दस्येति । तदुक्तं जैमिनिना प्रथमाध्याये चतुर्थपादे तत्प्रख्यं चान्यशास्त्रम् ( जै. सू. १।४।४ ) इति । दध्ना जुहोतीत्यत्र मत्वर्थलक्षणया विशिष्टविधिं स्वीकृत्य तेन प्राप्तं होममनूद्याग्निहोत्रं जुहोतीत्यनेन केवलमग्निदेवतारूपो गुणो विधीयते । न तु कर्मविधायकमेतद्वाक्यमित्याशङ्कानिरासार्थमेतत्सूत्रम् । अत्राग्निदेवतारूपगुणस्य विधिर्न संभवति । तस्याप्राप्तत्वाभावात् । यतस्तस्य देवतारूपगुणस्य प्रख्यं प्रापकमन्यशास्त्रं वर्तते । तच्चाग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति मन्त्रवर्णः । स च होमाङ्गत्वेन विनियुक्तः । तादृशमन्त्रार्थालोचनेनाग्निदेवतायाः प्राप्तत्वान्न तस्यात्र विधिः संभवति । किं तु कर्मोत्पत्तिविधिरेवायम् । दध्ना जुहोतीत्ययं तु गुणमात्रविधिः । तथा चाग्निहोत्रशब्दोऽत्र कर्मनामधेयमिति स्वीकार्यम् । तच्चाभेदेन धात्वर्थस्य होमस्य विशेषणम् । अग्निहोत्रहोमेनेष्टं भावयेदिति वाक्यार्थः । अग्निहोत्रमिति द्वितीया तु तृतीयार्थे बोध्या । नन्वेवमपि प्रकृते किमायातम् । अग्निहोत्रशब्दस्यास्तु नाम कर्मनामधेयत्वम् । अग्निहोत्रशब्दश्च न केवलं रूढः । किं तु योगरूढः । अग्निदेवताप्रापकं यदग्निर्ज्योतिरिति मन्त्ररूपं शास्त्रान्तरं तेन प्राप्तमग्निसंबन्धं निमित्तीकृत्याग्नये होत्रं हवनं यस्मिन्नित्येवं योगार्थपुरस्कारेणाग्निहोत्रशब्दस्य कर्मविशेषनामधेयत्वात् । एवं चाग्निहोत्रं जुहोतीति वाक्येऽग्निशब्देन देवताया निर्देशो दुरपह्नव एव । तथा च कथमत्र रूपं नोपलभ्यत इत्युक्तमिति चेत्-भ्रान्तोऽसि । नह्येतादृशरूपोपलब्धिरुत्पत्तिविधिनिर्णायिका भवति । निर्देशमात्रं ह्येतत् । किंत्वग्निदेवतायाः शास्त्रान्तरसिद्धत्वेनाप्राप्तत्वाभावेन तत्र विधिशक्त्यन्वयो न संभवति । तथा च विध्यन्वयानर्हदेवतायास्तादृशद्रव्यस्य वा निर्देशोऽपि न तेन कारणेन तत्रोत्पत्तिविधिः स्वीकार्यो भवति । एवं चात्र रूपं नोपलभ्यत इत्यस्योत्पत्तिविधित्वसाधकं रूपं नोपलभ्यत इत्यर्थः । अग्रे इति । नामधेयरूपवेदभागनिरूपणप्रसङ्ग इत्यर्थः । आनर्थक्यापत्तेरिति । तथा चोत्पत्तिविधित्वसा-

किमर्थं संभवति रूपवति वाक्ये कर्मविधाने तद्रहिते तत्स्वीकार्यम् ।

किंच दध्ना जुहोतीत्यस्य कर्मोत्पत्तिविधित्वे पयसा जुहोतीत्यनेनैतत्कर्मानुवादेन न पयो विधातुं शक्यते । उत्पत्तिशिष्टद्रव्यावरोधात् । उत्पत्तिशिष्टगुणावरुद्धे हि न गुणान्तरं विधीयते । आकाङ्क्षाया उत्पत्तिशिष्टेनैव निवृत्तत्वात् । अतस्तेनापि विशिष्टं कर्मान्तरं विधेयम् । तथा चानेकादृष्टकल्पनागौरवम् । अग्निहोत्रं जुहोतीत्यस्य तु उत्पत्तिविधित्वे एतद्वाक्यविहितस्य कर्मणो द्रव्याकाङ्क्षायां युगपदेव खलेकपोतन्यायेन 'दध्ना जुहोति', 'पयसा

धकस्य देवतानिर्देशस्य द्रव्यनिर्देशस्य चाभावेपि गत्यन्तराभावेनानर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायेनाग्निहोत्रं जुहोतीत्यत्रोत्पत्तिविधिः स्वीक्रियत इति भावः। रूपवति। सोमरूपद्रव्यनिर्देशवति सोमेन यजेतेत्यत्र। तद्रहिते द्रव्यदेवतयोरन्यतरस्यापि यत्र न निर्देशस्तादृशे ज्योतिष्टोमेनेति वाक्ये।

एवमग्निहोत्रं जुहोतीत्यत्रोत्पत्तिविधित्वाङ्गीकारे साधकं वचनानर्थक्यं प्रदर्श्याधुना दध्ना जुहोतीत्यत्रोत्पत्तिविधित्वाङ्गीकारे बाधकं प्रदर्शयति-किं च दध्नेति। दध्ना जुहोतीत्यस्योत्पत्तिविधित्वाङ्गीकारे तादृशोत्पत्तिविधौ निर्दिष्टं यद्धोमसाधनं दधि तेन साधनद्वारमवरुद्धं भवतीत्यतो वाक्यान्तरस्थस्य पयसः स्तस्य तत्र संबन्धो न स्यात् । पयो हि होमसाधनं दधिवत् । अतस्तस्य पयसः साधनत्वेनैव दध्ना जुहोतीत्यत्र विहिते होमे संबन्धो वाच्यः । परंतु तादृशः संबन्धस्तत्र दध्नेत्यनेनैव संवृत्त इति साधनांशे निराकाङ्क्षत्वात्तत्र पयसः संबन्धो न संभवति। तथाच पयसा जुहोतीति वाक्यमपि दध्ना जुहोतीतिवत्तत्पार्थक्येन स्वतन्त्रमुत्पत्तिविधायकमिति स्वीकार्यं स्यात् । न चेष्टापत्तिः । अनेकादृष्टकल्पनाप्रसङ्गात्। तथा हि। अग्निहोत्रं जुहोतीत्यस्योत्पत्तिविधित्वे होमेनेष्टं भावयेदिति वाक्यार्थः । होमस्य चेष्टसाधनत्वं न लोकतोवगम्यत इति तत्रादृष्टं मध्ये किंचित्प्रकल्प्य तद्द्वारा होम इष्टसाधनं भवतीत्यवश्यं कल्पनीयम् । दध्ना जुहोतीति गुणविधौ दध्ना होमं भावयेदिति वाक्यार्थे दध्नो होमसाधनत्वं लोकतोवगम्यत एवेति न तत्रादृष्टकल्पना । एवं पयसा जुहोतीत्यत्रापि नादृष्टकल्पना । यदि तु दध्ना जुहोति पयसा जुहोतीत्यनयोर्द्वयोरपि पार्थक्येनोत्पत्तिविधित्वं स्वीक्रियते तर्हि दधिमता होमेनेष्टं भावयेदिति वाक्यार्थे स्थलद्वयेप्यदृष्टं कल्पनीयं स्यादित्यनेकादृष्टकल्पनागौरवमिति बोध्यम् । खलेकपोतन्यायेनेति । कणिशानां मर्दनेन यत्र धान्यं निष्पाद्यते तत्स्थानं खलशब्देनोच्यते । तत्र च धान्ये प्रसारिते तद्भक्षणार्थं बाला युवानः स्थविराश्च सर्वे कपोता युगपत्पतन्ति । पक्षिणां स्वभाव एवैतादृशः । तथाग्निहोत्रं जुहोतीति वाक्यार्थोत्तरं केन होमं

जुहोति' इत्यादिवाक्यैर्गुणा विधीयन्त इति नानेकादृष्टकल्पनागौरवम् । अतोऽग्निहोत्रं जुहोतीत्ययमुत्पत्तिविधिः, पयसा जुहोतीत्यादयस्तु गुणविधय इति युक्तम् । सोमेन यजेतेत्यत्र तु रूपवति वाक्ये कर्मोत्पत्तिविधाने स्वीक्रियमाणे न किंचिद्दूषणम् । पक्षद्वयेऽप्येकस्यादृष्टस्य तुल्यत्वात् । तस्माद्युक्तं सोमेन यजेतेत्ययमेवोत्पत्तिविधिरित्यलमनया अप्रसक्तविधिनिरूपणानुगतप्रपञ्चनिरूपणचिन्तया । प्रकृतमनुसरामः । तत्सिद्धं विधिः प्रयोजनवन्तमप्राप्तमर्थं विधत्त इति ।

स च विधिश्चतुर्विधः । उत्पत्तिविधिर्विनियोगविधिः प्रयोगविधिरधिकारविधिश्चेति । तत्र कर्मस्वरूपमात्रबोधको विधिरुत्पत्तिविधिः । यथाग्निहोत्रं

---

भावयेदित्येवं साधनाकाङ्क्षायां तत्पूरणार्थं दध्ना जुहोतीत्यादिषु वाक्येषु निर्दिष्टा दधिपयआदयः सर्वेऽर्था युगपदुपतिष्ठन्त इति भावः । न किंचिद्दूषणमिति । ननु यथा दध्ना जुहोतीति गुणवाक्ये विशिष्टविध्यङ्गीकारे सत्यदृष्टकल्पनाप्रसङ्ग आपादितस्तथा सोमेन यजेतेत्यत्र सिद्धान्तिना विशिष्टविधिरङ्गीकृत इति तत्रादृष्टकल्पनाप्रसङ्ग इति दूषणं तदवस्थमेवेति चेत्तत्राह—पक्षद्वयेपीति । सिद्धान्तिमते यद्यपि सोमेन यजेतेत्यत्र अदृष्टकल्पनावश्यकी तथापि ज्योतिष्टोमेनेत्यधिकारबोधकवाक्ये नादृष्टकल्पना । तेन स्वर्गकामस्याधिकारमात्रबोधनात् । अधिकारिणश्च कर्तृत्वेन यागाङ्गत्वस्य लोकतोवगम्यमानत्वात् । पूर्वपक्षिमते तु यद्यपि सोमेन यजेतेत्यत्र सोमेन यागं भावयेदित्येवं गुणमात्रविधानाङ्गीकारेण सोमे यागाङ्गत्वस्य च लोकतोवगम्यमानत्वेन नादृष्टकल्पना तथापि ज्योतिष्टोमेनेत्यत्र तेनोत्पत्तिविध्यङ्गीकारादद्दृष्टकल्पनावश्यकी । एवं च मतद्वयेप्येकमेवादृष्टं कल्पनीयं भवतीति न सिद्धान्तिमते पूर्वपक्षिमतापेक्षया गौरवाधिक्यमिति न किंचिद्दूषणमिति भावः । अलमनयेति । अलमिति निषेधार्थे । विधिनिरूपणं हि प्रकृतम् । तत्संबद्धो यः प्रपञ्चः साधकबाधकप्रमाणोपन्यासपूर्वकं मत्वर्थलक्षणास्थापनरूपो विस्तारः स चात्राप्रसक्त इति तन्निरूपणविचार एतावत्पर्यन्तं यावान्कृतस्तावानेवास्तु नाधिकः क्रियत इत्यर्थः ।

विधिमन्त्रादिभेदेन वेदस्य पञ्चविधत्वं प्रयोजनवदर्थप्रतिपादकत्वं विधेः सामान्यलक्षणं च प्रागुक्तम् ( पृ. १६ पं. ३ ) । अधुना विधिविशेषस्वरूपविवक्षया विधेरवान्तरविभागं प्रदर्शयति-स च विधिरिति । कर्मस्वरूपमात्रेति । मात्रपदेन कर्मस्वरूपेतरस्य व्यावृत्तिः । यथा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र यागस्य फलेन सह संबन्धो बोध्यते । अतस्तस्य नोत्पत्तिविधित्वं

जुहोतीति । उत्पत्तिविधौ च कर्मणः करणत्वेनैवान्वयः, होमेनेष्टं भावयेदिति । न तु होमं कुर्यादिति साध्यत्वेन । तथा सति साध्यस्य साध्यान्तरान्वयायोगेनाधिकारवाक्यावगतफलसंबन्धो न स्यात् । करणत्वेन त्वन्वये होमेनेष्टं भावयेत् । किं तदिष्टमित्याकाङ्क्षायां फलविशेषसंबन्धो घटते ।

---

किंत्वधिकारविधित्वमेव । नन्वेवमुद्भिदा यजेत पशुकाम इत्यस्योत्पत्तिविधित्वं प्रागुक्तम् (पृ. ३१ पं. ६) तत्कथं संगच्छते । तत्रोद्भिद्यागस्य पशुरूपफलेन सह संबन्धावगमादिति चेत्–इत्थम् । तत्र वाक्यभेदेन वाक्यार्थद्वयम् । तत्रैकस्याधिकारविधित्वमपरस्योत्पत्तिविधित्वम् । तथा चोद्भिदा यजेतेत्यत्र तु वचनान्तराभावेनागत्या तदाश्रयणमिति तत्र सिद्धान्तिनोक्तम् ( पृ. ५७ पं. ४ ) । तदाश्रयणमित्यस्य वाक्यभेदाश्रयणमित्यर्थः । एवं चोद्भिदा यजेत पशुकाम इत्यत्रोत्पत्तिविधित्वमधिकारविधित्वं चेति द्वयमपि शाब्दमेव । तत्रोत्पत्तिविधिबोधके वाक्यार्थे पशुकाम इत्यस्य न संबन्ध इति सिद्धं तस्य कर्मस्वरूपमात्रबोधकत्वम् । कौमुदीकारास्त्वर्थसंग्रहव्याख्यायामुद्भिदा यजेत पशुकाम इति विधेः श्रौतमधिकारविधित्वमेव । उत्पत्तिविधित्वं तु कर्मस्वरूपबोधकविध्यन्तराभावेनार्थिकमेवेति न दोष इत्याहुः ( अर्थसं. टी. पृ. ३३ ) । ननु सोमेन यजेतेत्यत्र कर्मस्वरूपातिरिक्तस्याङ्गप्रधानयोः सोमयागयोः संबन्धस्य बोधनेन कर्मस्वरूपमात्रबोधकत्वाभावात्कथमुत्पत्तिविधित्वमिति चेन्न । तत्र सोमयागयोः संबन्धो न शाब्देन विधिना बोध्यते । किंतु वाक्यप्रमाणेन कल्पितेनार्थेन विधिना बोध्यत इति प्रागुक्तमेव ( पृ. ४४ पं. ३ ) । तथा च तत्र शाब्द उत्पत्तिविधिरिति न दोषः । कर्मण इति । हुधात्वर्थस्य होमरूपस्य कर्मणो विधिप्रत्ययवाच्येष्टभावनायां करणत्वेनैवान्वय इत्यर्थः । एवमेव धातुवाच्यस्य यागरूपस्य दानरूपस्य च कर्मणः प्रत्ययवाच्येष्टभावनायां करणत्वेनैवान्वयो बोध्यः । तथा सतीति । कर्मणः प्रत्ययवाच्यभावनायां साध्यत्वेनान्वये होमः साध्यमिति सिद्धम् । तदपेक्षयान्यत्साध्यं साध्यान्तरम् । तच्चाधिकारबोधकवाक्यादधिकारिविशेषणत्वेन प्रतीयमानं स्वर्गादि । होमस्वर्गयोश्च न सामान्यविशेषभावः । तयोर्भेदेन प्रतीयमानत्वात् । ययोश्च सामान्यविशेषभावस्तत्र कीदृशं सामान्यमिति जिज्ञासायां विशेषस्याभेदेन सामान्ये संबन्धो युज्यते । अत्र तु होमस्वर्गयोः सामान्यविशेषभावाभावाद्धोमस्य स्वर्गादिफलेन सह संबन्धो न स्यात् । ननु भावनायां साध्यत्वेन होमस्यान्वयेपि तस्य स्वर्गादिफलेन सह भेदेन संबन्धः सुकरः । तथा च भावनायां साध्यत्वेन प्रतीयमाने होमेधिकारवाक्यावगतफलस्य साधनत्वेन संबन्धः स्यात् । स्वर्गहोमयोः साध्यसाधनभावसंबन्धसंभवादिति चेत्–स्यादेतदेवं यदि

न च उत्पत्तिविधाविष्टवाचकपदाभावेन कर्मणा इष्टं भावयेदिति कथं वाक्यार्थ इति वाच्यम्। विधिश्रुतेरेवेष्टबोधकत्वात्। सा हि पुरुषार्थे पुरुषं प्रवर्तयन्ती कर्मणः फलसंबन्धमात्रं बोधयति। तस्माद्युक्तमुत्पत्तिविधौ कर्म

---

होमस्वर्गयोः संबन्धः शब्दतः प्रतीयमानः स्यात्। आर्थिकस्तु तादृशः संबन्धोऽत्र सत्यामाकाङ्क्षायां स्यान्न त्वन्यथा। किं च यद्यपि स्वर्गहोमयोः साध्यसाधनभावरूपः संबन्धः संभवति तथापि तस्यादृष्टत्वान्न स सिद्धवद्ग्रहीतुं शक्यते। संभवमात्रेण तु न तस्योपस्थितिः। ननु सिद्धान्तेऽप्ययं दोषः समानः। होमस्य भावनायां साधनत्वेनान्वयेऽपि तस्याधिकारवाक्यावगतेन स्वर्गादिना फलेन सह शाब्दान्वयाभावात्। स्वर्गस्य शाब्दोऽन्वयो ह्यभेदेन कामपदार्थे तद्द्वारा चान्यपदार्थेऽधिकारिणि। स्वर्गकाम इत्येवं बहुव्रीहिसमासदर्शनात्। तथा च स्वर्गहोमयोः साध्यसाधनभावरूपसंबन्धस्य लोकतोऽनवगम्यमानस्य कथमवगतिरिति चेत्-उच्यते। विधिश्रुतिरिष्टबोधिकेत्यनुपदं मूल एव वक्ष्यते। तस्य च सामान्यरूपेण प्रतीतस्येष्टस्य समानाभिधानश्रुत्या प्रत्ययवाच्यभावनायां साध्यत्वेनान्वयः। अयमन्वयः शाब्द एव। सामान्यस्य च विशेषं विना पर्यवसानाभावेन विधिप्रत्ययबोधितं यदिष्टं तत्कीदृशमित्येवं तद्विशेषस्वरूपाकाङ्क्षायामधिकारवाक्यावगतस्याधिकारिविशेषणत्वेनोपस्थितस्य स्वर्गादेः फलस्य तत्राभेदेन संबन्धो जायते स्वर्गादिरूपमिष्टमिति। अयं च संबन्धो न शाब्दः। किं त्वार्थिकः। अयं च संबन्धो नोपपत्तिसापेक्षः। स्वर्गादेरदृष्टत्वेऽपि तत्रेष्टत्वस्यासंभवाभावेन तदवगतेः सुलभत्वात्। यद्यप्येवमिष्टविशेषेष्टसामान्ययोरार्थिकः संबन्धस्तथापि तादृशस्येष्टस्य साध्यत्वं होमस्य च साधनत्वं शब्दत एवावगम्यत इति तदुपपत्तये तयोः साध्यसाधनभावो लोकतोऽनवगम्यमानोऽप्यदृष्टद्वारा तत्र तादृशशब्दबलादेव कल्पनीयो भवति। अयमेव हि विशेषोऽर्थतः प्रतीयमानादर्थाच्छब्दतः प्रतीयमानेऽर्थे-यच्छब्दतः प्रतीयमानोऽर्थः प्रमाणान्तरसिद्धश्चेत्समीचीनमेव। प्रमाणान्तरसिद्धो न चेत्तर्हि तदुपपत्तये तत्र तच्छब्दबलादेवादृष्टोऽप्यर्थस्तदुपपादकः कल्पनीयो भवति। तत्र तादृशादृष्टार्थकल्पनायां प्रमाणं च स शब्द एव। अर्थतः प्रतीयमानोऽर्थस्तु न तथा। प्रमाणान्तरसिद्ध एवार्थोऽर्थतः प्रतीयते। प्रमाणान्तरासिद्धस्य त्वर्थस्य न क्वाप्यार्थिकी प्रतीतिर्भवतीति। तदुक्तं 'न शब्दः सिद्धिसापेक्षः सिद्धिः शब्दानुवर्तिनी' इति। विधिश्रुतेरेवेति। विधिश्रुतिर्विधिबोधकः शब्दः यजेत यष्टव्यमित्यादौ लिङ्तव्यदादिः। यजेतेत्याद्युच्चारणोत्तरं नियमेनैतत्प्रतीयते यदयमिष्टसाधने यागे प्रेरयतीति। यच्च यस्मात्प्रतीयते तत्तस्य वाच्यमिति हि प्रागुक्तम् ( पृ० ६ पं ६ )। अत्र च यत्प्रतीयते तत्रांशचतुष्टयम्। इष्टमित्येकोंऽशः। साधनमिति द्वितीयः। याग

करणत्वेनान्वेतीति। अत एवोद्भिदा यजेत (ता. ब्रा. १९।७।२) इत्यादौ तृतीयान्त उद्भिच्छब्द उपपद्यते। उद्भिदा यागेन इष्टं भावयेदित्यन्वयोपपत्तेः। येषामपीष्टसाधनत्वं लिङर्थस्तेषामपि तृतीयान्तानां कर्मनामधेयानामन्वयोऽनु-

---

इति तृतीयः। प्रेरयतीति चतुर्थः। तत्रेष्टरूपः प्रथमः प्रेरणारूपश्चतुर्थश्चेति द्वावप्यंशौ लिङादिप्रत्ययवाच्यौ। यागरूपस्तृतीयोंशो यजधातुवाच्यः। साधनमित्येवं द्वितीयांशस्तु न प्रकृतेर्नापि प्रत्ययस्य वाच्यः। किं तु भावनायां साध्यत्वेनेष्टस्यान्वये साधनत्वेन च यागस्यान्वये संसर्गविधया प्रतीयते। इष्टसाधनमित्येवं समुदित एकोंशः प्रत्ययवाच्य इति नैयायिकाः। तेषां मत इष्टसाधनस्याभेदेन संबन्धेन धात्वर्थे यागेऽन्वयः। साधनांशस्य च वाच्यैकदेशतया तस्य न संसर्गविधया भानम्। धात्वर्थस्य च न साधनत्वेन भावनायामन्वयः किं तु साध्यत्वेन। एतन्मतेऽग्निहोत्रं जुहोतीत्यत्राग्निहोत्रमिति द्वितीयोपपत्तिः। कर्मनामधेयानामभेदसंबन्धेन धात्वर्थेऽन्वयस्वीकारात्। तथाप्युद्भिदा यजेतेत्यत्र कर्मनामधेयभूतादुद्भिच्छब्दादुद्दृश्यमानायास्तृतीयाया अनुपपत्तिर्दोषः स्यात्। धात्वर्थस्य भावनायां साधनत्वेनान्वय इति प्रागुक्ते मीमांसकाभ्युपगते सिद्धान्तपक्षेऽग्निहोत्रं जुहोतीत्यत्र द्वितीयोपपत्तिस्तु मूलेऽनुपदमेव वक्ष्यते। अत एवेति। उत्पत्तिविधौ धात्वर्थस्य भावनायां करणत्वेनान्वयस्वीकारादेवेत्यर्थः। येषामपीति। नैयायिकानामित्यर्थः। अनुपदमेवैतदुपपादितम्। अयं भावः। उद्भिदा यजेतेत्यत्र यजधात्वर्थस्य यागस्य करणत्वेन प्रत्ययार्थभावनायामन्वयः। तदेव च यागनिष्ठं करणत्वं यागनामधेयभूतोद्भिच्छब्दादुत्पन्नया तृतीयया बोध्यते। उद्भिच्छब्दस्य यागविशेषवाचित्वात्। तथा च तृतीयार्थस्य करणस्य भावनायामन्वयः सिद्धः। भावना क्रियेति पर्याय एवेति कारकाणां क्रिययैवान्वयः इति नियमः संरक्षितो भवति। इष्टसाधनरूपस्य विशिष्टस्यार्थस्य विधिबोध्यत्वेऽङ्गीकृते तु यागस्य साध्यत्वेन भावनायामन्वयः स्यात्। तथा च तत्र साध्ये यागे यागनामधेयस्यान्वयाय साध्यत्वबोधिका द्वितीयापेक्ष्यते। अग्निहोत्रं जुहोतीत्यत्र यथा। उद्भिदेत्यत्र तु द्वितीया न दृश्यते। किं तु तृतीया। अतस्तृतीयान्तस्य भावनासाध्ये यागेऽन्वयो नोपपद्यते। ननु भावनायां साध्यत्वेनान्वितोऽपि याग इष्टस्य साधनमेव भवति। तत्र चोद्भिदेति तृतीयार्थस्य करणस्याभेदेनान्वयोऽस्तु। विधिश्रुतिबोधितस्येष्टसाधनस्यापि तत्राभेदेनान्वयोऽस्तु। तथा चोद्भिद्रूपं यत्करणं तदभिन्न इष्टसाधनञ्च यो यागस्तत्कर्मिका भावनेति बोधः संभवतीति चेन्न। तथा सति तत्र तृतीयार्थस्य करणस्याभेदेन यागेन्वयात्कारकाणां क्रिययैवान्वय इति नियमभङ्गः स्यात्। अतो नेदृशान्वयः

पपन्न एव । न हि संभवति याग इष्टसाधनमुद्भिदेति । तृतीयोपात्तस्य कारकस्य लिङ्गसंख्यान्वयायोग्यस्य क्रिययैवान्वयात् ।

ननु तथाप्यग्निहोत्रं जुहोतीत्यादिषु कर्मोत्पत्तिविधिषु द्वितीयान्तानां कर्मनामधेयानामन्वयोऽनुपपन्नः । न हि संभवति होमेन भावयेदग्निहोत्रमिति । सत्यम् । श्रूयमाणा तावद्द्वितीयाऽर्थाक्षिप्तसाध्यत्वानुवादः । होमस्य हि करण-

---

संभवति । तदाह—न हि संभवतीति । ननु कारकाणां क्रिययैवान्वय इति न नियमः । तस्य स्ववाक्य एव व्यभिचरितत्वात् । कारकाणां क्रिययैवान्वय इत्यस्मिन्नेव वाक्ये कारकशब्दार्थस्य क्रियाव्यतिरिक्तेऽन्वय इत्यत्रान्वयस्य दृष्टत्वात् । तथा कर्तुः स्वातन्त्र्यं कर्मणो गौणत्वमित्यादावपि कर्तृकर्मादि शब्दोपस्थितस्य कारकविशेषस्य स्वातन्त्र्यगौणत्वादिषु क्रियाव्यतिरिक्तेष्व-न्वयो दृश्यत इति चेन्मैवम् । कारकेतिसामान्यशब्दात्कर्तृकर्मादितद्विशेषश-ब्दाच्च यार्थस्योपस्थितिर्जायते सा लिङ्गसंख्यान्वययोग्यत्वेनैव । कारकाणां कर्तुः कर्मण इत्यत्र लिङ्गसंख्यान्वयदर्शनात् । तद्विषये च नायं नियमः । किंतु यत्र लिङ्गसंख्यान्वयायोग्यत्वेनैव कारकार्थोपस्थितिस्तद्विषय एवायं नियमः । यथा विभक्त्युपस्थिते तत्तत्कारकविशेषरूपेऽर्थे । तदेतदभिप्रेत्याह—तृतीयोपात्त-स्येति । विभक्तिश्च यद्यपि संख्यां बोधयति तथापि तस्याः संख्यायाः प्रकृत्यर्थ एवान्वयो ननु तद्विभक्त्युपस्थिते कारकविशेषरूपेऽर्थे इति नोक्तनियमव्यभि-चारशङ्काकलङ्कः ।

अथोत्पत्तिविधौ धात्वर्थस्य भावनायां करणत्वेनैवान्वय इति नियमस्वी-कारे यत्र वाक्ये कर्मनामधेयं द्वितीयान्तं दृश्यते तत्र कथमन्वय इत्याशङ्कते—ननु तथापीति । नहि संभवतीति । भावनासाधनीभूते धात्वर्थे द्वितीयान्ताद-ग्निहोत्रमितिपदात्साध्यत्वेनोपस्थितस्यार्थस्याभेदेनान्वयासंभवादित्यर्थः । न च भावनायां पार्थक्येनाग्निहोत्रमित्यस्य साध्यत्वेनान्वयोऽस्त्विति वाच्यम् । धात्वर्थस्य होमसामान्यस्य साधनत्वेन भावनायामन्वये तद्विशेषस्याग्निहोत्रस्य साध्यत्वेनान्वयासंभवात् । अग्निहोत्रस्य कर्मविशेषस्य क्लेशावहत्वेन सुखरू-पत्वाभावेन तस्य साध्यत्वेनान्वयासंभवाच्च । न चाग्निहोत्रस्य सुखसाधन-त्वात्तस्य साध्यत्वेनान्वयसंभव इति वाच्यम् । यतोऽग्निहोत्रहोमेनेष्टं भावये-दित्येवमेतद्वाक्यार्थबोधे सत्येवाग्निहोत्रस्य सुखसाधनत्वावगमो नान्यथेत्या-शयः । समाधत्ते—सत्यमिति । अर्थाक्षिप्तेति । अयं भावः । अग्निहोत्रहोमेनेष्टं भावयेदित्युक्तेऽग्निहोत्रं सिद्धवद्गृहीत्वा तेन साधनेनेष्टस्य साध्यत्वोक्तिरत्र दृश्यते । सा च नोपपद्यते । वाक्यान्तरे क्वचिदप्यन्यत्राग्निहोत्रस्यासाधितत्वात् । अनुपपत्त्या चाग्निहोत्रस्यार्थिको विधिरत्र कल्प्यते अग्निहोत्रं भावयेदिति ।

त्वेनान्वयात् । असाधितस्य च करणत्वानुपपत्तेः । तस्याश्चानन्वयोपस्थितौ सा सक्तून् जुहोतीतिवत् तृतीयार्थं लक्षयति । अग्निहोत्रेण होमेनेष्टं भावयेदिती-त्युक्तं पार्थसारथिमिश्रैः । अतश्च द्वितीयान्तानां कर्मनामधेयानामन्वयो नानु-पपन्नः । तत्सिद्धमुत्पत्तिविधौ कर्म करणत्वेनान्वेतीति ।

---

ततः पश्चात्तेनाग्निहोत्रहोमेनेष्टं भावयेदिति शाब्दिको विधिरुपपद्यते । यथा विश्वेश्वरदर्शनेनात्मानं कृतार्थं कुर्वित्युक्ते तत्रादौ विश्वेश्वरं पश्येत्यार्थिको विधिः प्रकल्प्यते । तेन चार्थिकेन विधिना विश्वेश्वरदर्शनं प्रसाध्य ततस्तेन दर्शनेन शाब्दः कृतार्थीकरणविधिरुपपन्नो भवति । यथा वा पाणिनीये किमि-दंभ्यां वो घः ( पा. सू. ५।२।४० ) इत्यनेन सूत्रेण किमिदंभ्यां परीभूतस्य व-तुपो वकारस्य घत्वं विधीयते । एतच्च घत्वं वतुप्प्रत्ययमविधायैव विधीयमा-नत्वादनुपपद्यमानं वतुप्प्रत्ययविधिमाक्षिपति । किमिदंशब्दाभ्यां वतुप्प्रत्ययो भवतीति । अयं च वतुप्प्रत्ययविधिरार्थिकः । ततस्तस्य वकारस्य घत्वविधिः शाब्दः । तद्वदेवात्राग्निहोत्रं भावयेदित्यार्थिको विधिः कल्प्यते । तत्र चार्थिके विधौ यदग्निहोत्रस्य साध्यत्वं तदनयाग्निहोत्रमिति द्वितीययानूद्यते । वाक्यस्य मुख्यतात्पर्यं तु शाब्दे विधावेव । तत्र चाग्निहोत्रस्य साध्यत्वेनान्वयो नोपपद्यत इत्यनुपपत्तिमूलिकया लक्षणया द्वितीयाप्रत्ययस्यात्र करणरूपोऽर्थो गृह्यत इति शाब्दान्वयोपपत्तिः । ततश्चाग्निहोत्रं भावयेदित्यार्थिकविधिसूचनार्थं श्रुतौ द्वितीयानिर्देशः । सिद्धस्य च गतिरियमुक्ता । न तु सर्वत्रार्थिकविधिसूचन-मवश्यमपेक्ष्यते । उक्तदृष्टान्ते तददर्शनात् । नन्वग्निहोत्रमित्यत्र मास्तु लक्षणा । अग्निहोत्रहोमं भावयेदित्येवं साध्यत्वेनैव कर्मणोऽन्वयोऽस्तु । उद्भिदा यजेतेत्यत्र तु तृतीयाया लक्षणया साध्यत्वमर्थ इति तत्रापि कर्मणः साध्यत्वेनैवान्वयोऽस्तु । अथ वा मास्तु क्वापि लक्षणा । यत्र वाक्ये कर्मनामधेयाद्द्वितीया दृश्यते तत्र कर्मणः साध्यत्वेन भावनायामन्वयः । यत्र च तृतीया दृश्यते तत्र कर्मणः साधनत्वेनान्वय इति चेन्न । विधिश्रुतिबोधितस्येष्टरूपार्थस्यानन्वयप्रसङ्गात् । साध्यत्वेन भावनायामन्विते यागादौ कर्मण्यभेदेनेष्टस्यान्वय इति तु न शक्-यम् । धात्वर्थस्य यागहोमादेः कर्मणः सुखतत्साधनत्वान्यतरत्वावगत्यभावेन तत्रेष्टत्वस्य संप्रत्ययाभावात् । नचैवमग्निहोत्रस्य सुखतत्साधनान्यतरत्वेन प्रागनवगमात्कथं तस्य साध्यत्वमार्थिके विधौ कल्प्यत इति वाच्यम् । अत्रैव शाब्दे विधावग्निहोत्रस्य सुखसाधनत्वावगमात् । आर्थिकविधेश्चात्र शाब्दवि-ध्यङ्गतयैव कल्पनेनादोषात् । ये त्विष्टसाधनरूपो विशिष्टोऽर्थो विधिशक्तिबोध्य इति वदन्ति तेषां मत इष्टसाधनस्याभेदेन धात्वर्थे यागेऽन्वयात्ततो धात्वर्थस्य सुखसाधनत्वावगमान्न धात्वर्थस्य भावनायां साध्यत्वेनान्वयानुपपत्तिः । किंतु विशिष्टस्येष्टसाधनरूपार्थस्य विधिशक्तिबोध्यत्वाङ्गीकाराद्गौरवम् । इष्टमात्रस्य

अङ्गप्रधानसंबन्धबोधको विधिर्विनियोगविधिः। यथा दध्ना जुहोतीति। स हि तृतीयाप्रतिपन्नाङ्गभावस्य दध्नो होमसंबन्धं विधत्ते दध्ना होमं भावयेदिति।

एतस्य च विधेः सहकारिभूतानि षट् प्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि। एतत्सहकृतेन विधिनाङ्गत्वं परोद्देशप्रवृत्तकृतिव्याप्य-

---

विधिशक्तिबोध्यत्वाङ्गीकारेणापीष्टसिद्धेः। यागादेर्धात्वर्थस्य भावनायां साधनत्वेनान्वये साधनांशस्य संसर्गमर्यादया भानसंभवनान्यलभ्यत्वादित्याहुः।

एवमुत्पत्तिविधिं निरूप्य विनियोगविधिं निरूपयति--अङ्गप्रधानेति। अङ्गमप्रधानं द्रव्यदेवतादि। प्रधानं मुख्यं वाक्यान्तरविहितं यागहोमादि। तयोः संबन्धमङ्गाङ्गिभावं यो विधिर्बोधयति स विनियोगविधिरित्युच्यते। अग्निहोत्रं जुहोतीत्यनेन वाक्यान्तरेण विहितो होमः प्रधानम्। दधिद्रव्यमप्रधानम्। तयोरङ्गाङ्गिभावरूपं संबन्धं दध्ना जुहोतीत्ययं विधिर्बोधयति। जुहोतीत्यत्र व्यत्ययेन विध्यर्थे लट्प्रत्ययः। जुहुयादित्यर्थः। दध्नेति तृतीया यद्यप्युक्तसंबन्धबोधिका तथापि संबन्धबोधिका विभक्तिः प्रतियोगिवाचकादेवेति नियमेन प्रतियोगिनश्च प्रायशोऽङ्गत्वेन तया स्वप्रकृत्यर्थस्य दध्नोऽङ्गत्वं प्रतिपादितं भवति (व्रीहीनवहन्तीत्यादौ द्वितीयाप्रकृत्यर्थस्य द्वितीयाबोध्यसंबन्धप्रतियोगिनोऽप्यङ्गित्वदर्शनात् प्रायश इत्युक्तम्)। तच्चाङ्गत्वं यद्यपि किंचिदङ्गिनिरूपितमेव तथाप्यत्राङ्गिविशेषोमुक एवेति निर्णेतुं न तृतीया प्रभवति। स निर्णयस्त्वत्र विधिप्रत्ययाधीनः। तथा हि। तृतीया ह्यत्र करणकारकम्। करणं साधनम्। विभक्त्यर्थोपात्तस्य च कारकस्य क्रिययैवान्वयात्तस्य जुहोतीत्याख्यातप्रत्ययबोध्यभावनायामन्वयः। तत्रैव च प्रकृत्यर्थस्य होमस्य साध्यत्वेनान्वयः। दध्ना होमं भावयेदिति। इयं च प्रत्ययवाच्या भावना साधनत्वेन स्वान्वितस्य दध्नोऽङ्गत्वं साध्यत्वेन स्वान्वितहोमनिरूपितमेवेति प्रत्यासत्त्या निर्णेतुं शक्नोति। अनया रीत्याङ्गप्रधानसंबन्धबोधकत्वं विधेः सिध्यतीति भावः। किं च तृतीयाप्रत्ययस्याङ्गाङ्गिभावसंबन्धबोधकत्वेपि न तावतैव निर्वाहः। तृतीया हि संबन्धं बोधयति न तु विधत्ते। अतो विधिप्रत्ययस्याख्यातस्यापेक्षा। विधिशक्तिरपि च केवला विनियोगबोधकशब्दाभावे किं विधातुं शक्नुयात्। अतस्तस्याप्यपेक्षा वर्तत एवेत्यन्यत्। परोद्देशेति। अन्योद्देशेन प्रवृत्तस्य या कृतिस्तया व्याप्यत्वमङ्गत्वम्। यथा दध्ना जुहोतीत्यत्र दध्नोऽङ्गत्वम्। तत्राङ्गत्वेनाभिमताद्दध्नः सकाशादन्यो यो होमस्तदुद्देशेन प्रवृत्तस्य पुरुषस्य या कृतिः प्रयत्नविशेषस्तेन व्याप्तमभिसंबद्धं दधि भवतीति लक्षणसमन्वयः। यद्यपि होमोपि पुरुषप्रयत्नविशेषेणाभिसंबध्यमानो

स्वरूपं पारार्थ्यापरपर्यायं ज्ञाप्यते। तत्र निरपेक्षो रवः श्रुतिः। सा च त्रिविधा विधात्री अभिधात्री विनियोक्त्री चेति।

---

भवति तथापि न होमस्याङ्गत्वम्। तत्र पुरुषस्य होमादन्योद्देशेन प्रवृत्तत्वस्याननुसंधानात्। ननु होमादन्यः स्वर्गस्तदुद्देशेन पुरुषस्य प्रवृत्तत्वाद्धोमस्याङ्गत्वं दुर्वारमिति चेदस्तु तादृशमङ्गत्वं होमस्य। किं तु तदङ्गत्वं स्वर्गनिरूपितं न तु स्वस्य स्वनिरूपितम्। एतदर्थं एव च परोद्देशेति शब्दः। इदमेव चाङ्गत्वं पारार्थ्यमित्युच्यते। परस्मा इदं परार्थम्। तस्य भावः पारार्थ्यम्। एतदेव चाङ्गत्वं विनियोगविधिना बोध्यते। तस्य सहकारिभूतं प्रमाणं च श्रुत्यादिषट्कान्यतमं किमपीत्यर्थः। विनियोजकप्रमाणषट्कमध्ये प्रथमं श्रुतिप्रमाणं लक्षयति- निरपेक्ष इति। रवः शब्दः। कस्यचित्क्वचिद्विनियोगे कर्तव्ये यः शब्दो विनियोजकं प्रमाणान्तरं नापेक्षते स शब्दः श्रुतिरित्युच्यते इत्यर्थः। न तु किमपि नापेक्षत इति। तथा सति सर्वस्यैव शब्दस्याभिधात्रापेक्षत्वेन लक्षणस्यासंभव एव स्यात्। श्रुतिप्रमाणं हि कस्यचित्क्वचिद्विनियोगे कर्तव्ये स्वोत्तरवर्तिलिङ्गादिप्रमाणपञ्चकमध्ये किमपि नापेक्षते। लिङ्गादीनि पञ्च प्रमाणानि तु स्वस्वपूर्ववर्तियावत्प्रमाणापेक्षयैव विनियोगं कुर्वन्ति। अतस्तेष्वतिव्याप्तिनिरासाय श्रुतिलक्षणे निरपेक्ष इत्युक्तम्। कथं च श्रुतेरुत्तरप्रमाणानपेक्षा कथं वा लिङ्गादीनां पूर्वप्रमाणापेक्षेत्येतदनुपदमेव स्फुटीभविष्यति। सा च त्रिविधेति। विनियोगविधिर्हि त्रिविधं शब्दमपेक्षते विधिबोधकः शब्दो विनियोगबोधकः शब्दो विनियोगसंबन्धिबोधकश्चेति। दध्ना जुहोतीत्यत्र शब्दचतुष्टयं दधीति प्रकृतिभागस्तदुत्तरस्तृतीयाप्रत्ययो हुधातुस्तदुत्तर आख्यातप्रत्ययश्च। तत्राख्यातप्रत्ययो विधिबोधकः शब्दः। तृतीयाप्रत्ययो विनियोगबोधकः शब्दः। दधिशब्दो हुधातुश्च विनियोगसंबन्धिबोधकः शब्दः। यस्याङ्गस्य यत्र प्रधाने विनियोगस्तौ द्वौ विनियोगप्रतियोग्यनुयोगिनौ विनियोगसंबन्धिनौ। दध्नो होमे विनियोगाद्दधि विनियोगप्रतियोगि। होमो विनियोगानुयोगी। तत्र विधिबोधकः शब्दो विधात्री श्रुतिः। संबन्धिबोधकः शब्दोऽभिधात्री श्रुतिः। विनियोगबोधकः शब्दो विनियोक्त्री श्रुतिः। तदुक्तं तन्त्रवार्तिके- अभिधात्री श्रुतिः काचिद्विनियोक्त्र्यपरा तथा। विधात्री च तृतीयोक्ता प्रयोगो यन्निबन्धनः॥ ( तन्त्रवा० ३।१।१२ ) इति। यद्यपि विधात्री लिङादिश्रुतिर्विध्यभिधायकत्वादभिधात्री भवत्येव। तथा विनियोक्त्री दध्नेति तृतीयाश्रुतिरपि संबन्धाभिधायकत्वादभिधात्री भवत्येव तथापि अत्र विधात्र्या विनियोक्त्र्याश्च पृथङ्निर्देशात्ताभ्यां भिन्नाभिधात्रीपदेन गृह्यते। विनियोगविधेस्त्रिविधशब्दसापेक्षत्वात्तत्सूचनाय भेदत्रयोक्तिः।

तत्र विधात्री लिङ्गाद्यात्मिका। अभिधात्री व्रीह्यादिश्रुतिः। यस्य च शब्दस्य श्रवणादेव संबन्धः प्रतीयते सा विनियोक्त्री। सा च त्रिधा। विभक्तिरूपा समानाभिधानरूपा एकपदरूपा चेति। तत्र विभक्तिश्रुत्याङ्गत्वं यथा व्रीहिभिर्यजेतेति तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वम्।

न च उत्पत्तिशिष्टपुरोडाशावरुद्धे यागे कथं व्रीहीणामङ्गत्वमिति

---

व्रीह्यादीति। व्रीहिभिर्यजेतेत्यत्राङ्गं व्रीहिः। तद्बोधको व्रीहिशब्दोऽभिधात्री श्रुतिः। आदिपदेन प्रधानभूतयागबोधकयजधातोः संग्रहः। विभक्तिरूपेति। यथा पशुना यजेतेत्यत्र तृतीयाविभक्तिश्रवणादेव तृतीयाप्रत्ययप्रकृत्यर्थस्य पशोर्यागेन सह संबन्धः प्रतीयते। अतः सा तृतीयाविभक्तिर्विभक्तिरूपा विनियोक्त्री श्रुतिः। तत्र च पशुरङ्गम्। यागः प्रधानम्। पशुनेत्यत्रैव च तृतीयैकवचनस्य ना इत्यस्य श्रवणमात्रेणैव तदर्थस्य पुंस्त्वस्य तदर्थेनैव करणेन सह संबन्धः प्रतीयते। अतो ना इति समानाभिधानरूपा विनियोक्त्री श्रुतिः। करणकारकस्य पुंस्त्वस्य चैकेनैव ना इति शब्देनाभिधानात्। तथा तत्रैव ना इत्येकवचनेनाभिहितस्यैकत्वस्य तदर्थेनैव करणेन सह संबन्धः श्रवणमात्रेणैव प्रतीयते। अतोऽपीयं समानाभिधानरूपा विनियोक्त्री श्रुतिर्भवति। तत्र च पुंस्त्वमेकत्वं चाङ्गम्। करणकारकं प्रधानम्। तथा तत्र यजेतेति पदश्रवणमात्रादेव तत्रत्याख्यातप्रत्ययाभिहितस्यैकत्वस्य तत्रत्यप्रकृत्यर्थयागेन सह संबन्धः प्रतीयते। अतो यजेतेतीयमेकपदरूपा विनियोक्त्री श्रुतिः। तत्रैकत्वमङ्गम्। यागः प्रधानम्। यागे एकत्वं च यागकर्तृगतमारोपितं बोध्यम्। एकेनैव कर्त्रायं यागः कार्यो न तु द्वाभ्यां त्र्यादिभिर्वा। यजेतेत्येकवचनश्रवणेनानेकेषां सहानधिकारसूचनात्। अत्रेदं बोध्यम्। विभक्तिरूपा समानाभिधानरूपैकपदरूपा चेति त्रिविधास्वप्यासु विनियोक्त्रीषु श्रुतिषु श्रवणमात्रेणैवाङ्गाङ्गिभावरूपः संबन्धः प्रतीयत इति समानमेव। किं तु तत्र विभक्तिरूपायां श्रुताविदमङ्गमयं चाङ्गीति विशेषनिर्णयोऽपि श्रवणमात्रेणैव जायते। विभक्तिप्रकृत्यर्थस्याङ्गत्वनिर्णयात्। तत्रापि द्वितीयायां विभक्तौ प्रकृत्यर्थस्याङ्गित्वमेवेति निर्णयः। समानाभिधानरूपायामेकपदरूपायां च विनियोक्त्र्यां श्रुतौ किमङ्गं कश्चाङ्गीति निर्णयो वाक्यार्थपर्यालोचनया प्रमाणान्तरेण कर्तव्यो भवतीति। यागाङ्गत्वमिति। आग्नेयोऽष्टाकपाल इत्याद्युत्पत्तिवाक्यविहितयागेनैरूपितं व्रीहीणामङ्गत्वमित्यर्थः। न चोत्पत्तिशिष्टेति। यथा दध्ना जुहोतीत्यत्रोत्पत्तिविधिवाक्याकारे केन होम इत्येवं हविर्द्रव्यविषयिण्या आकाङ्क्षायाः स्ववाक्य एव दध्नेत्यनेन निवृत्तत्वेनानुत्पन्नप्रायत्वात्पयसा जुहोतीति वाक्यान्तरस्थस्य पयसः संबन्धो न स्यादिति दूषणं प्रागुक्तं (पृ. ६५ प. ३)

वाच्यम् । पुरोडाशप्रकृतितयोपपत्तेः । पशोरिव हृदयादिरूपहविष्प्रकृतितया यागाङ्गत्वम् । न च साक्षात्पशोरेवाङ्गत्वं किं न स्यादिति वाच्यम् ।

---

तथात्राग्नेयोऽष्टाकपाल इत्याद्युत्पत्तिवाक्य एव हविर्विशेषस्य पुरोडाशस्य निर्देशेन तद्विषयकाकाङ्क्षाया अनुत्पन्नप्रायत्वात्तत्र वाक्यान्तरस्थव्रीहीणां संबन्धो न स्यादित्याशयः । पुरोडाशप्रकृतितयेति । आग्नेयोऽष्टाकपाल इत्यादि-यागोत्पत्तिविधौ व्रीहीणां हविष्ट्वेन रूपेण प्रवेशो वाच्यः । तच्च रूपं तत्र स्ववाक्य एव पुरोडाशेनावरुद्धम् । अतः पुरोडाशद्वारैव यागे प्रवेशो वाच्यो न तु स्वातन्त्र्येण । संभवति च पुरोडाशद्वारा व्रीहीणां यागे प्रवेशः । पुरोडाशो हि न सिद्धं द्रव्यं किं तु निष्पाद्यं कस्यचिद्विकारभूतम् । तस्य च विकारस्य का प्रकृतिरित्यालोचने व्रीहीणां पुरोडाशप्रकृतिरूपेण प्रवेशो युज्यते । तथा च वाक्यैकवाक्यता फलिता भवति । यथा पर्यङ्के शेते प्रासादे शेते, इति वाक्यद्वये पर्यङ्कप्रासादयोः पार्थक्येन शयनक्रियायामन्वयेऽपि तयोर्मिथ आधाराधेयभावसंबन्धसंभवेन प्रासादस्थे पर्यङ्के शेते, इत्यार्थिको बोधो जायते तद्वत् । तदुक्तम्–स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥ ( तन्त्रवा० १।४।२८ ) इति । एवं व्रीहीणां पुरोडाशद्वारा यागे संबन्धो नाङ्गीक्रियते चेद् व्रीहिभिर्यजेतेत्येतद्यागान्तरस्योत्पत्तिवाक्यमित्यवश्यं स्वीकार्यं भवति । तथासति व्रीहिपदे मत्वर्थलक्षणा, कर्मभेदः, अदृष्टान्तरकल्पना चेति महद्गौरवम् । गौरवं च गत्यन्तराभावे स्वीकार्यं भवति । अत्र तूक्तप्रकारेण गतिः संभवतीत्यतः प्रागुक्तसरणिरेवोचितेति भावः । तत्र दृष्टान्तमाह–पशोरिवेत्यादिनेत्येव सिद्धम् ( पृ. ७७ प. ३ ) इत्यन्तेन । सोमेन यजेतेत्यत्र सोमवत्पशुना यजेतेत्यत्र हविष्ट्वेन रूपेण निर्दिष्टोऽपि पशुर्न साक्षाद्यागाङ्गं किं तु स्वकीयहृदयाद्यवयवद्वारैव याग उपयुज्यते तद्वदेवात्र व्रीहीणां पुरोडाशद्वारा याग उपयोगः । नचात्रैवं मन्तव्यं यदुत्पत्तिविधौ निर्दिष्टं साक्षाद्याग उपयुज्यते गुणविधौ निर्दिष्टं तु साक्षात्परम्परया वेति । विधिविशेषस्य तत्रातन्त्रत्वात् । किं तु सर्वेषां वाक्यानां सार्थक्याय यथासंभवं साक्षात्परम्परया वा याग उपयोगो भावनीयः । वचनस्यान्यथानुपपत्तेः सर्वतो बलवत्त्वात् । किं च पशुना यजेतेत्याद्युत्पत्तिविधौ व्रीहिभिर्यजेतेत्यादिगुणविधौ वा निर्दिष्टस्य पशुव्रीह्यादेः शाब्दान्वयः साक्षादेव । परम्परया जायमानः संबन्धस्तु पार्ष्ठिकः । तथा चोत्पत्तिविधौ वा तन्निर्देशोऽस्तु गुणविधौ वा तन्निर्देशोऽस्तु न तत्कृतो विशेषः कश्चित् । न च साक्षादिति । यागस्योत्पत्तिशिष्टपुरोडाशावरोधेन साधनांशे निराकाङ्क्षत्वात्तत्र व्रीहीणां संबन्धो न स्यादित्यतो व्रीहिभिर्यजेतेत्यस्य वैयर्थ्यं स्यादित्यतस्तत्सार्थक्याय परम्परया संबन्ध आश्रितः । तत्र व्रीहीणां यागे साक्षात्संबन्धः संभवन्नपि

तस्य विशसनात् । अवदीयमानत्वाच्च हृदयादीनाम् । अवदीयमानं हि हविः । यथा पुरोडाशादिः । मध्यात्पूर्वार्धाच्चावद्यतीति वाक्यात् । हृदयादीनि चावदीयमानानि न पशुः । हृदयस्याग्रेऽवद्यति (तै. सं. ६।३।१०।४) इति वाक्यात् । अतो हृदयादीन्येव हवींषि, पशुस्तु प्रकृतिद्रव्यम् ।

---

कर्मभेदप्रसङ्गेनादृष्टान्तरस्वीकारापत्तिप्रसङ्गेन च गौरवप्रस्तत्वात्परित्यक्तः । तथा पशुना यजेतेत्यत्र किं नियामकं येनात्र पशोर्यागाङ्गत्वं साक्षात्संभवदपि परित्यज्यत इत्याशयः । तस्येति । विशसनं हिंसा । यथा व्रीहीन्प्रोक्षतीत्यनेन प्रोक्षणे विहिते प्रोक्षितानां व्रीहीणां यागाङ्गत्वं संभवति न तथा पशोर्विशसने कृते विशस्तस्य पशोः साक्षाद्यागाङ्गत्वं संभवति । तथा च विशसनविधिवैयर्थ्यापत्त्या पशोरवयवद्वारा यागाङ्गत्वं कल्प्यते साक्षात्संभवदपि परित्यज्यत इति भावः । पशोर्हृदयाद्यवयवद्वारा यागाङ्गत्वे हेत्वन्तरमाह—अवदीयमानत्वाच्चेति । दध्ना जुहोतीत्यादौ दध्यादेर्होमादिकर्मसाधनत्वं तृतीयाश्रुत्या प्रतीयते । परंतु तत्साधनत्वं केन रूपेण ग्राह्यमित्याकाङ्क्षायां संभवता रूपेण ग्राह्यं भवति । तच्च संभवद्रूपं हविष्ट्वमिति दध्यादेर्हविष्ट्वप्रतिपत्तिरार्थिकी । प्रकृते तु पशोः साक्षाद्यागाङ्गत्वे परिगृहीते तस्य हविष्ट्वप्रतिपत्तिरार्थिकी वक्तव्या । तदपेक्षया च शाब्दी हविष्ट्वप्रतिपत्तिः शीघ्रोपस्थितिकत्वाद्बलवती । सा च पश्ववयवानां हृदयादीनाम् । तथाहि । देवतोद्देशेनाग्नौ प्रक्षेपार्थमवदीयमानं द्रव्यं हविरित्युच्यते । अवदीयमानं खण्डशो गृह्यमाणम् । तथा च मध्यात्पूर्वार्धाच्चावद्यतीति वाक्यात्पुरोडाशस्य शाब्दी हविष्ट्वप्रतिपत्तिः । तथैव हृदयस्याग्रेऽवद्यतीति वाक्याद्धृदयादीनां शाब्दी हविष्ट्वप्रतिपत्तिः । अतः शीघ्रोपस्थितिकत्वात्पुरोडाश एव हृदयाद्यवयवा एव च साक्षाद्धविष्ट्वेन साधनानि भवन्ति न तु व्रीहयः पशुश्च । ननु पशोर्यागसाधनत्वं स्ववाक्य एव तृतीययावगम्यमानं हृदयस्याग्रेऽवद्यतीति वाक्यान्तरबोधितेनानाकाङ्क्षितेन च हृदयादीनां साधनत्वेन कथं बाध्यत इति चेत्—भ्रान्तोसि । बाध्यबाधकभावोत्र नास्त्येव । विषयभेदात् । पशुना यजेतेत्यत्र पशोः साधनत्वं शब्दादवगम्यते न तु हविष्ट्वम् । हृदयस्याग्रेऽवद्यतीत्यत्र तु हृदयादीनां हविष्ट्वं शब्दतोवगम्यते न तु साधनत्वम् । तथा च विषयभेदे तुल्यार्थत्वाभावात्कथं बाध्यबाधकभावः । यद्यत्र बाध्यबाधकभावो नास्ति तर्हि कथमत्रैकवाक्यतेति चेदुच्यते । पशुना यजेतेत्यत्र शब्दतोवगम्यमानं पशोः साधनत्वं केन प्रकारेणेत्याकाङ्क्षायां यावत्पशोर्हविष्ट्वं प्रकल्प्य तेन रूपेण साधनत्वं प्रकल्प्यते तावत्पशुसंबन्धिहृदयाद्यवयवानां हृदयस्याग्रेऽवद्यतीत्यादिश्रुत्या शब्दत एव साक्षाद्बोधितं हविष्ट्वं क्लृप्तमेवेति तदुपस्थित्या तेनैवोक्ताकाङ्क्षाया उपशमात्पशोर्हविष्ट्वप्रकल्प्तिरनवसरग्रस्तैव भवति । एतदेव च बाध्यत्वं यत्पशुना यजेतेत्यत्र पशोर्हविष्ट्वकल्पना नास्तीति ।

पात्नीवतयागे तु साक्षात्पशुरेवाङ्गम् । तस्य जीवत एव 'पर्यग्निकृतं पात्नीवतमुत्सृजति' ( तै. सं. ६।६।३।१ ) इत्युत्सर्गविधानात् । यत्र तु विशसनं तत्र पशुः प्रकृतिद्रव्यमित्येव सिद्धम् ।

एवं व्रीहयोऽपि प्रकृतिद्रव्यतया यागाङ्गं तृतीयाश्रुत्येति । आरुण्यस्यापि

---

न तु पशुनेति तृतीयया प्रतिपाद्यमानं पशोर्यागसाधनत्वं कथमपि बाध्यते । प्रत्युत तत्पशोर्यागसाधनत्वमेव तदीयहृदयाद्यवयवानां हविष्ट्वप्रतिपादनेन समर्थ्यते । हृदयाद्यवयवानां हविष्ट्वोक्त्या तेषां यागसाधनत्वकल्पना त्वकिंचित्करी । कृत्स्नेन पशोः साधनत्वेनैव यागोपकारस्य जायमानत्वादित्याहुः । एवं च विशसनविधिसार्थक्याय पशोः परम्परयैव च यागाङ्गत्वं न साक्षादिति सिध्यति । तर्हि यत्र पशोर्विशसनं न विधीयते तत्र पशोः साक्षादेव यागाङ्गत्वं स्यादिति चेत्--इष्टमेवैतत्संगृहीतं भवति । तदाह--पात्नीवतेति । पत्नीवानग्निः । स पत्नीवत्त्वगुणविशिष्टोऽग्निर्देवतास्य स पात्नीवतः । पत्नीवच्छब्दात्सास्य देवता ( पा. सू. ४।२।२४ ) इति सूत्रेणाणप्रत्ययः । अयमाग्नेयः पशुः । ज्वलता दर्भेण प्रदक्षिणीकरणं पर्यग्निकरणम् । अयं हविषः संस्कारः । तादृशसंस्कारेण संस्कृतोयं पशुः पात्नीवतयागे जीवन्नेवोत्सृज्यते । एवं पशोरिव (पृ. ७५ प. १) इत्यादिनेत्यंव सिद्धम् ( पृ. ७७ प. ३ ) इत्यन्तेन ग्रन्थेन दृष्टान्ते परम्परया पशोर्यागाङ्गत्वमुपपाद्य दार्ष्टान्तिके योजयति-एवं व्रीहय इति । एवं व्रीहुदाहरणेन द्रव्यस्य यागाङ्गत्वं प्रदर्श्य विभक्तिश्रुत्या गुणस्यान्याङ्गत्वमुदाहरति--आरुण्यस्यापीति । ज्योतिष्टोमप्रकरणे श्रूयते--अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति इति । अत्र अरुणा पिङ्गाक्ष्येकहायनीति च प्रकृतिभागः क्रीधात्वभिधात्री श्रुतिः । क्रीणातीत्यत्रत्याख्यातप्रत्ययो विधात्री श्रुतिः । पदत्रयेपि तृतीयाप्रत्ययो विभक्तिरूपा विनियोक्त्री श्रुतिः । तत्र पिङ्गाक्ष्यैकहायन्येति च पदद्वये तृतीयाश्रुतिर्द्रव्यस्य क्रयाङ्गत्वं बोधयति । पिङ्गे आक्षिणी यस्या एकं हायनं यस्या इति चान्यपदार्थे विहितेन बहुव्रीहिसमासेन तयोः शब्दयोर्द्रव्याभिधायकत्वात् । तच्च द्रव्यं गौरित्यन्यत् । अरुणाशब्दस्त्वारुण्यगुणमात्रवाचको लाघवात् । न त्वारुण्यगुणविशिष्टं द्रव्यमभिधत्ते । गुणविशिष्टेर्थेरुणाशब्दस्य शक्तिस्वीकारे गौरवापत्तेः । अनन्यलभ्यस्यैव शब्दार्थत्वात् । आश्रयस्याक्षेपेण लाभसंभवात् । तदेतत्पूर्वं यथा गोशब्दस्य गोत्वम् ( पृ. ६ प. ७ ) इत्यत्र निरूपितम् । तथा चात्रारुणयेति तृतीयाश्रुत्या प्रकृत्यर्थस्यारुण्यगुणस्य क्रयाङ्गत्वं बोध्यते । ननु नारुण्यगुणस्य क्रयाङ्गत्वं संभवति । क्रयो नाम कंचित्पदार्थं दत्त्वा कस्यचित्पदार्थस्य ग्रहणम् । दानं ग्रहणं च मूर्तपदार्थस्यैव संभवति । न त्वमूर्तस्य गुणमात्रस्य । तस्याश्रयीभूताद्द्रव्यान्निष्कृष्य दानाद्यसंभवात् । तथा चात्र सोमस्य मूर्तद्रव्यस्य ग्रहणं संभवति न त्वारुण्यस्य

क्रयाङ्गत्वं तृतीयाश्रुत्या । न चामूर्तस्य तस्य कथं क्रयाङ्गत्वमिति वाच्यम् । एकहायनीरूपद्रव्यपरिच्छेदद्वारा तदुपपत्तेः ।

व्रीहीन्प्रोक्षतीत्यत्र प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीयाश्रुत्या । तच्च प्रोक्षणं

---

गुणस्य दानं संभवतीति कथमारुण्यस्य क्रयाङ्गत्वमुच्यत इति चेन्न । आरुण्यगुणस्य साक्षात्क्रयाङ्गत्वासंभवेपि स्वाश्रयीभूतद्रव्यद्वारा परम्परया तस्य क्रयाङ्गत्वसंभवात् । यथारुणेति स्त्रीप्रत्यय आरुण्यगुणाश्रयीभूतगोरूपद्रव्यगतं स्त्रीत्वं द्योतयन्परम्परयारुण्यस्य गुणस्य स्त्रीत्वेन संबन्धं बोधयति । तथा अरुणयेति तृतीयाप्रत्ययोप्यारुण्यगुणाश्रयीभूतस्य गोरूपद्रव्यस्य क्रयाङ्गत्वं द्योतयन्परम्परयारुण्यस्य गुणस्य क्रयाङ्गत्वं बोधयतीति न कश्चिद्दोषः । अत्र कारकस्य क्रियथैवान्वय इति नियमानुसारेण पदत्रयेपि तृतीयोपात्तस्य करणकारकस्य पार्थक्येन क्रयभावनायामन्वयः । आरुण्यकरणिका पिङ्गाक्षीकरणिका एकहायनीकरणिका च या भावना तादृशभावनासाध्यभूतेन क्रयेण सोमं भावयेदिति बोधः । या चारुण्यगुणविशिष्टा गौः सैव पिङ्गलवर्णविशिष्टाक्षिमती सैव चैकसंवत्सरविशिष्टेत्येवमभेदबोधस्तु पार्ष्ठिकः प्रत्यासत्तिन्यायाज्जायते । अत्रोक्तधर्मविशिष्टया गवा कथं भावयेत् तादृशेन क्रयेण सोमं भावयेदित्येवं कये विरुद्धत्रिकद्वयापत्तिर्दोषः । तद्दोषस्वरूपं च प्राक्प्रदर्शितम् ( पृ. २४ प. ५ ) । अयं च दोषो यद्यपि वाक्यभेदाश्रयणेन परिहर्तुं शक्यते तथापि वाक्यभेदाश्रयणे गौरवम् । अतोत्र विशिष्टविध्याश्रयणेन स दोषः परिहरणीय इति वदन्ति । ये त्वरुणेत्यादिपदानां गुणविशिष्टेर्थे शक्तिं स्वीकुर्वन्ति तेषां मते पिङ्गाक्ष्यैकहायन्येति पदद्वयवदरुणयेत्यपि द्रव्यस्यैव विनियोग उदाहरणमिति बोध्यम् ।

अत्र केचिदाहुः । विभक्तिरूपा विनियोक्त्री श्रुतिस्तृतीयैव न त्वन्या द्वितीयाद्याः । तासामङ्गत्वप्रतिपादकत्वाभावेन विनियोगविधिसहकारित्वाभावात् । विनियोगविधिना हि कस्यचित्क्वचिदङ्गत्वेन संबन्धो बोध्यते । तृतीया च कर्तृकरणयोस्तृतीया ( पा. सू. २।३।१८ ) इति पाणिनिसूत्रेण करणकारके विधीयमानाङ्गत्वं प्रतिपादयति । यतः करणं साधकतमम् । साधकं च साध्यस्याङ्गं भवत्येव । द्वितीया तु विधीयमाना नाङ्गत्वं बोधयितुं प्रभवति । प्रत्युत कर्मणः साध्यत्वेन साध्यस्य चाङ्गित्वेनाङ्गित्वं प्रतिपादयेन्नाङ्गत्वम् । चतुर्थ्यादिविभक्तयस्तु संप्रदानाद्यर्थेषु विधीयमानाः कथं विशिष्याङ्गत्वं प्रतिपादयितुं प्रभवेयुरिति । तदेतत्केश्चिदुक्तं न युक्तमिति ध्वनयन्द्वितीयाविभक्तिरूपां विनियोक्त्रीं श्रुतिमुदाहरति--व्रीहीन्प्रोक्षतीति । अयं भावः । अङ्गप्रधानसंबन्धबोधको विधिर्हि विनियोगविधिरिति प्रागुक्तम् ( पृ. ७२ प. १ ) । तत्सहकारिभूता विनियोक्त्री श्रुतिश्च सा भवति यस्याः श्रवणमात्रेणैव स संबन्धो

न व्रीहिस्वरूपार्थम्। स्वरूपे आनर्थक्यात्। व्रीहिषु प्रोक्षणं विनाऽनुपपत्त्यभा-

---

बुद्ध्यारूढो भवति। न तु विशिष्याङ्गत्वमुखेन तादृशसंबन्धप्रतिपादकत्वं तस्या अपेक्षितमित्याग्रहः। तथा च यथा समानाभिधानरूपा विनियोक्त्री श्रुतिरङ्गप्रधानरूपसंबन्धिद्वयमात्रप्रतिपादिका केवलं समानाभिधानबलादेव स्वप्रतिपाद्ययोर्द्वयोरर्थयोर्मिथोङ्गाङ्गिभावसंबन्धं श्रवणमात्रेणैव श्रोतुर्बुद्धावारोहयति यथा चैकपदरूपा विनियोक्त्री श्रुतिः स्वघटकप्रकृतिप्रत्ययादिभागद्वये-नाङ्गप्रधानरूपसंबन्धिद्वयमात्रप्रतिपादिका केवलं तादृशभागद्वयस्य स्वस्यां समावेशबलादेव स्वघटकभागद्वयप्रतिपाद्ययोर्द्वयोरर्थयोर्मिथोङ्गाङ्गिभावसंबन्धं श्रवणमात्रेणैव श्रोतुर्बुद्धावारोहयति यथा च तृतीयाविभक्तिर्विभक्तिस्वभाव-बलादेव स्वप्रकृत्यर्थस्यान्वितार्थयोर्मिथोङ्गाङ्गिभावसंबन्धं श्रवणमात्रेणैव श्रोतु-र्बुद्धावारोहयति तथैव द्वितीयादिविभक्तिरपीति तस्या विनियोक्त्रीत्वं को निवारयेत्। एतावान् परं विशेषः यत्तृतीया स्वप्रकृत्यर्थस्याङ्गत्वमवगमयति। द्वितीया तु प्रायः स्वप्रकृत्यर्थस्याङ्गित्वमवगमयति। तथा चाङ्गत्वमुखेन वाङ्गि-त्वमुखेन वा संबन्धबोधो भवतु संबन्धोऽवबुध्यत एवेति न विशेषः कश्चित्। ननु प्रकृते व्रीहीन् प्रोक्षतीत्यत्र प्रोक्षणस्य व्रीहिनिरूपितमङ्गत्वमिति कथमव-गम्यते। व्रीहीणां प्रोक्षणनिरूपितमङ्गत्वमिति कुतो नोच्यते। किं च द्वितीया-विभक्तिः स्वप्रकृत्यर्थस्य कर्मत्वमवगमयति। कर्मत्वं च किंचित्क्रियानिरूपितं भवति। क्रियोपसर्जनीभूतार्थवाचकादेव च संबन्धबोधिका विभक्तिर्विधी-यते। तथा च शाब्दे बोधे व्रीहीणां प्रोक्षणाङ्गत्वमेवावभासते। एवं चात्र प्रोक्षणस्य व्रीह्यङ्गत्वं नोपपद्यत इति चेन्मैवम्। शाब्दे बोधे व्रीहीणामङ्गत्वं वा भवतु अङ्गित्वं वा भवतु। अङ्गप्रधानसंबन्धबोधको विधिर्विनियोगविधिरित्यत्र न शाब्दबोधानुसारेणाङ्गत्वं प्रधानत्वं च ग्राह्यं भवति। किं तर्हि याज्ञे कर्म-ण्युपकार्योपकारकभावमालोच्य तदनुसारेणाङ्गप्रधानभावोऽवगन्तव्यः। येनो-पक्रियते तदङ्गम्। यदुपक्रियते तत्प्रधानम्। प्रकृते च व्रीहीणां प्रोक्षणे कृते प्रोक्षणे व्रीहिभिः कश्चिदुपकारः क्रियत इति कल्पनायामुपकारोऽनर्थकः स्यात्। प्रोक्षणा-नन्तरमग्रे याज्ञे कर्मणि प्रोक्षणस्य काप्युपयोगाभावेन प्रोक्षणे व्रीहिकृतोपका-रस्याकिंचित्करत्वात्। अदृष्टद्वारापि न तस्योपयोगः कल्पयितुं शक्यते। यद्यग्रे प्रोक्षणस्योपयोगः स्यात्तर्हि स उपयोग उपकृतेनैव प्रोक्षणेनादृष्टद्वारा जायत इति कल्पयितुं शक्येत। प्रकरणालोचनायां तु व्रीहीणामग्रे याज्ञे कर्मण्युपयोगो दृश्यते व्रीहिभिर्यजेतेति। अनेन विधिना व्रीहीणां यागे विनियोगः प्रतिपाद्यते। तथा च यथा भाव्युपयोगानुसारेण व्रीहीनवहन्तीत्यत्रावघात उपकारको व्रीहयश्चोपकार्या इति निश्चीयते तथैवात्रापि व्रीहीन् प्रोक्षतीति विहितेन प्रोक्षणेन व्रीहीणामुपकार्यत्वं प्रोक्षणस्योपकारकत्वमिति निश्चयः। इयांस्तु विशेषः। अवघातेन व्रीहिषु जायमान उपकारस्तुषनिवृत्तिद्वारा तण्डुलस्वरूप-

वात् । किंत्वपूर्वसाधनत्वप्रयुक्तं यदि व्रीहिषु प्रोक्षणं क्रियते तदा तैर्यागे अनुष्ठितेऽपूर्वं भवति नान्यथेति । अतः प्रकरणसहकृतया द्वितीयाश्रुत्या तण्डुलनिर्वृत्तिप्रणाड्या यदपूर्वसाधनं तदङ्गत्वं प्रोक्षणस्योच्यत इति । एवं सर्वेष्वप्यङ्गेषु अपूर्वप्रयुक्तत्वं वेदितव्यम् ।

एवमिमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते ( तै. सं. ५।१।२।१ ) इत्यत्रापि द्वितीयाश्रुत्या मन्त्रस्याश्वाभिधान्यङ्गत्वम् । यत्तु वाक्यी-

---

निष्पत्तिरूपो दृष्ट एव । प्रोक्षणेन तु न तथा कश्चिदुपकारो व्रीहिषु दृश्यते । अतोऽग्रे यागविनियुक्तव्रीहिजन्यं यत्फलमवान्तरापूर्वरूपमदृष्टं तत्प्रोक्षणकृतोपकारैरेव व्रीहिभिर्जायत इति कल्पनीयं भवतीति । एवं चात्र न केवलं व्रीहीनिति द्वितीयाश्रुतिः प्रोक्षणस्य व्रीह्यङ्गत्वं प्रतिपादयितुं प्रभवति किं तु प्रोक्षणानन्तरभाविनं व्रीहीणां यागे विनियोगं संभाव्य तत्सहत्वेनैव । सा च संभावना एतत्प्रकरणस्थव्रीहिभिर्यजेतेत्यादिवाक्यार्थपर्यालोचनया जायते । एतदभिप्रायेणोक्तं प्रकरणसहकृतया द्वितीयाश्रुत्या ( पृ. ८० प. २ ) इति । किंत्वपूर्वेति । प्रोक्षणस्य यद् व्रीह्यङ्गत्वं तन्न व्रीहिस्वरूपनिष्पादकत्वेन रूपेण किं त्वपूर्वसाधनत्वविशिष्टं यद्व्रीहिस्वरूपं तादृशविशिष्टव्रीहिस्वरूपनिष्पादकत्वेन रूपेणैव । प्रोक्षणेन संस्कृतानामेव व्रीहीणामपूर्वसाधनत्वं न तु केवलानामिति फलितम् । संस्कृतव्रीहीणामपूर्वोत्पादकत्वे प्रमाणं च व्रीहीन् प्रोक्षतीति विनियोगविधिरेवेति भावः । तण्डुलनिर्वृत्तिप्रणाड्येति । निर्वृत्तिर्निष्पत्तिः । तण्डुलस्वरूपोत्पादनद्वारेत्यर्थः ।

एवं द्वितीयाश्रुत्या द्वितीयाप्रकृत्यर्थं प्रति धात्वर्थस्य प्रोक्षणादेरङ्गत्वं प्रदर्श्याधुना धात्वर्थद्वारा तदितरस्याप्यङ्गत्वं द्वितीयाश्रुत्या प्रदर्शयति-एवमिमामिति । इमामगृभ्णन्रशनामृतस्येति मन्त्रभागः । ऋतशब्देन सत्यवाचिनात्रावश्यंभावि कर्मफलमुच्यते । कर्मफलस्यावश्यंभावित्वेन तत्र सत्यत्वोपचारात् । कर्मफलभूतस्याश्वस्येमां रशनां जगृहुरिति तन्मन्त्रभागस्यार्थः । अगृभ्णन्नित्यत्र ग्रहधातोर्लङ् । हृग्रहोर्भश्छन्दसि ( पा. सू. ८।२।३२ वार्ति० ) इत्यनेन ग्रहधातोर्हकारस्य भकारः । इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते ( तै. सं. ५।१।२।१ ) इति मन्त्रविनियोगबोधिका ब्राह्मणश्रुतिः । अत्रेमामगृभ्णन्रशनामृतस्येत्येवं मन्त्राद्यभागप्रदर्शनेन स संपूर्णो मन्त्र इतिशब्देन परामृश्यते । तं च परामृश्य तस्य मन्त्रस्याश्वाभिधान्यादाने विनियोगस्तेन ब्राह्मणवाक्येन क्रियत इति प्रतीयते । अश्वाभिधानीमिति द्वितीयाश्रुतिरङ्गत्व-

बोधिका । तत्र च नादानस्याङ्गमश्वाभिधानी । किंत्वादानमेवाश्वाभिधान्यङ्गम् । उक्तन्यायात् । अभिधानी रशना । अत्र च संस्कृताया अश्वाभिधान्या अपूर्वसाधनत्वमस्मादेव विनियोगविधायकब्राह्मणवाक्यबलाद् गम्यते । स च संस्कारो न केवलेनादानेन भवति किं तु मन्त्रोच्चारणपूर्वकेणैवादानेन । विनियोगविधौ मन्त्रनिर्देशात् । अत्र च द्वयोरङ्गत्वं प्रतीयते । तत्रैकं मन्त्रस्यादानाङ्गत्वम् । अपरं चादानस्याश्वाभिधान्यङ्गत्वम् । तत्रादानस्याश्वाभिधान्यङ्गत्वमश्वाभिधानीमिति द्वितीयाश्रुत्यावगम्यत इति निर्विवादम् । मन्त्रस्य तु यदादानाङ्गत्वं तच्छ्रुतिप्रमाणेनाथ वा वाक्यप्रमाणेनेति विचार्यते। तत्र पूर्वोक्तपरामर्शक इतिशब्दः पूर्वोक्तमर्थमेव केवलं प्रतिपादयत्यथवा पूर्वोक्तार्थस्य येन कर्मत्वकरणत्वादिरूपेणान्वयस्तादृशरूपविशिष्टं पूर्वोक्तार्थं प्रतिपादयतीति कल्पद्वयम् । तत्र द्वितीये कल्पे इतीत्यस्येत्यनेन मन्त्रेणेत्यर्थादितिशब्दश्रुत्या जायमानोयं मन्त्रस्यादाने विनियोगः श्रौत एव । आद्यकल्प एव तु युक्तः । इतिशब्देन विशिष्टार्थप्रतिपादने प्रमाणाभावात् । गौरिति शब्द इत्यत्राभेदस्येव गवित्ययमाहेत्यादौ कर्मत्वादेरप्याकाङ्क्षावशात्संसर्गमर्यादया भानसंभवेनान्यलभ्यत्वात् । तथा चात्रेतिशब्देन पूर्वोक्तं मन्त्रमात्रमेव बोध्यते । मन्त्रस्यादानसाधनत्वं तु वाक्यतात्पर्यविषयीभूतमिति संसर्गमर्यादया भासते । न तत्रेतिशब्दस्य कश्चन व्यापारः । अत एव विनियोक्त्र्याः श्रुतेः प्रकारा विभक्तिरूपा समानाभिधानरूपैकपदरूपा चेति त्रय एवोक्ताः । साधनांशस्येतिशब्दप्रतिपाद्यत्वे तु निपातरूपश्चतुर्थः प्रकारस्तत्र वक्तव्यः स्यात् । एवं च मन्त्रस्यादानेङ्गत्वेन विनियोगो न श्रुतिप्रमाणगम्यः । किं तु तत्र वाक्यं प्रमाणम् । समभिव्याहारो वाक्यम् । अङ्गाङ्गिनोरेकस्मिन्वाक्ये सहोच्चारणमिति यावत् । अत्र चेमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त इति श्रुतौ मन्त्रपरामर्शकस्येतिशब्दस्यादानबोधकस्यादत्त इत्यस्य च सहोच्चारणं वर्तते । अत्र चेयं व्यवस्था बोध्या । न सहोच्चारणमात्रेण मन्त्रस्यादानाङ्गत्वेन विनियोगो भवति । किं तु तेन सहोच्चारणेन मन्त्रस्यादानसाधनत्वमनुमीयते । मन्त्रस्यादानसाधनत्वं चादानसमकालिकोच्चारणविषयत्वेन रूपेण बोध्यम् । अनुमितेन च तेन साधनत्वेन साधनार्थबोधिका तृतीया कल्प्यते । तया च कल्पितया तृतीयाश्रुत्या मन्त्रस्यादाने विनियोग इति । तस्मान्मन्त्रस्यादाने विनियोगो न श्रौतः किंतु वाक्यीय इति सिद्धम् । ननु चात्रास्तु वाक्यप्रमाणेन मन्त्रस्यादानाङ्गत्वम् । तथा श्रुतिप्रमाणेनादानस्याश्वाभिधान्यङ्गत्वम् । विधिबोधकः शब्दस्त्वत्रादत्त इत्याख्यातप्रत्यय एक एव दृश्यते । तेन च कथं द्वयोर्विनियोगो विहितो भवेत् । आदत्त इत्यस्यावृत्त्योभयत्र संबन्धे तु वाक्यभेदो दुरुद्धरः । किं चैवमादत्त इत्यस्यावृत्त्योभयत्र संबन्धाङ्गीकारेणेमामगृभ्णन्रशनामृतस्येतिमन्त्रेणादत्ते अश्वाभिधानीमादत्ते इति वाक्यार्थ-

योऽयं विनियोग इति तन्न । तथासति वाक्याल्लिङ्गस्य बलीयस्त्वेन यावद्वा-द्वयाश्रयणेऽपि यन्मन्त्रसाधनकमादानं तदेवाश्वाभिधानीकर्मकमादानमित्येवं द्वयोरादानयोरैक्यप्रतिपत्तिर्न स्यात् । तथा च मन्त्रोच्चारणपूर्वकमादानं यस्य कस्यापि वस्तुनः स्यात् । अश्वाभिधान्यादानं चामन्त्रकमेव स्यादित्यनिष्टमापद्येतेति चेत्-अत्रोच्यते । अश्वाभिधान्यङ्गमादानमादानाङ्गं च मन्त्र इत्येवमङ्गप्रधानभाव उभयत्र प्रमाणात्सिद्ध एव । अङ्गस्याङ्गं च परंपरया मुख्यस्याङ्गं भवत्येवेत्यादानक्रियाद्वारा मन्त्रस्याश्वाभिधान्यङ्गत्वमपि सिद्धं भवति । एतदेव च मन्त्रस्याश्वाभिधान्यङ्गत्वमत्राख्यातेन विधीयत इत्यङ्गीकारे न विधिद्वयं नाप्यादत्त इत्यस्यावृत्तिः कल्प्येति न कश्चिद्दोषः । केषांचिन्मतं दूषयितुमनुवदति–यस्तु वाक्यीयोयमिति । अयमाशयः । इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्त इति ब्राह्मणवाक्ये इमामगृभ्णन्नित्यादिमन्त्रस्याश्वाभिधान्यङ्गत्वेन विनियोगः श्रुतेर्विवक्षितः । स च श्रुतिप्रमाणेनात्र वक्तुं न शक्यते । विभक्तिश्रुतिर्हि स्वप्रकृत्यर्थस्वान्वितार्थयोर्मिथोऽङ्गाङ्गिभावं प्रतिपादयति । अत्र चेतिशब्दपरामृष्टो मन्त्रो न द्वितीयाप्रकृत्यर्थः । नापि द्वितीयान्वितोऽर्थः । अतः कथं तस्याङ्गत्वं प्रतिपादयितुं द्वितीयाश्रुतिः शक्नुयात् । अतो वाक्यप्रमाणेनैव मन्त्रस्याश्वाभिधान्यङ्गत्वं प्रतिपादनीयम् । समभिव्याहारो वाक्यम् । मन्त्रपरामर्शकेतिशब्दस्याश्वाभिधानीशब्दस्य चात्र ब्राह्मणवाक्ये समभिव्याहारो दृश्यते । मन्त्रे चामुकस्य रशनेत्येवं विशेषशब्दाभावेऽपि विनियोजके ब्राह्मणवाक्येऽश्वाभिधानीशब्दसमभिव्याहारेण मन्त्रस्थरशनाशब्दस्याश्वरशनारूपविशेषार्थप्रतिपादकत्वमनुमीयते । तेन चानुमितेन लिङ्गेन मन्त्रस्याश्वरशनाङ्गत्वबोधिका मन्त्रेणेत्येवं तृतीयाश्रुतिर्ब्राह्मणवाक्येऽनुमीयते । तया चानुमितश्रुत्या मन्त्रस्याश्वरशनाङ्गत्वेन विनियोगः । नन्वेवं वाक्यप्रमाणेनैवोक्तप्रकारेण लिङ्गश्रुतिकल्पनाद्वारा मन्त्रस्याश्वाभिधान्यङ्गत्वे सिद्धेऽश्वाभिधानीमिति द्वितीयाश्रुतिर्निष्प्रयोजना स्यात् । प्रत्युत वाक्यप्रमाणापेक्षया श्रुतिप्रमाणस्य बलीयस्त्वेनाश्वाभिधान्यङ्गत्वमादानस्यैव स्यान्न तु मन्त्रस्येति चेन्न । विरोधे हि बाध्यबाधकभावः । अत्र तु श्रुतिप्रमाणसिद्धमादानस्याश्वाभिधान्यङ्गत्वमभिसंदध्यैव तदविरोधेन वाक्यप्रमाणेन मन्त्रस्याङ्गत्वं साध्यते । मन्त्रस्याश्वाभिधान्यङ्गत्वं हि केन रूपेणेत्याकाङ्क्षायामश्वाभिधान्यङ्गभूतादानसाधनत्वेनैव रूपेण नान्येन केनचिद्रूपान्तरेणेति यो निश्चयः स श्रुतिप्रमाणसिद्धस्यादानेऽश्वाभिधान्यङ्गत्वस्योपस्थित्यैव जायते । अत एव च नाश्वाभिधानीमिति द्वितीयाश्रुतेर्वैयर्थ्यम् । मन्त्रगताङ्गत्वस्य प्रकारविशेषसंसूचनेन चारितार्थ्यात् । मन्त्रस्यादानसाधनत्वं त्वादानसमानकालिकोच्चारणविषयत्वेन बोध्यम् । एवं चात्र द्वितीयाश्रुतिः स्वसाध्यस्यार्थस्याबाधेनोदासीनेव वाक्यप्रमाणकुक्षिप्रविष्टा भवतीति । तथासतीति । सर्वतो बलीयस्याः श्रुतेरौदासीन्यं वाक्यप्रमाणकुक्षिप्रविष्ट-

क्यादश्वाभिधान्यङ्गत्वं भवति तावल्लिङ्गाद्रशनामात्राङ्गत्वमेव स्यात्, स्योनं ते सदनं कृणोमीत्यस्यैव सदनाङ्गत्वम् । श्रौतविनियोगपक्षे तु यावल्लिङ्गाद्रश-

---

त्वकल्पनं च न न्याय्यम् । किं तु द्वितीयाश्रुतिरेवात्राग्रणीभूत्वा विवक्षितार्थानुसारेण वाक्यस्याश्रयेन मन्त्रस्याश्वाभिधान्यङ्गत्वं साधयति । यद्यपि मन्त्रो न द्वितीयाप्रकृत्यर्थो नापि द्वितीयार्थान्वित इति द्वितीयाश्रुतेर्न मन्त्रेण सह कश्चित्संबन्धः प्रत्यक्षतो दृश्यते तथापि वाक्यप्रमाणेन स कल्प्यते । आदानक्रिया हि द्वितीयार्थान्विता । मन्त्रश्च वाक्यप्रमाणेनादानस्याङ्गभूतः । एवं चात्राश्वाभिधानीमिति द्वितीयाश्रुतिर्वाक्यप्रमाणसाहाय्येन स्वसंबद्धस्य मन्त्रस्याश्वाभिधान्यङ्गत्वं बोधयति । तथा चात्र वाक्यप्रमाणमेव श्रुतिप्रमाणकुक्षिप्रविष्टं भवति। युक्तं चैतत् । न बलीयसा दुर्बलोऽनुवर्त्यः दुर्बलेनैव हि बलीयाननुसरणीयो भवति । किं च यावच्छ्रुतिर्विनियोक्तृत्वेनावतिष्ठते न तावदन्येषां दुर्बलानां लिङ्गादीनामुदयः । यदि चात्र द्वितीयाश्रुतेरौदासीन्यमवलम्ब्येत तर्हि वाक्यप्रमाणापेक्षया प्रबलेन लिङ्गप्रमाणेन वाक्यप्रमाणमपसार्य मन्त्रस्य रशनामात्राङ्गत्वं स्यादिति गर्दभरशनाग्रहणेऽपि मन्त्रो विनियुज्येत । मन्त्रेऽश्वशब्दाभावेन लिङ्गस्य रशनासामान्यविषयकत्वात् । अश्वाभिधान्यङ्गत्वमिति । अश्वाभिधान्या अङ्गमिति षष्ठीतत्पुरुषः । मन्त्रस्येत्यध्याहारः । स्योनं त इति । तैत्तिरीयब्राह्मणे तृतीयाष्टके सप्तमे प्रपाठके पञ्चमेऽनुवाकेऽयं मन्त्रः पठ्यते । तत्र दर्शपूर्णमासप्रकरणं प्रस्तुतम् । स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि । तस्मिन्त्सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः ( तै. ब्रा. ३।७।५ ) इति । अत्र भागद्वयम् । एकः सदनमन्त्रः । अपरः सादनमन्त्रः । पुरोडाशस्थापनार्थं स्थानकरणं सदनम् । पुरोडाशस्थापनं सादनम् । हे पुरोडाश ते तव स्योनं सुखहेतुभूतं सदनं स्थानं करोमि । यतस्तत्स्थानं घृतस्य धारया सुशेवं सुसेवितुं योग्यं यथा भवति तथा कल्पयामि । तत्र मार्दवं संपादयामीति यावत् । हे व्रीहीणां मेध सारभूत पुरोडाश तस्मिन्स्थाने सीदावस्थानं कुरु । तथा सुमनस्यमानः सुप्रीयमाणः संस्त्वं तस्मिन्नमृते निरुपद्रवे स्थाने प्रतितिष्ठ प्रतिष्ठितो भवेत्यर्थः । अत्र कल्पयामीत्यन्तः पूर्वो भागः सदनरूपार्थप्रकाशकः । सुमनस्यमान इत्यन्तो द्वितीयो भागः सादनरूपार्थप्रकाशकः । अर्थप्रकाशनसामर्थ्यमेव च लिङ्गम् । लिङ्गप्रमाणेन चात्र विनियोक्त्री श्रुतिरनुमीयते स्योनं त इत्यनेन सदनं करोति तस्मिन्सीदेत्यनेन तत्र प्रतिष्ठापयतीति । अनुमितया चानया श्रुत्या प्रथममन्त्रस्य पुरोडाशस्थाननिष्पादनकर्मणि विनियोगः । द्वितीयमन्त्रस्य च पुरोडाशस्थापनकर्मणि विनियोग इति सिद्धान्तः । अत्रैवमाशङ्क्यते । यद्यप्यत्र भागद्वयस्य पार्थक्येन सदनसादनरूपभिन्नार्थबोधकत्वं तथाप्युत्तरभागे तस्मिन्निति तच्छ-

त्वेन पूर्वभागनिर्दिष्टस्य सदनस्य परामर्शाद् द्वयोर्भागयोः पुनर्वाक्यैकवाक्यतया महावाक्यत्वमापन्न एकार्थप्रतिपादक एक एव संपूर्णो मन्त्रः स्यात् । एकार्थप्रतिपादकत्वं च द्विधा संभवति । पूर्वभागनिर्दिष्टं सदनमेव श्रुतेर्मुख्यतात्पर्यविषयीभूतम् । उत्तरभागनिर्दिष्टं सादनं तु सदनप्राशस्त्याय सदनाङ्गत्वेन निर्दिष्टमित्येकः पक्षः । अस्मिंश्च पक्षेस्य संपूर्णस्यैकस्य मन्त्रस्य सदनकरण एव विनियोगः स्यात् । सादनं तु तूष्णीमेव स्यात् । एतद्वैपरीत्येनोत्तरभागनिर्दिष्टं सादनमेव श्रुतेर्मुख्यतात्पर्यविषयीभूतम् । पूर्वभागनिर्दिष्टं सदनं तु सादनप्राशस्त्याय सादनाङ्गत्वेन निर्दिष्टमिति द्वितीयः पक्षः । अस्मिंश्च पक्षेस्य संपूर्णस्यैकस्य मन्त्रस्य सादन एव विनियोगः स्यात् । सदनं तु तूष्णीमेव स्यात् । विनिगमनाविरहादुभयत्रापि श्रुतेस्तात्पर्यं कल्प्यते चेत्सदनेपि संपूर्णस्य मन्त्रस्य विनियोगः स्यात् । सादनेपि च संपूर्णस्य मन्त्रस्य विनियोगः स्यात् । विनियोगश्चायं वाक्यप्रमाणेन जायमानस्तल्लिङ्गश्रुतिकल्पनाद्वारैव स्यादिति त्वन्यत् । एवं च भागद्वयस्य पार्थक्येन विनियोगो न सिध्यतीति । अत्रेत्थं समाधीयते । अत्र बुद्धिव्यापारपरंपराया मार्गद्वयम् । तत्रैको यथा । भागद्वयस्य पार्थक्येन सदनसादनरूपार्थद्वयालोचनम् । इयं प्रथमा भूमिः । ततो द्वितीयक्षणे वाक्यैकवाक्यतया सदनसादनान्यतरैकार्थालोचनम् । एषा द्वितीया भूमिः । तत स्तेन लिङ्गेन तृतीयक्षणे तादृशैकार्थानुसारेण संपूर्णेनैकेन मन्त्रेण तत्कर्म कुर्यादिति श्रुत्यनुमानम् । एषा तृतीया भूमिः । ततश्चतुर्थक्षणे चतुर्थभूम्यां विनियोगसंभवः । अयं वाक्यीयो मार्गः । वाक्यप्रमाणानुसारित्वात् । अपरो मार्गो यथा । प्रथमा भूमिः पूर्ववत् । ततस्तेन लिङ्गेन द्वितीयक्षणे प्रथमेन भागेन सदनं कुर्याद्द्वितीयेन भागेन सादनं कुर्यादिति श्रुत्यनुमानम् । एषा द्वितीया भूमिः । ततस्तृतीयक्षणे भागद्वयस्य पार्थक्येन तत्तत्कर्मणि विनियोगः । एषा तृतीया भूमिः । तृतीयक्षणे च विनियोगस्य जातत्वाद्विनियोगार्थं व्यापृता बुद्धिः कृतकृत्यत्वाच्चतुर्थक्षणे विरतव्यापारा भवति । अयं च लैङ्गिको मार्गः । लिङ्गप्रमाणानुसारित्वात् । तत्र च प्रथमतो मन्त्रे दृष्टे क्वास्य विनियोग इति जिज्ञासया विचारं कर्तुं प्रवृत्ता बुद्धिः प्रथमे क्षणे प्रथमां भूमिमारूढाग्रे मार्गद्वयं पश्यन्ती निश्चायकप्रमाणाभावादमुकेनैव मार्गेण गन्तव्यमिति निर्णेतुमपारयन्ती युगपन्मार्गद्वयमवलम्ब्य व्याप्रियमाणा भवेत् । ततो द्वितीये क्षणे वाक्यीये मार्गे वाक्यैकवाक्यतया सदनसादनान्यतरैकार्थालोचनं लैङ्गिके मार्गे भागद्वयेन क्रमेण सदनसादने कार्ये इति श्रुत्यनुमानं च युगपदेव भवति । ततस्तृतीये क्षणे वाक्यीये मार्गे भागद्वयघटितेनैकेन मन्त्रेण सदनं कुर्यात्सादनं वेति श्रुत्यनुमानं लैङ्गिके मार्गे भागद्वयस्य पार्थक्येन क्रमेण सदनसादनयोर्विनियोगश्च युगपदेव जायते । ततश्चतुर्थे क्षणे तु मार्गद्वयेपि बुद्धिर्विरतव्यापारा भवति । विनियोगस्य जातत्वेनोद्दिष्टार्थस्य सिद्धत्वात् । अतो मार्गद्वयेपि चतुर्थीं भूमिं

नामात्राङ्गत्वं संभवति तावच्छ्रुत्या 'ऐन्द्र्या गार्हपत्यमुपतिष्ठते' (सत्या. श्रौ. सू.) इत्यत्र तृतीयाश्रुत्या ऐन्द्र्या ऋचो गार्हपत्योपस्थानाङ्गत्ववदश्वाभिधान्यां विनियोगः क्रियते इति युक्तं मन्त्रस्याश्वाभिधान्यङ्गत्वम् । तस्माच्छ्रौत एवायं विनियोगः ।

---

नारुरुक्षति बुद्धिः । लैङ्गिके मार्गे तृतीयस्यां भूमौ कृतकृत्यत्वात् । वाक्यीये मार्गे च तृतीयस्यां भूमावीप्सितार्थोपहारस्यान्येन कृतस्यानुसंधानात् । एवं च वाक्यप्रमाणमत्राकिंचित्करं भवति । अत एव च लिङ्गप्रमाणं वाक्यप्रमाणस्य बाधकमित्युच्यते । अनयैव रीत्या श्रुत्यादिषु षट्सु प्रमाणेषु पूर्वस्य परबाधकत्वमुन्नेयम् । तथा च यथा वाक्यप्रमाणं बाधित्वा स्योनं त इत्यस्याद्यभागस्य लिङ्गप्रमाणेन सदनमात्राङ्गत्वं द्वितीयस्य च तस्मिन्सीदेत्यस्य भागस्य सादनमात्राङ्गत्वं भवति तथा प्रकृत इमामगृभ्णन्नित्यत्राश्वाभिधानीमिति द्वितीयाश्रुतिरुदासीना चेद्वाक्यप्रमाणं बाधित्वा लिङ्गप्रमाणेन मन्त्रस्य रशनामात्राङ्गत्वं स्यान्न तु विशेषतोऽश्वरशनाङ्गत्वमिति भावः । ऐन्द्र्या गार्हपत्यमिति । तैत्तिरीयसंहितायां पठ्यते--कदा च न स्तरीरसि नेन्द्र सश्चसि दाशुषे । उपोपेन्नु मघवन्भूय इन्नु ते दानं देवस्य पृच्यते । ( तै. सं. १।४।२२ ) इति । हे इन्द्र कदाचिदपि स्तरीर्हिंसको न भवसि । किं तु दाशुषे हविर्दत्तवते यजमानाय फलप्रदानार्थं सश्चसि गच्छसि । कुत्र । उपोपेन्नु यजमानस्यात्यन्तसमीप एव । हे मघवन्भूय इन्नु पुनरेव देवस्य तव दानं देयं हविः पृच्यते संबध्यते । यजमानेन हविर्दीयते इति तत्र भाष्यम् । इयमैन्द्री ऋक् । इन्द्रो देवतास्या इत्यैन्द्री । अस्याः श्रुतेरिन्द्ररूपार्थप्रकाशनसामर्थ्यं दृश्यते । तेन च लिङ्गेनैन्द्र्येन्द्रमुपतिष्ठते इति श्रुतिमनुमाय तादृशानुमितश्रुत्यास्या ऋच इन्द्रोपस्थाने विनियोगो लिङ्गप्रमाणेन संभवति । परंतु ऐन्द्र्या गार्हपत्यमुपतिष्ठत इति प्रत्यक्षश्रुत्यास्या ऋचो गार्हपत्योपस्थाने विनियोगस्य कृतत्वात्प्रत्यक्षश्रुतेश्चानुमितश्रुत्यपेक्षया बलवत्त्वाद्गार्हपत्योपस्थाने विनियोगो भवति । कदाचनेति ऋचीन्द्रशब्दस्तु इदि परमैश्वर्ये इति धात्वर्थानुसारेण गार्हपत्याभिधायकत्वेन योजनीयः । अत्रैन्द्रीशब्दो गार्हपत्यशब्द उपोपसृष्टः स्थाधातुश्चाभिधात्री श्रुतिः । उपतिष्ठत इत्याख्यातप्रत्ययो विधात्री श्रुतिः । ऐन्द्र्येति तृतीया गार्हपत्यमिति द्वितीया च विनियोक्त्री श्रुतिः । तत्र तृतीययैन्द्र्या ऋच उपस्थानाङ्गत्वं प्रतिपाद्यते । द्वितीयया च गार्हपत्यस्योपस्थानाङ्गित्वं प्रतिपाद्यते । गृहपतिना संयुक्तो गार्हपत्योऽग्निः । गृहपतिना संयुक्ते ञ्यः (पा. सू. ४।४।९० ) इति सूत्रेण गृहपतिशब्दात् ञ्यप्रत्ययः । तथा च यथा लिङ्गप्रमाणं बाधित्वा श्रुतिप्रमाणेनैन्द्र्या ऋचो गार्हपत्योपस्थानाङ्गत्वं भवति तथा प्रकृतेऽश्वाभिधानीमिति द्वितीयाश्रुत्या लिङ्गप्रमाणं बाधित्वा मन्त्रस्याश्वाभिधान्यङ्गत्वं

यदाहवनीये जुहोतीत्याहवनीयस्य होमाङ्गत्वं सप्तमीश्रुत्या । एवमन्योऽपि विभक्तिश्रुत्या विनियोगो ज्ञेयः ।

पशुना यजेतेत्यत्रैकत्वपुंस्त्वयोः समानाभिधानश्रुत्या कारकाङ्गत्वम् । यजेतेत्याख्याताभिहितसंख्याया भावनाङ्गत्वं समानाभिधानश्रुतेः ।

---

निर्णीत इति भावः । अथ सप्तमीविभक्तिरूपां विनियोक्त्रीं श्रुतिमुदाहरति–यदाहवनीय इति । सप्तम्यर्थोऽधिकरणम् । सा च सप्तमीविभक्तिः स्वप्रकृत्यर्थस्य क्रियानिरूपितमधिकरणत्वं बोधयन्ती तस्याधाराधेयभावसंबन्धेन क्रियाङ्गत्वं सूचयति । एवमन्योऽपीति । ऋत्विग्भ्यो दक्षिणां ददातीत्यत्र ऋत्विग्भ्य इति चतुर्थीविभक्तिः संप्रदानत्वबोधिका ऋत्विजां दानाङ्गत्वं सूचयति । अग्नये च प्रजापतये च सायं जुहोतीत्यत्राप्यग्निप्रजापत्योर्देवतयोरुद्देश्यत्वेन होमाङ्गत्वं चतुर्थीविभक्तिः सूचयति । एवं त्रिविधासु विनियोक्त्रीषु श्रुतिषु विभक्तिरूपा श्रुतिरुदाहृता ।

अधुना समानाभिधानरूपामेकपदरूपां चेति द्विविधामपि विनियोक्त्रीं श्रुतिमेकस्मिन्नेव वाक्ये प्रदर्शयति–पशुनेति । प्रागुपपादितमेतत् (पृ. ७४ प. १२)। समानाभिधानश्रुतिरित्यत्राभिधानशब्दे कर्तरि ल्युप्रत्ययः । द्वयोरर्थयोः समान एको योऽभिधायकः शब्दः सा समानाभिधानश्रुतिः । अथवाभिधानशब्दे भावे ल्युट्प्रत्ययः । द्वयोरर्थयोः समानं तुल्यं प्रतिपादनं यस्मादेकस्माच्छब्दाद्भवति सा समानाभिधानश्रुतिः । कारकाङ्गत्वमिति । अतस्तत्र यागसाधनीभूतः पशुरेक एव पुमानेव चालभ्यते । अजायाः स्त्रिय आलम्भने तथा द्वयोः पुंसोरजयोर्बहूनां वाजानामालम्भने त्वविधिरेवेति तत्र नापूर्वोत्पत्तिः प्रत्युतानिष्टमेवापद्येतेति भावः । भावनाङ्गत्वमिति । आर्थभावनाङ्गत्वमित्यर्थः । शाब्दी भावनात्र यद्यपि प्रत्ययेनैव बोध्यते तथापि न सा आख्यातत्वेन प्रत्ययवाच्या किंतु लिङ्त्वेन । अतो न शाब्दभावनाङ्गत्वमाख्यातवाच्यायाः संख्यायाः । आर्थी भावना तु संख्यायाः शाब्दभावनापेक्षया संनिकृष्टतरा भवति । ननु कथमार्थभावनाङ्गत्वं संख्याया युज्यते । अङ्गाङ्गित्वेन प्रकल्पितयोः संख्याभावनयोर्द्वयोरप्यमूर्तत्वात् । अमूर्तं हि मूर्तस्य कस्यचिदङ्गं भवति । तथैव मूर्तस्य मूर्तं किंचिदङ्गं संभवति । एतादृशस्थले च अङ्गित्वेन प्रकल्पितं यदमूर्तं तस्यान्यत्किंचिन्मूर्तमङ्गं शब्दत उपस्थितं भवेच्चेत्तद्द्वारा तदङ्गत्वेन प्रकृतममूर्तमङ्गं प्रकल्पितव्यं भवति । यथारुणया पिङ्गाक्ष्येत्यत्रारुणयेति तृतीयाश्रुत्यारुण्यस्यामूर्तस्यामूर्तक्रयाङ्गत्वं बोधितम् । तत्र च पिङ्गाक्ष्येत्यादिना गोरूपं मूर्तं द्रव्यं क्रयस्याङ्गत्वेनोपस्थितमिति तद्द्वारारुण्यं क्रयाङ्गं भवति । तथात्र वक्तुं न शक्यते । आर्थ-

एकपदश्रुत्या च यागाङ्गत्वम् ।

न चामूर्तायास्तस्याः कथं यागाङ्गत्वमिति वाच्यम् । कर्तृपरिच्छेदद्वारा तदुपपत्तेः। कर्ता चाक्षेपलभ्यः । आख्यातेन हि भावनोच्यते । सा च कर्तारं विनाऽनुपपन्ना तमाक्षिपति ।

---

भावनाङ्गत्वेनान्यस्य मूर्तस्य कस्यचिदत्रानुपस्थितत्वात् । किं च लोके पशुना यजेतेत्यत्राख्यातबोध्यमेकत्वं यागकर्तृगतं प्रतीयते तत्कथमुपपद्यत इति चेत्तत्राह-एकपदश्रुत्येति । यजेतेत्यादावाख्यातप्रत्ययेनान्योत्पादानुकूलत्वेन सामान्यरूपेण भावनाभिधीयते । भावना व्यापारः । धात्वर्थविषये तु मतद्वयम । तत्तत्फलविशेषमात्रं धात्वर्थः नतु भावना धात्वर्थ इत्येकम् । फलानुकूला भावनेत्येवं विशिष्टो धात्वर्थ इति द्वितीयम् । तत्र द्वितीयमते धातुना तत्तत्फलानुकूलत्वेन विशेषरूपेण भावनाभिधीयते । धात्वर्थप्रत्ययार्थभावनयोश्चाभेदान्वयेन भावनाविशेषप्रतीतिः । फलमात्रं धात्वर्थ इत्याद्यमते तु धात्वर्थस्यानुकूलतासंबन्धेन प्रत्ययार्थभावनायामन्वये भावनाविशेषप्रतीतिः। प्रकृते चैकपदश्रुत्या संख्याया यागाङ्गत्वं यदुच्यते तदुक्तमतद्वयेपि संभवति । देवतोद्देश्यकहविःप्रक्षेपरूपस्य यागस्य मतद्वयेपि धात्वर्थत्वाविशेषात् । तथा च यजेतेतीयमेकपदश्रुतिः स्वघटकप्रकृतिप्रत्ययरूपभागद्वयप्रतिपाद्ययोर्द्वयोरर्थयोर्मिथोऽङ्गाङ्गिभावं बोधयति । तत्र प्रकृत्यर्थो यागोऽङ्गी । प्रत्ययार्थमेकत्वं तदङ्गम् । ननु प्रत्ययार्थसंख्याया आर्थभावनाङ्गत्वमुक्तम् । पुनस्तस्या यागाङ्गत्वं कथं शाब्दे बोधे भासते । प्रत्ययभागस्यावृत्तिस्तु गौरवग्रस्तत्वात्प्रमाणाभावाच्च वक्तुमशक्येति वाच्यम् । यजधातुना भावनाजन्यस्यैव विशेषरूपेण प्रतिपाद्यमानत्वात् । आख्यातप्रत्ययेन हि भावनान्योत्पादानुकूलत्वेन सामान्यरूपेणोच्यते । तत्समानाधिकरणस्तज्जन्य एव च देवतोद्देश्यकहविःप्रक्षेपरूपो यागो यजधातुनोच्यते । तथा चात्र समानाभिधानश्रुत्या भावनाङ्गत्वं संख्याया यदुक्तं तदेवैकपदश्रुत्या यागाङ्गत्वमित्यनेन स्थिरीक्रियते । यागेन च स्वाश्रयस्य कर्तुराक्षेपः सुलभ इति तादृशकर्तृद्वारा संख्याया अमूर्ताया अपि यागाङ्गत्वमुपपद्यते । आख्यातवाच्यसंख्याया यागकर्तृगतत्वेन लोके जायमाना प्रतीतिश्च संरक्षिता भवति । एतदेव च शङ्कासमाधानाभ्यां प्रतिपादयति-न चामूर्ताया इति । कर्तृपरिच्छेदेति । परिच्छेदो व्यावृत्तिः । अङ्गेन ह्यङ्गी परिच्छिद्यते । स्वेनासंबद्धो व्यावर्त्यते । नन्वत्र कर्तुरुपस्थितिरेव नास्ति । कर्तृवाचकस्यात्र पदे कस्यचिददर्शनात् । अनुपस्थितस्याख्यातवाच्यसंख्यया परिच्छेदेतिप्रसङ्गादिति चेत्तत्राह- कर्ता चेति । आक्षेपोनुमानमर्थापत्तिर्वा ।

ननु किमित्येवं वर्ण्यते आक्षेपलभ्यः कर्तेति। आख्यातवाच्य एव किं न स्यात्। आख्यातश्रवणे भावनाया इव कर्तुरपि प्रतिपत्तेः। न च भावनयैवाक्षेपसंभवे किमिति तद्वाचकत्वं कल्पनीयमिति साम्प्रतम्। तथासति

भावना व्यापारः। व्यापारश्च नित्यं साश्रय एव। निराश्रयस्य व्यापारस्यासंभवात्। तथा च भावनया स्वाश्रयः कर्तानुमीयतेऽन्यथानुपपत्त्या वा गम्यते। नन्वेवमपि शब्दात्कर्तुरुपस्थित्यभावेन कथं तत्राख्यातवाच्यसंख्यायाः संबन्ध इति चेन्न। वृत्तिजन्योपस्थितेस्तत्र हेतुत्वाकल्पनात्। इतरथार्थाध्याहारवादेऽध्याहृतस्यार्थस्य शाब्दे बोधे प्रवेशो न स्यात्। अन्ये तु मन्यन्ते। तात्पर्यानुपपत्त्यात्र भावनावाचकेनाजहत्स्वार्थलक्षणया भावनाश्रयः कर्ता लक्ष्यत इति कर्तुरत्र वृत्तिजन्योपस्थितिरस्त्येव। सा च लक्षणा यदि प्रत्ययभागे स्वीक्रियते तदा समानाभिधानश्रुत्यैव कर्तरि संख्यासंबन्धः। प्रकृतिभागे स्वीक्रियते चेदेकपदश्रुत्या संख्यासंबन्ध इति बोध्यम्।

यद्वा कर्तृपरिच्छेदद्वारेत्यस्यायं भावः- यागो भावनाविशेषः। तस्यामूर्तत्वेन तद्वृत्त्यमूर्तायाः संख्यायाः साक्षाद्यद्यपि न संभवति तथापि कर्तृपरिच्छेदद्वारा परंपरया संभवति। यथा नैयायिकमते गुणे गुणानङ्गीकाराद्रूपे गुणे एकत्वसंख्याया अभावेनैकं रूपमिति प्रतीतिः कथमित्याशङ्कायां परंपरया तदुपपत्तिः कृता। तत्र हि स्वाश्रयाश्रितत्वसंबन्धेनैकत्वस्य रूपेऽन्वयः। स्वमेकत्वम्। तदाश्रयो रूपवान्पदार्थः। तदाश्रितत्वं रूप इति। तथात्राख्यातवाच्यसंख्यायाः स्वाश्रयाश्रितत्वसंबन्धेन यागेऽन्वयः। स्वमेकत्वसंख्या। स्वाश्रयः कर्ता। तदाश्रितत्वं याग इति। एवं च पशुना यजेतेत्यत्र शाब्दबोधे कर्तुर्भानं न प्रकारतया नापि विशेष्यतया। किंतु संसर्गकुक्षिप्रविष्टत्वेनैव। तथा चात्र कर्तुर्वृत्तिजन्योपस्थित्यभावेऽपि न क्षतिः। प्रकारतया विशेष्यतया वा भानं प्रत्येव वृत्तिजन्योपस्थितेर्हेतुत्वात्। न चात्र कर्तुरुपस्थित्यभावेन संसर्गकुक्षिप्रविष्टत्वमपि कथं तस्य संभवतीति वाच्यम्। आक्षेपेण तदुपस्थितिसत्त्वात्। तदाह--कर्ता चेति। अनुपात्तेति। अलब्धस्वरूपेत्यर्थः।

अथ कर्तुराख्यातवाच्यत्वमेवेत्येवं मन्यमानानां वैयाकरणानां मतमनुसृत्य पूर्वपक्षं प्रासङ्गिकसंगत्योद्भावयति--'ननु किमित्येवं वर्ण्यते' इत्यादिना सिद्धमिति पूर्वपक्षसंक्षेपः' इत्यन्तेन। कर्तुरपीति। तथा च यच्च यस्मात्प्रतीयते तत्तस्य वाच्यम् (पृ. ६ प. ६) इति पूर्वोक्तनियमानुसारेण कर्ताप्याख्यातवाच्य एवाङ्गीकर्तव्य इत्याशयः। मीमांसकमतानुसारेणाशङ्कते-न च भावनयेति। आक्षेपसंभव इति। तथा च कर्तृरूपार्थस्यान्यथा लाभसंभवेन न तस्याख्यातवाच्यत्वं स्वीकर्तुं शक्यम्। अनन्यलभ्यः शब्दार्थ इति

आख्यातवाच्यकर्त्रैव भावनाक्षेपसंभवे तद्वाचकत्वमपि न स्यात्।

किं च भावनाया न केवलं कर्त्रैव संबन्धः। कारकान्तरेणापि संबन्धात्। अतः सा न झटिति कर्तारमेवाक्षिपेद्विशेषाभावात्। कर्ता तु भावनयैव संबद्धो न कारकान्तरेण। 'गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यात्' ( जै. सू. ३।१।२२ ) इति न्यायात्। अतः स झटिति तामाक्षिपेदिति स एवाख्यातवाच्यः। भावना तु आक्षेपलभ्यैव किं न स्यात्।

किंचैवं तृतीयादिविभक्तीनामपि करणादिवाचकत्वं न स्यात्। तेषामपि कर्तृवदाक्षेपलाभसंभवात्। किंच यदि कर्ता न वाच्यः स्यात् कथमेकत्वं तेना-

---

न्यायात्। आख्यातवाच्येति। वैयाकरणमतानुसारेणेदम्। भावनाश्रयस्यैव कर्तृत्वेन कर्त्रा भावनाया आक्षेपः सुलभ एव भवति। तथा च कर्तुरिव भावनाया अप्यन्यलभ्यत्वं समानमेवेत्याशयः। न झटितीति। भावनायाः सर्वैः कारकैः सममविशिष्टे संबन्धे कथं तत्र कर्तुरेव झटित्याक्षेपः स्यात्। ननु माभून्नाम झटिति कर्तुराक्षेपः किं तेन। सर्वैः सहाक्षेपेपि सिद्धमिष्टमिति चेन्न। तथा सत्याख्यातवाच्यसंख्यायाः कर्तृपरिच्छेदद्वारेव कारकान्तरपरिच्छेदद्वारापि भावनाङ्गत्वं स्यात्। तथाच यजेतेत्यत्र कदाचित्संप्रदानभूताया देवताया अप्येकत्वमाख्यातेनावबुध्येतेति दोषः स्यात्। कर्तुराख्यातवाच्यत्वाङ्गीकारे तेन च भावनाया आक्षेपेतु नायं दोष इत्याह–कर्ता त्विति। गुणानां च परार्थत्वादिति। गुणानामप्रधानानां परार्थत्वात्प्रधानार्थत्वात् सर्वेषामप्रधानानां प्रधानार्थत्वस्य समत्वात्तेषां मिथः संबन्धो न भवति। संबन्धे हि यस्य संबन्धस्तदङ्गं यत्र संबन्धस्तदङ्गीत्येवमप्रधानयोर्द्वयोर्मिथोङ्गाङ्गिभावो दुर्वारः स्यात्। स च न युज्यते। नहि कश्चिदपि स्वसदृशस्याङ्गं भवितुमर्हतीति जैमिनिसूत्रतात्पर्यम्। न्यायोत्र जैमिनेः सूत्रम्। एवं च भावनां प्रत्यप्रधानानां कर्त्रादीनां कारकाणां मिथः संबन्धाभावेन न कर्त्रा कारकान्तराणामाक्षेप इति न दोषः। किं चैवमिति। यथा भावनया कर्तुराक्षेपेणान्यलभ्यत्वान्न कर्तुराख्यातवाच्यत्वं स्वीक्रियते तथा भावनया करणादीनां कारकान्तराणामप्याक्षेपेण तेषामप्यन्यलभ्यत्वात्करणादीनां तृतीयादिविभक्तिवाच्यत्वं न स्यात्। न चास्तु करणादीनामप्याक्षेपलभ्यत्वं का हानिरिति वाच्यम्। तथा सति तृतीयादिश्रुतिर्विनियोक्त्री न स्यादिति व्रीहिभिर्यजेतेति तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वं पूर्वोक्तं ( पृ. ७४ प. ४ ) व्याहन्येत। एवं व्रीहीन्प्रोक्षतीत्यत्र प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीयाश्रुत्या ( पृ. ७८ प. २ )

न्वियात् । न हि शाब्दमशाब्देनान्वेतीति युक्तम् । अन्यथा ऊहादिलोपप्रसङ्गः ।

किंच देवदत्तः पचतीति सामानाधिकरण्यं न स्यात् । न हि केवलं भावनावाचकस्याख्यातस्य देवदत्तपदेन सामानाधिकरण्यमुपपद्यते । एकार्थनिष्ठत्वाभावात् । कर्तृवाचकत्वे तूपपद्यत एव ।

लः कर्मणीति व्याकरणस्मृतिविरोधस्तु कर्तुरनभिधेयत्वे स्पष्ट एव ।

---

इत्युक्तं विरुध्येतेति बहूपप्लवप्रसङ्गः । नहि शाब्दमिति । शब्दतो वृत्त्या प्रतीयमानं शाब्दम् । यजेतेत्याख्यातप्रत्ययबोध्यत्वात्संख्या शाब्दी । कर्ता तु न शाब्दः । अतस्तयोः संबन्धो न स्यात् । न चाख्यातप्रत्ययेन लक्षणया कर्तुर्बोध इति कर्तुः शाब्दत्वमस्त्येवेति वाच्यम् । लक्षणाङ्गीकारे ऊहादिलोपप्रसङ्गः स्यात् । यथाग्नये त्वा जुष्टं निर्वपामीति प्रकृतौ निर्वापमन्त्रः । यदा तु विकृतौ सूर्यदेवताके चरौ निर्वापे कर्तव्येतिदेशेनायं मन्त्रः प्राप्तः । किंतु तत्राग्नये इत्यस्य स्थाने सूर्यायेति पदप्रक्षेपं कृत्वा सूर्याय त्वा जुष्टं निर्वपामीत्येवं मन्त्रः पठनीयः । अयमूहः । लक्षणाश्रयणे त्वग्निपदस्य सूर्यार्थकत्वेनानुष्ठानकालिकार्थानुगुण्येन मन्त्रस्योपपत्तावूहो निष्फलः स्यात् । न च कर्तुरशाब्दत्वेपि प्रागुक्त-( पृ. ८८ प. २१ ) रीत्या तस्य संसर्गकुक्षिप्रविष्टत्वेन बोधे बाधकाभावेन न दोष इति वाच्यम् । कर्तुरेव संसर्गप्रविष्टत्वं नान्यस्य कारकस्येत्यत्र प्रमाणाभावेन दोषतादवस्थ्यात् । किंच देवदत्त इति । सामानाधिकरण्यं चैकार्थविशेष्यकबोधजनकत्वम् । आख्यातपदस्य कर्तृवाचकत्वे ताहशाख्यातप्रत्ययात्कर्तृत्वेन रूपेण यस्या व्यक्तेर्बोधो भवति तस्या एव व्यक्तेर्देवदत्तपदाद्देवदत्तत्वेन रूपेण बोधो भवति । उभयत्र विशेष्यभूता व्यक्तिरेकैव । कर्ता हि भावनाश्रयः । आख्यातप्रत्ययस्य भावनामात्रवाचकत्वे तु नाख्यातप्रत्ययाद्भावनाश्रयस्य बोध इति देवदत्तपदस्याख्यातप्रत्ययस्य च सामानाधिकरण्यं न स्यात् । एकार्थवाचकत्वाभावात् । सामानाधिकरण्याभावे च त्वं पचसीत्यत्र मध्यमपुरुषप्रत्ययो न स्यात् । अहं पचामीत्यत्रोत्तमपुरुषप्रत्ययो न स्यात् । युष्मद्युपपदे० (पा. सू. १।४।१०५) अस्मद्युत्तमः ( पा. सू. १।४।१०७ ) इति सूत्राभ्यां युष्मदस्मत्सामानाधिकरण्ये तयोर्विधानात् । तथाख्यातप्रत्ययस्य कर्तृवाचकत्वाभावे देवदत्तयज्ञदत्तौ पचत इत्यादौ द्विवचनाद्यनुपपत्तिरिति बोध्यम् । एकार्थनिष्ठत्वाभावादिति । एकार्थनिष्ठत्वमेकार्थवाचकत्वम् । अथवाख्यातप्रत्ययस्य यत्प्रवृत्तिनिमित्तं भावनात्वं यच्च देवदत्तपदस्य प्रवृत्तिनिमित्तं देवदत्तत्वं तादृशप्रवृत्तिनिमित्तद्वयस्यैकार्थवृत्तित्वाभावादित्यर्थः । लः कर्मणीति । लः कर्मणि च भावे चाकर्मकेभ्यः ( पा. सू. ३।४।६९ ) इति पाणिनेः सूत्रम् । कर्तरि कृत्

किं च कर्तुरनभिधेयत्वे देवदत्तेन पचतीति प्रयोगप्रसङ्गः। तृतीया हि अनभिहितयोः कर्तृकरणयोर्विहिता। आख्यातेन कर्ता नाभिहित इति कर्तृवाचिनी तृतीया स्यादेव। कर्तुरभिधाने तु अभिहितत्वादेव तृतीया न प्राप्नोति। तस्या अनभिहिताधिकारत्वात्। देवदत्तः पचतीति प्रथमा तु प्राप्नोत्येव। प्रथमाया अभिहितकारकविभक्तित्वात्।

---

(पा. सू. ३।४।६७) इति पूर्वसूत्रात्कर्तरीति पदं संबध्यते। लकाराः सकर्मकेभ्यो धातुभ्यः कर्मणि कर्तरि च स्युरकर्मकेभ्यो धातुभ्यो भावे कर्तरि च स्युरिति तदर्थः। अनेन सूत्रेण यदा क्रियापदस्थः प्रत्ययः कर्त्रर्थे क्रियते तदा स कर्तरिप्रयोग इति गीयते। आख्यातप्रत्ययस्य कर्त्रर्थावाचकत्वे त्वयं कर्तरि प्रयोग इति कथमवगम्येत। तदभावे च शेषात्कर्तरि परस्मैपदम् (पा. सू. १।३।७८) इति सूत्रेणात्मनेपदनिमित्तहीनाद्धातोः कर्तरि प्रयोगे यत्परस्मैपदं विहितं तन्न संगच्छते। तथा च तत्रात्मनेपदमपि स्यादिति दोषः।

किंच कर्तुरिति। पाणिनिनाष्टाध्याय्यां द्वितीयाध्याये तृतीयपादारम्भे अनभिहिते (पा. सू. २।३।१) इत्येवमधिकृत्य कर्मणि द्वितीया (पा. सू. २।३।२ चतुर्थी संप्रदाने (पा. सू. २।३।१३) कर्तृकरणयोस्तृतीया (पा. सू. २।३।१८) अपादाने पञ्चमी (पा. सू २।३।२८) सप्तम्यधिकरणे च (पा. सू. २।३।३६।) इत्येतैः सूत्रैस्तत्तत्कारकविशेषरूपेऽर्थे तास्ता विभक्तयो विशिष्य विहिताः। सर्वत्र अनभिहित इत्यधिकारस्य संबन्धः। अनभिहित इत्यस्यानुक्त इत्यर्थः। कर्मार्थे द्वितीया भवति परंतु स कर्मरूपोऽर्थस्तस्मिन् प्रयोगे अन्येन केनाप्युक्तो न भवति चेदिति तात्पर्यम्। यथा देवदत्तस्तण्डुलं पचतीति कर्तरि प्रयोगे आख्यातप्रत्ययेन कर्तृरूपोऽर्थ उक्तो भवति। अतो देवदत्त इत्यत्र कर्तरि तृतीया न भवति। किंत्वभिहिते कारके प्रथमाया विधानात्प्रथमैव भवति। कर्म त्वाख्यातप्रत्ययेन नोक्तमिति तण्डुलमित्यत्र कर्मणि द्वितीया भवत्येव। एतद्वैपरीत्येन कर्मणि प्रयोगे देवदत्तेन तण्डुलः पच्यत इत्यत्राख्यातप्रत्ययेन कर्मरूपोऽर्थ उक्त इत्यतस्तण्डुल इत्यत्र कर्मणि द्वितीया न भवति। किंत्वभिहिते कारके प्रथमाया विधानात्प्रथमैव भवति। कर्ता तु तत्राख्यातप्रत्ययेन नोक्त इति देवदत्तेनेत्येवं कर्तरि तृतीया भवत्येव। यदि तु कर्तरि प्रयोगे आख्यातप्रत्ययेन भावनैवोच्यते न तु कर्तेति मीमांसकमतं स्वीक्रियते तर्हि कर्तृरूपोऽर्थ आख्यातप्रत्ययेन नाभिहित इति देवदत्तपदात्कर्तरि तृतीयापत्तौ देवदत्तेन तण्डुलं पचतीत्यनिष्टः प्रयोगो दुर्वारः। अतः कर्ताख्यातप्रत्ययवाच्यः स्वीकार्य इत्याशयः। प्रथमाया इति। अभिहिते प्रथमेति वार्तिकमतानुसारेणेदम्। अत्र मते देवदत्तस्तण्डुलं पचतीत्यत्र देवदत्तस्य कर्तृत्वप्रतिपत्तिस्तदुत्तरप्रथमाप्रत्ययेन भवति। सूत्रकारमतेनाह--

प्रातिपदिकार्थमात्रवाचित्वाद्वा । न च तदा प्रातिपदिकेनैवार्थस्योक्तत्वात्प्रथमावैयर्थ्यम् । लिङ्गसंख्याप्रतिपत्त्यर्थं तस्या आवश्यकत्वात् । केवलप्रातिपदिकस्य प्रयोगासाधुत्वाच्च । ततश्च यदि कर्ता न वाच्यः स्याद्देवदत्तेन पचतीति प्रयोगः स्यात् । तस्मादाख्यातवाच्यः कर्तेति सिद्धमिति पूर्वपक्षसंक्षेपः ।

अत्राहुः—स एव हि शब्दस्यार्थो यः प्रकारान्तरेण न लभ्यते । अनन्यलभ्यः शब्दार्थ इति न्यायात् । अत एव न गङ्गापदस्य तीरमर्थः । लक्षणयैव

---

प्रातिपदिकार्थमात्रेति । प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ( पा. सू. २।३।४६ ) इति सूत्रेण प्रातिपदिकार्थमात्रे बोधनीये प्रथमा विधीयते । अत्र मते देवदत्तस्तण्डुलं पचतीत्यत्र देवदत्तस्य कर्तृत्वप्रतिपत्तिराख्यातप्रत्ययेन भवति नतु देवदत्तपदोत्तरप्रथमाप्रत्ययेन । प्रथमायाः प्रातिपदिकार्थमात्रे विधानात् । लिङ्गसंख्येति । देवदत्तः पचतीत्यत्र देवदत्तगतपुंस्त्वस्यैकत्वस्य च प्रतिपत्तिर्न देवदत्तेति प्रातिपदिकाद्भवति किंतु देवदत्तपदोत्तरं विसर्ग इत्येव तयोः प्रतिपत्तिर्भवति । विसर्ग एव चात्र प्रथमाप्रत्ययः । केवलेति । न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्ययः प्रयुज्यत इत्यनेन केवलप्रकृतिप्रयोगस्याकृतप्रत्ययस्यासाधुत्वबोधनात् । यत्र तु दधि मध्वित्यादौ प्रत्ययो लुप्तस्तत्र प्रत्ययस्य कृतत्वान्नासाधुत्वमिति बोध्यम् । पूर्वपक्षसंक्षेप इति । वैयाकरणमतानुसारिणा पूर्वपक्षिणा कर्तुराख्यातवाच्यत्वसाधनाय सप्त हेतवोऽत्र प्रदर्शिताः । ते यथा १ भावनया कर्तुराक्षेपो नतु कर्त्रा भावनाया आक्षेप इत्यत्र नियामकप्रमाणाभावः । २ भावनायाः कर्त्रेव कारकान्तरेणापि संबन्धान्न झटिति कर्तुराक्षेपसंभवः । ३ कारकान्तराक्षेपे च करणादीनामपि भावनयैवाक्षेपसंभवान्न करणादीनां तृतीयादिवाच्यत्वं स्यात् । ४ कर्तुरवाच्यत्वे तत्र संख्यान्वयो न स्यात् । ५ देवदत्तः पचतीति सामानाधिकरण्यं न स्यात् । ६ लः कर्मणि चेति पाणिनिसूत्रविरोधः स्यात् । ७ देवदत्तेन पचतीत्यनिष्टप्रयोगप्रसङ्गश्चेति । पक्षद्वयसाम्यप्रतिपादनं परपक्षदोषोद्भावनं चांशतः स्वपक्षमेव साधयति । तत्र प्रथमे हेतौ पक्षद्वयसाम्यप्रतिपादनं तदितरे च हेतवः परपक्षदोषोद्भावनमुखेन प्रदर्शिता इति बोध्यम् । अथैतं पूर्वपक्षं दूषयति—'अत्राहुः' इत्यादिना' अलमतिविस्तरेण इत्यन्तेन । न लभ्यत इति । तथा च तादृशेऽर्थे शब्दस्य शक्तिरगत्या कल्पयितव्या भवति । अन्यलभ्यार्थे तु शक्तिकल्पना गौरवग्रस्तत्वान्न क्रियते । लक्षणयैवेति । ननु शक्तिलक्षणयोर्मध्ये शक्तिर्मुख्या वृत्तिः । लक्षणा तु गौणी वृत्तिः । तथाचात्र तीरेऽर्थे गङ्गाशब्दस्य शक्तिरेवास्तु । मुख्यां

वृत्तिं परित्यज्य गौणवृत्त्याश्रयणस्यानुचितत्वात्। अत एवोद्भिदा यजेतेत्यत्रोद्भिच्छब्दस्य कर्मविशेषनामधेयत्वं मत्वर्थलक्षणाभयात्स्वीक्रियत इति चेन्न। वैषम्यात्। उद्भिदा यजेतेत्यत्र यजधात्वर्थस्य यागस्य भावनायां करणत्वेनान्वयः। अतो यागे करणतृतीयान्तोद्भिच्छब्दार्थस्याभेदेनान्वयो वक्तव्यः। उद्भिच्छब्दार्थश्चात्र शक्त्या लक्षणया वा ग्राह्य इति संशयः। लक्षणया गृह्यते चेल्लक्षणायाः शक्तिपृष्ठानुगामित्वादुद्भिच्छब्दस्य शक्यार्थः क इति विचारः प्रथमं कर्तव्यः। लक्षणास्थले हि शक्त्योपस्थितोऽर्थः स्वसंबन्धिनमर्थमुपस्थापयति। अत एव निरर्थके क्वचिदपि न लक्षणाया अवसरः। शक्यार्थश्चोद्भिच्छब्दस्य न कश्चिदपि लोके निरूढ इति प्रकृतिप्रत्ययानुसारेण कश्चित्प्रकल्पयितव्यः। उद्भिद्यतेऽनेनेत्युद्भिदिति भूम्युद्भेदनसाधनीभूतः खनित्रादिः कश्चित्पदार्थः शक्यः स्यात्। ततः स खनित्रादिरस्ति यस्मिन्यागे इति मत्वर्थलक्षणया यागेऽभेदान्वयः। परंत्वेतादृशवृत्तिद्वयानुसंधानेन वाक्यार्थयोजनापेक्षयोद्भिद्यते पश्वादिफलमनेनेत्युद्भिदिति फलोद्भेदनसाधनीभूतो यागविशेष एव कश्चिच्छक्यार्थः कल्प्यते चेत्केवलशक्त्यैव निर्वाह इति लाघवम्। ततश्चोद्भिदिति यागविशेषनामधेयमिति सिध्यति। तदुक्तं जैमिनिना-अपि वा नामधेयं स्यायदुत्पत्तावपूर्वमविधायकत्वात् (जै. सू. १।४।२) इति। अपिर्वेत्येवार्थे। उत्पत्तावुत्पत्तिविधौ। अमुकोऽस्य पदस्यार्थ इत्येवं यत्पदं पूर्वं न प्रसिद्धं तदत्रापूर्वमित्युच्यते। यथोद्भिदादिपदम्। एतादृशं पदं यदुत्पत्तिविधौ दृश्यते चेत्तत्र विहितस्य यागविशेषस्य नामधेयमेव स्वीकार्यम्। अन्यथा तस्य वाक्यस्याविधायकत्वप्रसङ्गादिति सूत्रार्थः। यद्युद्भिदिति यागनामधेयं न स्वीक्रियते तर्हि तस्य यागेनान्वयेनाविधायकत्वं स्यात्। लक्षणयान्वये तु लक्षणैव दोष इत्यतस्तामन्तरेण वाक्यार्थयोजनार्थं नामधेयमेव तत्स्वीकार्यमिति सूत्रतात्पर्यम्। सोमेन यजेतेत्यत्र तु नास्य सूत्रस्य संचारः। सोमपदस्य सोमलतारूपेऽर्थे पूर्वं प्रसिद्धत्वेनात्रापूर्वपदेन तस्याग्रहणात्। तेन सोम इति न यागविशेषनामधेयं भवति। अयं भावः। सोमपदस्य यागनामधेयत्वाङ्गीकारेऽपि नोद्भिदा यजेतेत्यत्रेव लाघवं भवति। यद्यपि सोमपदस्य यागनामधेयत्वाङ्गीकारे सोमेन यजेतेत्यत्र केवलया शक्त्यैव निर्वाहो न तु पूर्वं शक्तिस्ततो मत्वर्थे लक्षणेत्येवं शक्तिद्वयानुसंधानमिति लाघवं दृश्यते तथापि यागविशेषेऽत्रैका शक्तिः कल्प्या। सोमलतारूपेऽर्थान्तरे च सोमशब्दस्य पूर्वं प्रसिद्धत्वात्तत्रापरा शक्तिः पूर्वं क्लृप्तैवेति सैन्धवादिशब्दवन्नानार्थत्वेनानेकशक्तिकल्पनाप्रयुक्तं गौरवम्। सोमशब्दप्रयोगे च सर्वत्र शक्तिनियामकस्य संयोगो विप्रयोगश्चेति हर्युक्तान्यतमस्यानुसंधानमिति च गौरवमपरिहार्यम्। तथा च यत्रैकयैव शक्त्या निर्वाहस्तत्र लक्षणा गौणी वृत्तिर्नाश्रयणीया। शक्तिपूर्वकलक्षणानुसंधानेन गौरवप्रसक्तत्वात्। यथोद्भिदा यजेतेत्यत्र। यत्र द्वितीयशक्तिकल्पनेन निर्वाहस्तत्र तदपेक्षया

प्रतिपत्तिसंभवात् । अत एव च न वाक्यार्थे शक्तिः । एवं चाख्यातवाच्य-भावना कर्तारं विनानुपपन्ना तमाक्षिपतीत्याक्षेपादेव कर्तुः प्रतिपत्तिसंभवे किमिति तद्वाचकत्वमाख्यातस्य कल्पनीयम् । न च विनिगमनाविरहः । कृतिमान् हि कर्ता । एवं च कृतेरेव भावनापरपर्यायाया आकृत्यधिकरणन्यायेनाख्यातवाच्यत्वसंभवे न तद्वतः कर्तुर्वाच्यत्वं कल्पनीयम् । गौरवप्रसङ्गात् ।

---

प्रसिद्धशक्तिपूर्वकलक्षणानुसंधानेन वाक्यार्थयोजनैव वरम् । यथा सोमेन यजेतेत्यत्र । यत्र तु लक्षणा ग्रहीतुं न शक्यते तत्रागत्यानेकशक्तिकल्पनं गौरवग्रस्तमपि स्वीकार्यं भवति । यथा सैन्धवशब्दस्य लवणेऽश्वे च पार्थक्येन शक्तिकल्पनम् । तत्र यदि लवण एव शक्तिः कल्प्यते चेत्प्रयाणकालेऽश्व-तात्पर्येण सैन्धवमानयेत्युक्ते लक्षणयाश्वबोध इति वक्तव्यम् । परंतु न शक्यते तथा वक्तुम् । अश्वस्य शक्यार्थेन लवणेन सह संबन्धाभावात् । प्रकृते गङ्गायां घोष इति लक्षणोदाहरणे तु तीरे गङ्गापदस्य द्वितीयां शक्तिं प्रकल्प्य निर्वाहो वाच्यः । तदपेक्षया गङ्गापदस्य प्रसिद्धो यः शक्यार्थस्त-त्संबन्धेन लक्षणया तीरस्य बोधसंभवेन द्वितीयशक्तिकल्पनापेक्षया लाघवा-ल्लक्षणैव स्वीकर्तुमुचिता । सोमेन यजेतेत्यत्र यथा । अत एव लक्षणावृत्तेर्न दत्तजलाञ्जलिरिति बोध्यम् । अत एव च नेति । आकाङ्क्षायोग्यतासंनिधि-वशेन पदार्थानां मिथः संबन्धस्य प्रतीयमानत्वेन वाक्यार्थस्यान्यलभ्यत्वान्न तत्र वाक्यस्य शक्तिः कल्प्यत इति भावः । पूर्वपक्षिणा कर्तुराख्यातप्रत्यय-वाच्यत्वसाधनाय प्रदर्शितेषु सत्सु हेतुषु प्रथमे हेतौ प्रदर्शितं ( पृ. ८९ प. १ ) पक्षद्वयसाम्यमुद्धरति–नचेत्यादिना । विनिगमना निश्चायकं प्रमाणम् । तस्य विरहोऽभावः । भावनैव वाच्या न कर्तेत्यत्र नियामकं किंचित्प्रमाणं नास्तीति न वक्तव्यमित्यर्थः । कृतिमानिति । बाह्यव्यापारोत्पादको मान-सिको व्यापारविशेषः कृतिः । इयं कृतिरेव भावनेत्यग्रे ग्रन्थान्ते आर्थ-भावनास्वरूपनिरूपणप्रसङ्गेनाहुरित्यादिना वक्ष्यते । तन्मतानुसारेणात्र भाव-नापरपर्यायाया इत्युक्तम् । आकृत्यधिकरणेति । प्रथमाध्यायतृतीयपादान्तिम-मधिकरणमिदम् । तत्र हि गवादिशब्दानां जातिरेव वाच्या न व्यक्ति-रिति स्थापितम् । तच्च 'यथा गोशब्दस्य गोत्वम्' इत्यत्रास्माभिरुपपा-दितम् (पृ०७ प. ६) । अत्रेदं बोध्यम् । गवादिशब्दानां केवलव्यक्तौ शक्ति-रथवा जातिविशिष्टव्यक्तौ शक्तिरथवा केवलजाताविति त्रयः कल्पाः । न प्रथमः । तत्र हि किं सर्वासु व्यक्तिषु शक्तिरथवा यस्यां कस्यांचित् । सर्वासु शक्तिश्चेदानन्त्यादननुगमः । यस्यां कस्यांचिच्चेत्तदतिरिक्तव्यक्ते-स्तस्माच्छब्दाद्बोधो न स्यात् । किंच 'श्येनचितं चिन्वीत' इत्यत्र

न च भावना कारकान्तरेणापि संबद्धा तदुज्झित्वा न झटिति कर्तारमाक्षिपतीति वाच्यम् । सा हि यथा नियमेन कर्त्रा संबद्धा, न तथा करणादिकारकान्तरेण । तिष्ठतीत्यादिषु तया तदनाक्षेपात् । अतः प्रथमं सा कर्तारमेवाक्षिपति न कारकान्तरम् । अत एव चाख्याताभिहिता संख्या न कारकान्तरेण संबध्यते । तस्य प्रथममनुपस्थितेः ।

अत एव तृतीयादिविभक्तीनां करणादिवाचित्वम् । भावनायास्तैः सह नियतसंबन्धाभावेन तया तेषां नियमेनानाक्षेपात् ।

---

वाक्यार्थो नोपपद्यते । श्येन इव चीयते श्येनचिदग्निः । आहवनीयाधारः इष्टकानिर्मितः स्थण्डिलसंज्ञकः स्थलविशेषोऽत्राग्निशब्देनोच्यते । स च श्येनसदृशाकारो यदा क्रियते तदा श्येनचिदुच्यते । श्येनः पक्षिविशेषः । तत्र केवलव्यक्तौ श्येनशब्दस्य शक्तिश्चेत्स्थण्डिले किं तादृशसकलव्यक्तिसादृश्यमथवा किंचिद्व्यक्तिसादृश्यम् । तत्र सर्वव्यक्तिसादृश्यमेकत्र न संभवति । किंचिद्व्यक्तिसादृश्यं चेद्यद्व्यक्तिसादृश्यं वेदतात्पर्यविषयीभूतं तद्व्यक्तिनाशोत्तरं तत्सादृश्यस्य संपादयितुमशक्यत्वादनुष्ठानलोपापत्तिः । अतस्तत्रागत्या श्येनत्वाश्रयसादृश्यमिति वक्तव्यम् । तथा च श्येनत्वबोधस्यावश्यकतया तद्बोधार्थं जातौ शक्तिरवश्यमेव स्वीकार्या भवति । न द्वितीयः । जातिविशिष्टव्यक्तौ शक्तिरिति पक्षस्य गौरवग्रस्तत्वात् । केवलजातौ शक्त्यङ्गीकारेणाक्षेपेण व्यक्तिलाभसंभवात् । अतो लाघवात्तृतीयः कल्प एवात्राश्रीयते जातावेव केवलं शक्तिरिति ।

पूर्वपक्षयुक्तं ( पृ. ८९ पं. २ ) द्वितीयं हेतुं दूषयति-न च भावनेति । सा हि यथेति । कर्ता हि भावनाया आश्रयः । आश्रय एव यदि नस्याद्भावनास्तितामेव न प्रतिपद्येत । अतो भावनायाः स्वरूपलाभ एव कर्त्रधीनः । कारकान्तराणि तु सन्ति चेदुपयुज्यन्ते । नोचेन्न भावनायाः स्वरूपलाभे कश्चनान्तरायः । अतस्तया कर्तुरेवाक्षेपो न कारकान्तराणाम् । तिष्ठतीत्युक्ते यथा नियमेन कर्ताक्षिप्यते न तथा करणादिकं भावनया नियमेनाक्षिप्यते । अत एव चेति । भावनया कारकान्तराणामनाक्षेपादेवेत्यर्थः । एतेनाख्याताभिहितसंख्यायाः कारकान्तरपरिच्छेदद्वारापि भावनान्वयं स्यादिति निरस्तम् ।

पूर्वपक्षयुक्तं ( पृ. ८९ पं. ७ ) तृतीयं हेतुं दूषयति-अत एव तृतीयादीति । नियतसंबन्धाभावेनेति । ययोर्द्वयोः संबन्धिनोर्येन रूपेण संबन्धो नियतस्तयोर्मध्य एकस्य तेन रूपेणोपस्थितिश्चेत्तत्रापरस्य संबन्धिन आक्षेपो नियमेन भवति । यथा गुरुशिष्ययोः । शिष्य इत्युक्ते हि कस्येत्येवं नियमेन तत्र गुरो-

आख्यातश्रवणात्प्रागपि तृतीयादिविभक्तिश्रवणे करणादिप्रतीतेर्जायमानत्वाच्च ।

नच शाब्दी संख्या कथमशाब्देन कर्त्रान्वेतीति वाच्यम् । कर्तुर्लक्षणाङ्गीकारात् । यथा च लक्षितं तीरं शाब्देन घोषेणान्वेति, एवं

---

राक्षेपो जायते । तस्यैव शिष्यस्यायं देवदत्त इत्येवं देवदत्तनाम्नोऽवि न कस्यस्याक्षेपो जायते । किंतु तस्य देवदत्तस्य प्रकरणादिवशेन शिष्यत्वज्ञानं चेत्तत्राक्षेपो नान्यथेत्येवमाक्षेपोऽपि तत्रानियत एव भवति । ननु तिष्ठतीत्यादौ मा नाम भूत्करणाक्षेपः । असिना छिनत्तीत्यादौ छेदनादिक्रियाविशेषस्य लोकतः ससाधनकत्वावगमादाक्षेपेण करणरूपार्थे लब्धे तत्र तृतीयाप्रत्ययस्य करणार्थे विधानं निष्फलं स्यादिति चेत्तत्राह–आख्यातश्रवणादिति । असिनेति पदमात्रे ज्ञाते छिनत्तीत्यादिक्रियापदश्रवणात्प्रागप्यसेः करणत्वेन बोधोऽनुभवसिद्धः सर्वेषाम् । तदर्थं तृतीयादिविभक्तीनां करणादिवाचित्वमवश्यमास्थेयमिति भावः ।

पूर्वपक्षयुक्तं (पृ० ८९ प. ८) चतुर्थं हेतुं दूषयति– नच शाब्दीति । कर्तुर्लक्षणेति । भावना वाचको यजेतेत्याख्यातप्रत्ययो भावनारूपशक्यार्थसंबन्धेन भावनाश्रयं कर्तारं लक्षणया बोधयति । इयं चाजहल्लक्षणा । शक्यार्थस्यापरित्यागात् । ननु गङ्गातीरे घोष इत्यनुक्त्वा गङ्गायां घोष इतियत्प्रयुज्यते तच्छैत्यपावनत्वातिशयप्रतिपत्त्यर्थं प्रयुज्यते । तथा च यथा तत्र शैत्यपावनत्वातिशयप्रतीतिर्लक्षणायाः प्रयोजनं तथात्राख्यातप्रत्ययस्य कर्त्रर्थे लक्षणायाः किं प्रयोजनमितिचेत्– अत्राहुः । निरूढलक्षणैवेयम् । निरूढलक्षणायां हि न प्रयोजनापेक्षा । यथा मण्डपतैलकुशलादिशब्देष्विति । लक्ष्यार्थस्य च वृत्तिजन्योपस्थितिसत्त्वेन शाब्दे बोधे भानं भवत्येव । तदेव दृष्टान्तेन प्रदर्शयति यथा चेति । ननु गङ्गायां घोष इत्यत्र लक्ष्यार्थस्य तीरस्य घोषप्रकारतया भानं दृश्यते तद्वदत्र कर्तुः प्रकारतया भानं भवतु । तत्र तु संख्यानिरूपितविशेष्यतया भानमपेक्ष्यते । तत्तु न संभवति । नहि सिकतामयप्रकारकतीरविशेष्यकबोधतात्पर्यकः सिकतामयायां गङ्गायां घोष इति प्रयोगो दृश्यते इति चेन्न । लक्ष्यार्थस्य विशेष्यतया न भानमिति नियमः स्याद्वेदस्तु नाम कदाचित्प्रयोजनवत्यां लक्षणायाम् । निरूढलक्षणायां तु नैव तथा नियमः स्वीकर्तुं शक्यते । शोभनो मण्डपस्तीक्ष्णमतय स्तैलङ्गा इत्यादिप्रचुरप्रयोगदर्शनात् । नचैवं लक्षणायां स्वीकृतायां प्रागुक्त (पृ. ८९ प. १०) ऊहादिलोपप्रसङ्गो दोषः स्यादिति वाच्यम् । अग्नये त्वा जुष्टं निर्वपामीत्यत्राग्निपदस्य सूर्यार्थे लक्षणा न स्वीकर्तुं शक्यते । लक्षणाहेतुभूतस्य रूढिप्रयोजनान्यतरस्यात्रासंभवात् । न ह्यग्निपदस्य सूर्यरूपेऽर्थे प्रचुरप्रयोगदर्शनम् । न चात्र सूर्येऽग्निगतगुणप्रतिपत्तिर्विवक्षितेत्यत्र प्रमाणं

लक्षितः कर्ता एकत्वेनान्वेष्यति।

अत एव देवदत्तः पचतीति सामानाधिकरण्यमुपपद्यते कर्तुर्लक्षणात्। नच मुख्ये संभवति किमिति लाक्षणिकत्वं स्वीकार्यमिति वाच्यम्। अनन्यलभ्यशब्दार्थत्वस्य व्यवस्थापितत्वात्। अन्यथा सिंहो देवदत्त इत्यपि सामा-

---

दृश्यते। तथाचात्र लक्षणाश्रयणस्यासंभवेनाश्रय इत्यस्य स्थाने सूर्यायेतिपदप्रयोगकल्पनमावश्यकमिति नोहादिलोपो दोष इति भावः।

अत्रेदं चिन्त्यम्। आख्यातप्रत्ययस्य भावनावाचकत्वं स्वीकृत्य कर्तरि लक्षणेति पक्षे भावनायाः स्वातन्त्र्येणोपस्थितिर्न स्यात्। अजहल्लक्षणायां शक्यार्थस्यात्यागेपि तस्य लक्ष्यार्थकुक्षिप्रविष्टत्वेनैव प्रतीतिर्न तु स्वातन्त्र्येण। यथा काकेभ्यो दधि रक्ष्यतामित्यत्र काकस्य दध्युपघातकत्वाल्लक्ष्येर्थे दध्युपघातकत्वरूपेण प्रवेशः। कुन्ताः प्रविशन्तीत्यत्र लक्ष्यार्थे कुन्ताश्रये कुन्तानां प्रतियोगित्वेन प्रवेशः। न तु क्वापि लक्षणास्थले शक्यार्थस्य स्वातन्त्र्येणोपस्थितिर्नापि तस्य प्रकारतया विशेष्यतया वा शाब्दे बोधे भानम्। कुन्ताः प्रविशन्तीत्यादौ लक्षणावृत्त्युपस्थितस्य कुन्ताश्रयरूपस्यार्थस्य समुदितस्य शाब्दे बोधे विषयता न तु तदेकदेशभूतानां कुन्तानां स्वातन्त्र्येण कदाचिदपि। अथात्र न भावनाक्रान्तः कर्ता लक्ष्यः किंतु कर्तृगता भावनेति यदुच्यते तदा कर्तृवृत्त्युपस्थितार्थैकदेशत्वेन तत्र संख्यान्वयो न स्यात्। किं च लक्षणास्थले शक्योर्थः स्वसंबन्धेनान्यमर्थमुपस्थापयति। तत्र स्वसंबद्धोन्योर्थो लक्ष्यो नतु अन्यसंबद्धः स्वयं लक्ष्यो भवति। तथा क्वाप्यदर्शनात्। एवं चात्र भावनाप्राधान्यको यः शाब्दबोध इष्यते स न स्यात्। यदि चात्र लोकप्रतीत्यनुसाराच्छक्यार्थलक्ष्यार्थयोर्द्वयोरपि पार्थक्येनोपस्थितिरङ्गीक्रियते तदा तन्त्राद्याश्रयणेन गौरवमपरिहार्यं भवतीति।

पूर्वपक्षयुक्तं (पृ. १० प. २) पञ्चमं हेतुं दूषयति-अत एवेति। पचतीत्यत्र तिप्रत्ययस्य लक्ष्योर्थः कर्तेति कर्तृत्वेन रूपेण देवदत्तास्तिप्रत्ययप्रतिपाद्यो भवति। देवदत्तत्वेन रूपेण च स एव देवदत्तपदप्रतिपाद्य इत्येवं सामानाधिकरण्योपपत्तिरिति भावः। अनन्यलभ्येति। उपपादितमेतत् (पृ. १२ प. ६)। अन्यथेति। सिंहो देवदत्त इत्यत्र सिंहसदृश इत्यर्थस्य लक्षणया बोधसंभवेपि यदि तत्रार्थे सिंहशब्दस्य शक्तिरेव स्वीक्रियते तर्हि सिंहसदृशो देवदत्त इति वाक्य इव सिंहो देवदत्त इति वाक्येपि सिंहदेवदत्तपदयोः सामानाधिकरण्यं मुख्यं स्यात्। न चेष्टापत्तिः। तथा सति सिंहसदृशो देवदत्तः सिंहो देवदत्त इति वाक्यद्वयेपि वाक्यार्थस्याविशेषादेकत्रोपमापरत्र रूपकमिति भेदो न स्यात्। किंच सिंहो देवदत्त इत्यत्र लक्षणानाश्रयणे देवदत्ते सिंहगतगुणातिशयप्रतीति-

नाधिकरण्यं मुख्यं स्यात्। किंच आख्यातवाच्यः कर्तेति वादिनोऽपि मते देवदत्तः पचतीति सामानाधिकरण्यं न मुख्यम्। तन्मते आख्यातेन तृतीयावन्निष्कृष्टशक्तिमात्ररूपकर्तृकारकाभिधानात्। शक्तिमद्द्रव्यस्याकृत्यधिकरणन्यायेनानभिधानात्। देवदत्तशब्देन च द्रव्यमात्राभिधानात्। अतश्च भिन्नार्थनिष्ठत्वात्तन्मतेऽपि न मुख्यं सामानाधिकरण्यम्। किंतु लाक्षणिकमेवेति न कश्चिद्विशेषः।

न च लः कर्मणीति व्याकरणस्मृतिबलादाख्यातवाच्यः कर्तेति वाच्यम्। न हि वाच्यवाचकभावो व्याकरणस्मृत्यधीनः। तस्य न्यायसहितान्वयव्य-

---

लक्षणाफलीभूता न प्रतीयेतेति बोध्यम्। एवं सिंहो देवदत्त इत्यत्र लक्षणया सामानाधिकरण्योपपत्तिं प्रतिपाद्य पूर्वपक्षिमतेऽप्यत्र लक्षणयैव सामानाधिकरण्यमुपपादनीयं भवतीत्याह-किं चाख्यातेति। तन्मत इति। व्याकरणे हि कर्तृकर्मादिष्वर्थेषु कृत्प्रत्यया विधीयन्ते। यथा पाचको देवदत्तः पक्वस्तण्डुल इति। तथा कर्तृकर्मादिष्वर्थेष्वेवाख्यातप्रत्यया विधीयन्ते। यथा पचति देवदत्तः पच्यते तण्डुल इति। तथा तेष्वेवार्थेषु विभक्तिप्रत्ययास्तृतीयादयो विधीयन्ते। यथा देवदत्तेन पच्यते तण्डुलं पचतीति। परं तु तत्रान्वये वैलक्षण्यं दृश्यते। यथा कृत्प्रत्ययप्रतिपादितस्य कर्तृकर्माद्यर्थस्य देवदत्तादिनामार्थोपसर्जनत्वेन भानं न तथाख्यातवाच्यस्य तृतीयादिविभक्तिवाच्यस्य च कर्तृकर्माद्यर्थस्य क्वापि नामार्थोपसर्जनत्वेन भानं किंतु क्रियोपसर्जनत्वेनैव। एतादृशवैषम्ये बीजं त्वित्थमुत्पश्यामः। शब्दशक्तिस्वाभाव्यात्कृत्प्रत्ययः कर्तृकर्मादिशक्तिमन्तमर्थं ब्रूते। ततो निष्कृष्टां केवलां कर्तृकर्मादिशक्तिमाख्यातप्रत्ययस्तृतीयादिर्विभक्तिप्रत्ययश्च ब्रूते। शक्तिमद्द्रव्यस्य पूर्वोक्त-(पृ. ७ प. २५) रीत्याक्षेपेण लाभसंभवादन्यलभ्यत्वेन विशिष्टे शक्तिकल्पनाया गौरवग्रस्तत्वादिति। क्रियाकारकशक्त्योर्मिथो नित्यः संबन्ध इति कर्तृकर्मादिकारकशक्तिः स्वनिरूपिकां क्रियामेव संबन्धुमर्हति न त्वितरेण केनापि। शक्तिमांस्तु येन केनापि संबन्धुं प्रभवति। तत्र तादृशनिर्बन्धस्यानौचित्यात्। एवं स्थिते पचतीत्याख्यातप्रत्ययार्थेन सह देवदत्तस्य द्रव्यभूतस्य यदि सामानाधिकरण्यं कल्प्येत तर्हि तत्राख्यातप्रत्ययस्य कर्तृशक्तिमति लक्षणां स्वीकृत्यैवोपपादनीयं भवति। आकृत्यधिकरणेति। इदं प्रागुक्तम् (पृ. १४ प. २५)। भिन्नार्थनिष्ठत्वादिति भिन्नार्थबोधकत्वादित्यर्थः। देवदत्तशब्दो द्रव्यमभिधत्ते आख्यातप्रत्ययस्तु शक्तिमात्रं ब्रूत इति भावः। पूर्वपक्ष्युक्तं (पृ. १० प. ५) षष्ठं हेतुमनूद्य दूषयति-न च ल इति। नहि वाच्येति। पाणिनिरपि नापूर्वां शब्दशक्तिमुत्पादयितुं प्रभवति। किंतु केवलं ज्ञापयति। संज्ञासूत्राणामज्ञातार्थज्ञापकतया विधित्वम्। शक्तिस्तु

तिरेकगम्यत्वात् । भवतु वा स्मृतिगम्यः, तथापि नेयं स्मृतिः कर्तुराख्यातवाच्यत्वे प्रमाणम् । किंतु कर्तुरेकत्वे एकवचनात्मको लकारः द्वित्वे द्विवचनात्मकः बहुत्वे बहुवचनात्मक इत्यस्मिन्नर्थे प्रमाणम् । द्व्येकयोर्द्विवचनैकवचने, बहुषु बहुवचनमित्यनेनास्याः स्मृतेरेकवाक्यत्वात् ।

---

स्वाभाविक्येव । महाभाष्ये पतञ्जलिना च कथं पुनरिदं भगवतः पाणिनेराचार्यस्य लक्षणं प्रवृत्तमिति प्रश्नं कृत्वा ' सिद्धे शब्दार्थसंबन्धे ' ( पात. म. भा. पस्पशा० ) इत्युक्तम् । किमाचार्य एव स्रष्टा शब्दार्थसंबन्धानामथ स्मर्तेति प्रश्नाभिप्रायं कैयट आह । सिद्धशब्दो नित्यवाची । शब्दश्च अर्थश्च संबन्धश्चेति समाहारद्वंद्वः । एतत्त्रितये नित्य एव सतीदं व्याकरणशास्त्रं धर्मनियमाय प्रवृत्तमिति तदर्थः । शब्देन चापशब्देन च समानायामर्थावगतौ शब्देनैवार्थोऽभिधेयो नापशब्देनेति । एवं च शब्दशक्तिः स्वाभाविकी नित्यैवेति न सा 'लः कर्मणि' इत्यादिसूत्राधीना । अतस्तद्विरोधो नात्रोद्भावयितुं शक्यः । शास्त्रकारैर्हि बहून्प्रयोगान् दृष्ट्वान्वयव्यतिरेकरूपतर्कसहायेनास्य शब्दस्यायमर्थ इत्याकलय्य लोकानां तज्ज्ञापनाय शास्त्रं प्रणीतम् । निघण्टुरप्येवमेव प्रणीतः । गवादिशब्दाद्यन्यतमप्रयोगे सास्नाशृङ्गयुक्तपशुविशेषरूपार्थप्रतिपत्तिरित्यन्वयः । गवादिशब्दाद्यन्यतमाप्रयोगे तादृशपशुविशेषरूपार्थस्याप्रतिपत्तिरिति व्यतिरेकः । एवं स्वमाद्यन्यतमप्रयोग एकत्वसंख्याप्रतिपत्तिर्नान्यथेत्येवं सर्वत्रान्वयव्यतिरेका ऊह्याः । अन्वयव्यतिरेके च न्यायसाहित्यमपेक्ष्यते । यतो गौर्वाहीक इत्यत्र गोशब्दान्मनुष्यविशेषरूपार्थप्रतिपत्तिदर्शनेऽपि तत्र तस्य मनुष्यविशेषस्य निरुक्तपशुसदृशत्वेन लक्षणया प्रतिपत्त्युपपत्तौ न मनुष्यविशेषेऽर्थे गोशब्दस्य शक्तिः कल्प्यते । अनन्यलभ्यः शब्दार्थ इति न्यायात् । एकस्य शब्दस्यानेकशक्तिकल्पनं च गौरवग्रस्तत्वान्न करणीयम् । अन्याय्यश्चानेकार्थत्वमिति न्यायात् । गत्यन्तराभावे तु गौरवमपि स्वीकरणीयं भवति । यथा सैन्धवादिशब्देष्वित्यन्यत् । ननु न्यायसहितान्वयव्यतिरेकावालोच्यैव पाणिनिराचार्यो लः कर्मणि (पा. सू. ३।४।६९) इति सूत्रं प्रणीतवान् । तादृशस्य शास्त्रप्रणेतुराचार्यस्य भ्रान्तिकल्पनं च न युक्तमिति चेत्तत्राह–<u>भवतु वेति</u> । अयं भावः । न पाणिनेर्भ्रान्तिः । किंतु तत्सूत्रव्याख्यातॄणां भ्रान्तिः । ते हि कर्ता कर्म चाख्यातप्रत्ययस्य वाच्योऽर्थ इत्येवं तत्सूत्रं व्याचक्षते । वस्तुतस्तु द्व्येकयोर्द्विवचनैकवचने ( पा. सू. १।४।२२ ) इति पाणिनिनैव सूत्रं प्रणीतम् । तथा बहुषु बहुवचनम् ( पा. सू. १।४।२१ ) इति च । एतत्सूत्रद्वयानुरोधेनैकत्वादिसंख्या प्रत्ययार्थः । लः कर्मणीति सूत्रानुरोधेन कर्तृकर्मादिश्च प्रत्ययार्थ इत्येवमेकस्याख्यातप्रत्ययस्यानेकार्थत्वकल्पनं नोचितं सत्यां गतौ । अन्याय्यश्चानेकार्थत्वमिति न्यायात् । तथा च लः कर्मणीत्यस्य

यत्तूक्तम् कर्तुरनभिधाने देवदत्तेन पचतीति तृतीयाप्रसङ्ग इति तन्न। तृतीया हि कर्तुः प्रतिपत्त्यर्थं तद्गतसंख्याप्रतिपत्त्यर्थं वा। तत्र कर्ता तु भावनयाक्षेपादेव लभ्यते इति न तत्र तृतीयापेक्षा। तत्संख्या तु आख्यातेनैव प्रतीयते इति न तत्राप्यपेक्षा। यथाहुः—

संख्यायां कारके वा धीर्विभक्त्या हि प्रवर्तते।
उभयं चात्र तत्सिद्धं भावनातिङ्विभक्तितः ॥ ( तन्त्रवा० ३।४।१३ )

इति। यत्र तु नाख्यातेन तद्गता संख्योच्यते तत्र भवत्येव तृतीया। यथा

---

ह्येकयोरित्यादेश्चैकवाक्यतयाख्यातप्रत्ययस्य केवलं संख्याबोधकत्वमेव कल्पनीयम्। तच्चेत्थम्। कर्तृगतैकत्वे बोधनीये एकवचनं भवति कर्तृगतद्वित्वे बोधनीये द्विवचनं भवति कर्तृगतबहुत्वे बोधनीये बहुवचनं भवतीति। तथा च पचतीत्यादौ कर्तुरवाच्यत्वाङ्गीकारेऽपि न लः कर्मणीति सूत्रविरोध इति।

पूर्वपक्षयुक्तं (पृ. ९१ प.१) सप्तमं हेतुमनूद्य दूषयति–यत्तूक्तमिति। तृतीयाहीति। देवदत्तः पचतीत्यत्राख्यातप्रत्ययेन कर्तुरनभिधाने देवदत्तपदात्तृतीया स्यादिति यद्दूषणमुक्तं तत्रार्थविशेषप्रतिपत्त्यर्थं तृतीयाप्रत्यय आपाद्यते इत्याशयश्चेत्तत्र किं कर्तृरूपार्थप्रतिपत्त्यर्थमथवा कर्तृगतसंख्याप्रतिपत्त्यर्थम्। नाद्यः। भावनयैवाक्षेपेण कर्तुः प्रतिपत्तिसंभवात्। नापि कर्तृगतैकत्वप्रतिपत्त्यर्थं तृतीयाप्रत्ययस्यावश्यकत्वम्। पचतीत्याख्यातप्रत्ययेन कर्तृगतैकत्वप्रतिपत्तेः। संख्यायामिति। संख्यायामिति कारक इति च विषयसप्तमी-धीः शब्दजन्या प्रतिपत्तिः। विभक्तिप्रत्ययश्रवणे तस्मात्संख्याविशेषविषयिणी कारकविशेषविषयिणी च प्रतिपत्तिर्भवति। अतस्तदर्थं देवदत्तः पचतीत्यत्र देवदत्तपदात्तृतीयाप्रत्ययस्यावश्यकत्वमिति चेत्तदुभयमप्यत्र भावनार्थकस्तिङ्संज्ञको यो विभक्तिप्रत्ययः पचतीत्यत्रत्यस्तीत्याकारकस्तस्मात्सिद्धं भवति भावनया कर्तुराक्षेपात्तिप्रत्ययेनैकत्वस्य बोधाच्चेत्यर्थः। भवत्येवेति। संख्याप्रतिपत्त्यर्थं न तु कर्तृरूपार्थप्रतिपत्त्यर्थमिति भावः। अथानभिहिते कर्तरि तृतीयाप्रत्ययो भवतीत्यर्थकेन कर्तृकरणयोस्तृतीया ( पा. सू. २।३।१८ ) इति सूत्रेण प्राप्तायास्तृतीयाया अनिवार्यत्वात्तृतीया स्यादित्याशय इति चेत्तदपि न। उक्तार्थानामप्रयोग इति न्यायेन तन्निवारणात्। ननु द्वौ ब्राह्मणावित्यत्र द्विशब्देन द्वित्वसंख्याया उक्तत्वादुक्तार्थानामप्रयोग इति न्यायेन द्विवचनानुत्पत्तौ प्रकृतिभूतस्य द्विशब्दस्य न केवला प्रकृतिः प्रयोक्तव्येति निषेधेन साधुत्वं न स्यादतस्तत्रोक्तार्थानामिति न्यायं बाधित्वा शब्दसाधुत्वार्थं द्विवचनं भवति तथात्र देवदत्तपदात्तृतीया स्यादित्याशय इति चेन्न। प्रातिपदिकार्थ० ( पा. सू. २।३।४६ ) इति सूत्रेण प्रातिपदिकार्थे प्रथमाविधानेन प्रथमाप्रत्यया-

देवदत्तेन ओदनः पच्यते इति । तस्मान्न कर्तुरनभिधाने किंचिद्दूषणमित्यलमतिविस्तरेण । प्रकृतमनुसरामः । तत्सिद्धस्त्रिविधश्रुतिविनियोगः ।

सेयं श्रुतिर्लिङ्गादिभ्यः प्रबलं प्रमाणम् । लिङ्गादिषु हि न प्रत्यक्षो विनियोजकः शब्दोऽस्ति । किंतु कल्प्यः । यावच्च तैर्विनियोजकः शब्दः कल्प्यते तावत्प्रत्यक्षया श्रुत्या विनियोगस्य कृतत्वात्तेषां कल्पकत्वशक्तिर्विहन्यते इति श्रुतेः प्राबल्यम् ।

---

न्तस्य देवदत्तः इत्यस्य साधुत्वोपपत्तावुक्तार्थानामप्रयोग इति न्यायस्याबाधेन न केवला प्रकृतिः प्रयुज्यते इति निषेधपरिपालनसंभवात् । एवं चात्रावश्यकत्वादनिवार्यत्वाच्छब्दसाधुत्वाय चेति विधात्रये केनाप्यन्यतमेन प्रकारेण तृतीयापादनं न संभवतीति बोध्यम् । एवं कर्तुराख्यातवाच्यत्वाभावे पूर्वपक्षयुक्तान्सर्वान्दोषानुद्धृत्योपसंहरति-तस्मादिति । यजेतेत्याख्याताभिहितसंख्याया एकपदश्रुत्या धात्वर्थयागाङ्गत्वं कर्तृपरिच्छेदद्वारा समर्थितम् । तत्र कर्तृरूपोऽर्थः कस्येति जिज्ञासायां तत्प्रसङ्गेनाख्यातप्रत्ययार्थविचारः ननु किमित्येवम् ( पृ. ८८ प. १ ) इत्यारभ्य दूषणम् ( पृ. १०१ प. १ ) इत्यन्तेन ग्रन्थेन पूर्वोत्तरपक्षरूपेण प्रतिपादितः । अथेदानीं पूर्वप्रकृतं श्रुतिप्रमाणं प्रस्तौति-प्रकृतमिति । त्रिविधश्रुतीति । विभक्तिरूपा समानाभिधानरूपैकपदरूपा चेति त्रिविधश्रुत्या विनियोगः सिद्ध इत्यर्थः ।

एवं श्रुतिप्रमाणं सावान्तरभेदमुदाहृत्य तस्य श्रुतिप्रमाणस्य लिङ्गादिप्रमाणापेक्षया प्राबल्यं साधयति--सेयं श्रुतिरिति । तदुक्तं जैमिनिना श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ( जै. सू. ३।३।१४ ) इति । एतत्सूत्रार्थः पूर्वमुक्तः ( पृ. ४५ प. ८ ) । अत्रेदं बोध्यम् । यज्ञदानजपादिकं सर्वं कर्मापूर्वोत्पत्तिद्वारा स्वर्गादिसुखार्थं भवति । कर्म च तैस्तैर्विनियुक्तैः स्वाङ्गैरुपकृतं सदपूर्वमुत्पादयितुं प्रभवति नेतरथा । अङ्गत्वं च मन्त्राणां सोमादीनां द्रव्याणामरुणसंख्यादीनां गुणानां प्रोक्षणादीनां क्रियाणां च संभवति । तत्रामुकस्याङ्गस्यामुकेऽङ्गिनि विनियोगः कर्तव्य इत्येष निर्णयः श्रुत्यादिप्रमाणषट्कान्यतमेन केनापि प्रमाणेन जायते । अतः क्वास्य विनियोगः कर्तव्य इत्येवमङ्गस्याङ्गिविषयिण्यामाकाङ्क्षायां सत्यां तत्र व्यवस्थापकत्वेन प्रमाणानि प्रवर्तन्ते । प्रमाणपुरस्कारिण्याकांक्षा यथासंभवं किंचिदेकं प्रमाणं पुरस्कृत्य तेन स्वार्थं साधयति । प्रमाणेषु च श्रुतिप्रमाणं साक्षाद्विनियोजकम् । अत एव श्रुतिः प्रमाणमूर्धन्यभूतेति व्यवहारः । लिङ्गादीनि पञ्च प्रमाणानि तु न साक्षाद्विनियोजकानि । शब्दसामर्थ्यं लिङ्गमित्युच्यते । यथा स्योनं ते सदनं करोमीति मन्त्रस्यासनानिर्माणरूपार्थप्रकाशनसाम-

र्थ्यम् । परं तु तादृशसामर्थ्यानुसारिणी ' स्योनं ते इति सदनं करोति ' इत्येवं विनियोजिका श्रुतिर्यावन्न ज्ञायते तावल्लिङ्गमकिंचित्करम् । अतः स्योनं त इति मन्त्रस्य क विनियोग इत्येवमुत्पन्नाकांक्षा स्वपुरस्कृतस्य लिङ्गप्रमाणस्याकिंचित्करतामवलोकयन्ती स्वार्थसाधनाय स्वपुरस्कृते प्रमाणे स्वभावतो विद्यमानां प्रकल्पकत्वशक्तिमुत्तेजयति । उत्तेजनं कुर्वद्रूपताधानम् । फलोन्मुखत्वमिति यावत् । ततस्तल्लिङ्गं स्वानुगुणां ' स्योनं त इति सदनं करोति ' इत्येवं विनियोजिकां श्रुतिं प्रकल्पयति । तया च श्रुत्या तत्र विनियोग इति लिङ्गप्रमाणं श्रुतिद्वारा परम्परया विनियोजकम् । तथा वाक्यप्रमाणोदाहरणेपि । समभिव्याहारो वाक्यम् । यस्य पर्णमयी जुहूर्भवतीत्यत्र पर्णमयीत्यस्य जुहूपदेन समभिव्याहारः। पर्णमयीपदेनोच्यमाना पर्णता कस्याङ्गमित्येवमुत्पन्नयाकांक्षया जुहूपदसमभिव्याहाररूपं वाक्यप्रमाणं पुरस्क्रियते । समभिव्याहारमात्रेण च न विनियोगः सिध्यतीत्यतस्तत्र समभिव्याहारप्रमाणे स्वभावतो विद्यमानायां प्रकल्पकत्वशक्तावाकाङ्क्षया स्वार्थसाधनाय कुर्वद्रूपताधीयते । तया च प्रकल्पकत्वशक्त्या पर्णमयीपदे जुहूरूपार्थस्यापि प्रकाशने सामर्थ्यं कल्प्यते । एतच्च सामर्थ्यरूपं लिङ्गं प्रमाणं कल्पितम् । तदपि लिङ्गमकिंचित्करमेव यावत्पर्णतया जुहूं भावयेदिति श्रुतिर्न ज्ञायते । तथा च लिङ्गेनाकाङ्क्षोत्तेजितया स्वीयप्रकल्पकत्वशक्त्या स्वानुगुणा तादृशी श्रुतिः प्रकल्प्यते । तया च विनियोगः । अत्र वाक्यस्य लिङ्गप्रकल्पकत्वं लिङ्गस्य च श्रुतिप्रकल्पकत्वम् । आकाङ्क्षा च न यावद्विरता तावदनेकत्रापि प्रकल्पकत्वशक्तिमुत्तेजयितुं सा पर्याप्तैव । यावता विनानुपपत्तिस्तावतोंशस्य ज्ञाप्यत्वात् । एवं प्रकरणोदाहरणे प्रकरणवाक्यलिङ्गानां त्रयाणां प्रकल्पकत्वम् । स्थानोदाहरणे स्थानप्रकरणवाक्यलिङ्गानां चतुर्णां प्रकल्पकत्वम् । समाख्योदाहरणे च समाख्यास्थानप्रकरणवाक्यलिङ्गानां पञ्चानां प्रकल्पकत्वं बोध्यम् । प्रकल्पकं च प्रमाणं स्वाव्यवहितपूर्वमेव प्रकल्पयति न तु व्यवहितमसंबन्धात् । यत्र चोत्पन्नायामाकाङ्क्षायां सत्यां युगपदनेकानि प्रमाणान्यवतरन्ति तेष्वेका श्रुतिश्चेत्तया सद्यो विनियोगस्य कृतत्वेनाकाङ्क्षा विरतव्यापारा भवतीति तत्र न सा प्रमाणान्तरेषु प्रकल्पकत्वशक्तिमुत्तेजयितुं प्रभवति । अतः श्रुतिप्रमाणस्य सर्वापेक्षया प्राबल्यम् । प्रमाणान्तरेषु विद्यमानाया अपि प्रकल्पकत्वशक्तेरुत्तेजनाभावेन व्याहतत्वात् । यत्र श्रुतिव्यतिरिक्तान्यनेकानि प्रमाणानि युगपदवतरन्ति तत्र तेषां प्रकल्पकत्वशक्त्युत्तेजनं सममेव । यथा स्योनं ते इत्यस्य सदनकरणरूपार्थप्रकाशनसामर्थ्यरूपं लिङ्गं तस्मिन्सीदेति सादनार्थकवाक्यसमभिव्याहाररूपं वाक्यं चेति प्रमाणद्वयं मन्त्रस्य कर्मणि विनियोजकत्वेन युगपदुपस्थितं भवति । द्वयोरपि प्रमाणयोः प्रकल्पकत्वशक्तेराकाङ्क्षयोत्तेजने लिङ्गप्रमाणेन स्योनं त इति सदनं करोतीत्येवं श्रुतिः प्रकल्पिता । तदैव च वाक्यप्रमाणेन स्योनं त इत्यस्य सादनार्थप्रकाशनसामर्थ्यरूपं लिङ्गप्रमाण-

अत एव ऐन्द्या गार्हपत्यमुपतिष्ठते ( मै. सं. ३।२।४ ) इत्यत्र यावल्लिङ्गादिन्द्र्या इन्द्रोपस्थानाङ्गत्वं कल्प्यते तावत् प्रत्यक्षया श्रुत्या गार्हपत्योपस्थानाङ्गत्वं क्रियत इति ऐन्द्री गार्हपत्योपस्थानाङ्गम् ।

सामर्थ्यं लिङ्गम् । यदाहुः—

---

मपरं द्वितीयं प्रकल्पितम् । ततस्तत्कल्पितं लिङ्गप्रमाणं स्योनं त इति सादनं करोतीत्येवं स्वानुगुणां श्रुतिं कल्पयितुं यावत्प्रवृत्तं तावत्तस्य कल्पितस्य लिङ्गप्रमाणस्य कल्पकत्वशक्तिरेव व्याहताभूत् । प्रथमेन लिङ्गप्रमाणेन कल्पितया स्योनं त इति सदनं करोतीत्यनया श्रुत्या मन्त्रविनियोगस्य जायमानत्वेनाकाङ्क्षाया विरतव्यापारत्वेन कल्पितलिङ्गप्रमाणगतप्रकल्पकत्वशक्तेरुत्तेजनाभावात् । तथा च तत्र कल्पितं लिङ्गप्रमाणं तत्प्रकल्पकं वस्तुसद्वाक्यप्रमाणं च विफलमेव । एतदेव च तत्र वाक्यप्रमाणस्य दौर्बल्यम् । अयमेव च तत्र वाक्यप्रमाणस्य बाधः । एवं श्रुत्यादीनां षण्णां प्रमाणानां मध्ये कयोरपि द्वयोरेकत्र विरोधेन संनिपाते पूर्वप्रमाणस्य बाधकत्वं परस्य प्रमाणस्य बाध्यत्वं च स्वयमूह्यम् । एतादृशोदाहरणानि पञ्चदश संभवन्ति । श्रुतेर्लिङ्गवाक्यप्रकरणस्थानसमाख्यारूपैः पञ्चभिः प्रमाणान्तरैः सह विरोधः । लिङ्गस्य वाक्यादिभिश्चतुर्भिः सह विरोधः । यद्यपि लिङ्गस्य श्रुतिप्रमाणेन सहापि विरोधः संभवत्येव तथापि श्रुतेर्लिङ्गेन सह विरोध एव सोऽन्तर्भूत इति न पृथग्गण्यते । एवं च लिङ्गस्य प्रमाणान्तरैः सह विरोधः पूर्वोक्तभेदभिन्नश्चतुर्विध एव । तथा वाक्यस्य प्रकरणादिभिस्त्रिभिः सह विरोधः । प्रकरणस्य स्थानसमाख्याभ्यां द्वाभ्यां प्रमाणाभ्यां सह विरोधः । स्थानस्य च समाख्यया सह विरोध एकः । एवं मिलित्वा पञ्चदश भेदा भवन्ति । एषु चाद्यायाः श्रुतेः केनापि प्रमाणेन सह विरोधे सा बाधिकैव । अन्त्यायाः समाख्यायाः केनापि प्रमाणेन सह विरोधे सा बाध्यैव । मध्यमानां प्रमाणानां तु परापेक्षया बाधकत्वं पूर्वापेक्षया बाध्यत्वं च भवति । तदुक्तम्—

बाधिकैव श्रुतिर्नित्यं समाख्या बाध्यते सदा ।
मध्यमानां तु बाध्यत्वं बाधकत्वमपेक्षया ॥ इति ।

अत एवैन्द्र्येति । उपपादितमेतत् ( पृ. ८५ प. १४ ) ।

इत्थं विनियोगविधिप्रसङ्गेन तत्सहकारिभूतेषु श्रुत्यादिषु षट्सु प्रमाणेषु निरूपणीयेषु प्रथमं श्रुतिप्रमाणं सलक्षणं सावान्तरभेदं सोदाहरणं च तत्र निरपेक्षः ( पृ. ७३ प. १ ) इत्यादिना गार्हपत्योपस्थानाङ्गम् ( पृ. १०३ प ७ ) इत्यन्तेन ग्रन्थेन निरूपितम् । अधुना द्वितीयं लिङ्गप्रमाणं निरूपयति– 'सामर्थ्यं लिङ्गम्' इत्यादिना 'तस्य दौर्बल्यादिति' इत्यन्तेन ।

'सामर्थ्यं सर्वभावानां लिङ्गमित्यभिधीयते' (त. वा. १।३।२) इति। तेनाङ्गत्वं यथा 'बर्हिर्देवसदनं दामि' (मै. सं. १।१।२) इत्यस्य लवनाङ्गत्वम्। स हि लवनं प्रकाशयितुं समर्थः। तच्च लिङ्गं द्विविधम्। सामान्य-

---

समर्थस्य भावः सामर्थ्यम्। समर्थः स्वकार्यकरणे शक्तः। स च न केवलं शब्द एव। किंतु द्रव्यगुणादयः सर्वे एव पदार्था यथासंभवं लिङ्गप्रमाणेन क्वचिदङ्गिनि विनियुक्ता भवन्ति। लौगाक्षिभास्करप्रणीतेऽर्थसंग्रहे तु शब्दसामर्थ्यं लिङ्गमिति लिङ्गप्रमाणलक्षणमुक्तम् (अ० सं. पृ. ५१)। तदुपलक्षणम्। संकोचे मानाभावात्। शब्दभिन्नस्याप्यङ्गत्वेन विनियोगस्यावश्यकत्वाच्च। यथा प्ररोचना अङ्गतयोपयुज्यते। अर्थवादवाक्यबोधितप्राशस्त्यज्ञानेन जायमाना प्ररोचना प्रेरणायाः पोषकत्वेनाङ्गं भवति। प्ररोचना च प्रीतिरूपो मनोवृत्तिविशेषः। यथा च मन्त्रार्थज्ञानस्य कर्मानुष्ठान उपयोगो भवतीति तत्रार्थज्ञानस्य कर्मानुष्ठानाङ्गत्वम्। यथा च स्रुवस्याज्यादिहविरवदानाङ्गत्वम्। ननु स्रुवेणावद्यतीत्यत्र तृतीयाश्रुत्या स्रुवस्यावदानाङ्गत्वमुक्तमिति चेत्-सत्यमुक्तम्। किंतु तावता न निर्वाहः। मांसादिहविर्द्रव्यस्यापि स्रुवेणावदानप्रसङ्गात्। अतोऽत्र लिङ्गप्रमाणापेक्षा। सबिलपात्रविशेषः स्रुवशब्देनोच्यते। तस्य च योग्यतया द्रवद्द्रव्यपदार्थधारणसामर्थ्यमवगम्यते। सामर्थ्यमेव च लिङ्गम्। तथा चात्र लिङ्गप्रमाणेन स्रुवस्याज्यसांनाय्यादिद्रवद्द्रव्यावदानाङ्गत्वं सिध्यति। यद्यपि श्रुतिप्रमाणापेक्षया लिङ्गप्रमाणं दुर्बलं तथाप्यत्र श्रुतिप्रमाणेन लिङ्गप्रमाणस्य न बाधः। विरोधे ह्यगत्या बाध्यबाधकभावप्रकल्पनम्। अत्र तु श्रुतिप्रमाणेन सिद्धं यत्स्रुवस्य हविरवदानाङ्गत्वं तदविरोधेन प्रविशतो लिङ्गप्रमाणस्यात्र श्रुतिर्न बाधिका भवति। दुर्बला अपि स्वानुरोधेन प्रवृत्ताश्चेत्प्रबलैर्न बाध्यन्ते। सर्वभावानामिति। भावाः पदार्थाः। न केवलं लिङ्गप्रमाणेनाङ्गत्वममुकस्यैव भावविशेषस्य किंतु सर्वविधस्यापीति द्योतनाय सर्वशब्दः। क्वचित्तु सर्वशब्दानामिति पाठो दृश्यते सोऽपपाठः। सर्वशब्दस्यास्वारस्यप्रसङ्गात्। प्ररोचनार्थज्ञानस्रुवादीनां लिङ्गप्रमाणेनाङ्गत्वं यदनुपदमेवोक्तं तस्यासंग्रहापत्तेश्च। बर्हिरिति। बर्हिर्दर्भमुष्टिः। एकत्र संधीभूता मुष्टिपरिमिता अनेके दर्भा इति यावत्। दर्भाश्च कुशकाशादयो दशविधाः। नत्वन्ये तृणविशेषा उलपादयः। सदनं स्थानम्। दामीत्यत्र दाप् लवन इति धातुः। लवनं छेदनम्। पुरोडाशस्थानभूतं बर्हिश्छिनद्मीत्यर्थः। स हीति। स इति तच्छब्देन बर्हिर्देवसदनं दामीत्ययं मन्त्रः परामृश्यते। यतः स मन्त्रो लवनरूपमर्थं प्रकाशयितुं समर्थस्ततस्तेनैव लिङ्गप्रमाणेनेत्थं विनियोजिका श्रुतिः प्रकल्प्यते 'बर्हिर्देवसदनं दामीति बर्हिर्लुनाति' इति। तया तस्य मन्त्रस्य दर्भच्छेदनकर्मणि विनियोगो भवति। सामान्यसंबन्धेति।

संबन्धबोधकप्रमाणान्तरानपेक्षं तदपेक्षं च। तत्र यदन्तरेण यन्न संभवत्येव तस्य तदङ्गत्वं तदनपेक्षं केवललिङ्गादेव। यथाऽर्थज्ञानस्य कर्मानुष्ठानाङ्गत्वम्। न हि अर्थज्ञानमन्तरेणानुष्ठानं संभवति।

यदन्तरेण यत्संभवति तस्य तदर्थत्वं तदपेक्षम्। यथोक्तस्य मन्त्रस्य लवनाङ्गत्वम्। लवनं हि मन्त्रं विनापि उपायान्तरेण स्मृत्वा कर्तुं शक्यम्। अतो न मन्त्रो लवनस्वरूपार्थः संभवति। किंत्वपूर्वसाधनीभूतलवनप्रकाशनार्थः।

---

सामान्येनाङ्गिना सह योऽङ्गस्य संबन्धः स सामान्यसंबन्धः। तस्यैवाङ्गस्य योऽङ्गिविशेषेण सह संबन्धः स विशेषसंबन्धः। यथा स्रुवेणावद्यतीति तृतीयाश्रुत्याङ्गभूतस्य स्रुवस्य योऽङ्गिभूतेन यस्य कस्यापि हविषोऽवदानेन सह संबन्धो बोधितः स तत्र सामान्यसंबन्धः। तत्रैव सबिलपात्रविशेषस्य स्रुवस्य योग्यतां दृष्ट्वा लिङ्गप्रमाणेन यस्तस्य द्रवद्द्रव्यस्य हविर्विशेषस्यावदानेन सह संबन्धो बोध्यते स विशेषसंबन्धः। अत्र च लिङ्गप्रमाणेन जायमानो यो विशेषसंबन्धः स सामान्यसंबन्धमपेक्षते श्रुत्या बोधितस्य सामान्यसंबन्धस्यानवगमे हि स्रुवस्य द्रवद्द्रव्यहविर्धारणयोग्यता विद्यमानापि किं कुर्यात्। सबिललौकिकपात्रान्तरवत्। यज्ञार्थं निमन्त्रितेषु विप्रेषु निमन्त्रणेन तेषां यज्ञसंबन्धावगमे ततस्तेषु योग्यताबलात्कश्चिद्ब्रह्मत्वेन कश्चिद्धोतृत्वेन कश्चिदध्वर्युत्वेन कश्चिदुद्गातृत्वेन च व्रियते। तत्रानिमन्त्रितस्य तु योग्यता विद्यमानापि अकिंचित्कारिण्येव। निमन्त्रणाभावेनानुपस्थितस्य बहिर्भूतस्य सामान्यतो यज्ञसंबन्धानवगमात्। सामान्यसंबन्धबोधकप्रमाणान्तरानपेक्षं लिङ्गप्रमाणं दर्शयति–तत्र यदन्तरेणेति। तथा चयस्य वस्तुनः स्वरूपलाभ एव यस्मात्पदार्थाज्जायते तस्य पदार्थस्य तादृशवस्त्वङ्गत्वं नान्तरीयकतयैव सिद्धं भवतीति भावः। केवलालिङ्गादिति। न तु सामान्यसंबन्धबोधकप्रमाणान्तरसापेक्षात्। यद्यपि विशेषसंबन्धस्थले सामान्यसंबन्धः संभवत्येव तथापि नोक्तस्थले तादृशसामान्यसंबन्धबोधकप्रमाणापेक्षेति भावः। अथ सामान्यसंबन्धबोधकप्रमाणान्तरापेक्षं लिङ्गं दर्शयति-यदन्तरेणेति। यं पदार्थं विना यस्य वस्तुनः कारणान्तरेणापि स्वरूपलाभः संभवस्तादृशवस्त्वङ्गत्वं तस्य पदार्थस्य लिङ्गप्रमाणेन यद्यपि साधयितुं शक्यं तथापि तत्किमर्थं साध्यते। अङ्गिभूतस्य वस्तुनोऽन्यथासंभवात्। तेन पदार्थेन कारणान्तरेण वा वस्तुस्वरूपनिष्पत्तावविशेषात्। अतस्तत्र लिङ्गप्रमाणस्य सार्थक्यायेत्थं वक्तव्यं भवति। यत्कारणान्तरतो लभ्यं यादृशं वस्तुस्वरूपं तदपेक्षया लिङ्गप्रमाणेन कल्पितादङ्गाल्लभ्यमाने वस्तुस्वरूपे कश्चिद्विशेषोऽस्तीति। स च विशेषः प्रमाणान्तरसाध्यः। यथा पूर्वोदाहरणे बर्हिर्देवसदनं दामीति

तत्त्वं च न सामर्थ्यमात्रादवगम्यते । लवनप्रकाशनमात्रे सामर्थ्यात् । अतोऽवश्यं प्रकरणादि सामान्यसंबन्धबोधकं स्वीकार्यम् । दर्शपूर्णमासप्रकरणे हि मन्त्रस्य पाठादेवमवगम्यते अनेन मन्त्रेण दर्शपूर्णमासापूर्वसंबन्धि किंचित् प्रकाश्यते इति । अन्यथा प्रकरणपाठवैयर्थ्यप्रसङ्गात् । किं तदपूर्वसंबन्धि प्रकाश्यमित्यपेक्षायां सामर्थ्याद्बर्हिर्लवनमित्यवगम्यते । तद्धि बर्हिःसंस्कारद्वाराऽपूर्वसंबन्धीति मन्त्रस्य सामर्थ्यात्तदर्थत्वे सति नानर्थक्यं प्रसज्यते । तस्माद्बर्हिर्देवसदनं दामीत्यस्य प्रकरणाद्दर्शपूर्णमाससंबन्धितयावगतस्य सामर्थ्याल्लवनाङ्गत्वमिति सिद्धम् ।

---

मन्त्रस्य लवनाङ्गत्वं साध्यते । तत्राङ्गभूतेन मन्त्रेण प्रकाशिते लवनरूपाङ्गिनि अपूर्वसाधनत्वं विशेषः । स च विशेषोत्र प्रकरणरूपेण प्रमाणान्तरेण साधनीयो भवति । दर्शपूर्णमासप्रकरणे ह्ययं मन्त्रः पठ्यते । दर्शपूर्णमासकर्मणि फलजनकं यन्मुख्यमपूर्वं यानि च तादृशापूर्वोत्पादकान्यवान्तरापूर्वाणि तादृशापूर्वान्यतमापूर्वोत्पादकं किंचित्कर्म तादृशप्रकरणपठितैर्मन्त्रैः प्रकाशनीयं भवति । यदि केनचिन्मन्त्रेण तादृशापूर्वोत्पादकं किंचिदपि कर्म प्रकाशितं न स्यात्तर्हि तस्य मन्त्रस्य तत्प्रकरणे पाठो विफलः स्यात् । तथा च मन्त्रार्थालोचनात्प्रागेव प्रकरणपाठज्ञानमात्रेणायं मन्त्रो यस्य कस्यचिदपूर्वसाधनस्याङ्गमित्येवं सामान्यरूपेण प्रतीतेङ्गिन्यस्य मन्त्रस्य विनियोगः प्रकरणप्रमाणेन जायते । तच्चापूर्वसाधनं किमिति विशेषजिज्ञासायां बर्हिरिति मन्त्रार्थालोचने सति तदर्थानुगुण्येन तादृशापूर्वसाधनं बर्हिर्लवनमेवात्रेत्येवमपूर्वसाधनीभूतबर्हिर्लवनकर्मण्यङ्गत्वेन मन्त्रस्य विनियोगो लिङ्गप्रमाणेन जायते । अतोत्र लिङ्गप्रमाणं सामान्यसंबन्धबोधकप्रमाणान्तरसापेक्षमित्युच्यते । अत्रेदं बोध्यम् । लिङ्गप्रमाणं हि विनियोक्त्रीं श्रुतिं कल्पयति सा च कल्पिता श्रुतिर्विनियोजिका भवति । बर्हिर्देवसदनं दामीत्यत्र लिङ्गप्रमाणं स्वानुरूपां विनियोक्त्रीं श्रुतिमनुमाय तद्द्वारा यावदध्युक्तं मन्त्रं लवनकर्मणि विनियोक्तुं प्रवृत्तं भवति तावत्तस्य विनियोगस्याकिंचित्करत्वमालोच्योदासीनं सत्स्वसाहाय्यार्थमितस्ततः प्रमाणान्तरं संप्रेक्षते । एवं लिङ्गप्रमाणस्यौदासीन्ये सति तदपेक्षया दुर्बलमपि प्रकरणप्रमाणं लिङ्गप्रमाणाविरोधेन विनियोक्तुं प्रवृत्तं भवति । एतादृशस्थले चाविरोधेनैव प्रवृत्तिसंभवः । बलवानपि स्वाविरोधेन प्रवृत्तो दुर्बलश्चेत्तं न बाधते । विरोधेन प्रवृत्तौ तु लिङ्गप्रमाणमौदासीन्यं जह्यात्प्रकरणप्रमाणस्य बाधं च कुर्यात् । तच्चाविरोधेन प्रवृत्तं प्रकरणं दर्शपूर्णमासप्रकरणपठितानां सर्वेषां मन्त्राणामेकवाक्यतया महावाक्यतां कल्पयति । प्रकरणेन

पूषानुमन्त्रणमन्त्राणां तु यागानुमन्त्रणसमाख्यया यागसामान्यसंबन्धेऽवगते सामर्थ्यात्पूषयागसंबन्धोऽवगम्यते ।

---

कल्पितं च तद्वाक्यप्रमाणं सर्वेषां मन्त्राणामपूर्वसाधनीभूतार्थप्रकाशनसामर्थ्यरूपं लिङ्गं कल्पयति । यावच्चैतल्लिङ्गं कल्प्यते तावत्तत्र बर्हिर्लवनार्थप्रकाशनसामर्थ्यरूपं वस्तुसल्लिङ्गमौदासीन्यं त्यक्त्वा कल्पितं लिङ्गं च स्वकुक्षौ प्रवेश्य स्वयमपूर्वसाधनीभूतबर्हिर्लवनार्थप्रकाशनसामर्थ्यरूपतां दधत्तेन विशेषरूपेण विनियोक्त्रीं श्रुतिं कल्पयति यद् बर्हिर्देवसदनं दामीति मन्त्रेणापूर्वसाधनं बर्हिर्लुनातीति । मन्त्रोच्चारणपूर्वकलवनेन संस्कृतं बर्हिरासनादावुपयुक्तं चेच्छ्रुतिबलादपूर्वसाधनं भवतीति ।

न केवलमेतादृशस्थले दुर्बलस्य प्रमाणस्य बाधाभावमात्रम् । किं तु तस्य दुर्बलस्य प्रबलप्रमाणसाहाय्यकारित्वात्प्रबलाश्रितत्वेन प्रबलस्येव बलवत्त्वम् । प्रबलस्य प्रमाणस्य यावद्बलं तावद्बलं तस्य दुर्बलस्यापि प्रमाणस्य प्राप्यत इति यावत् । तेन चात्र प्रकृते लिङ्गप्रमाणस्य यादृशं बलं तादृशं प्रकरणप्रमाणस्य भवति । न च बलाधिक्यप्राप्तेः क उपयोग इति वाच्यम् । अत्रैव यदि प्रकरणप्रमाणविरोधेन सामान्यसंबन्धबोधकं वाक्यप्रमाणं स्यात्तर्ह्यन्यत्र वाक्यप्रमाणबाध्येनापि अत्र लिङ्गप्रमाणबद्बलीयसा प्रकरणप्रमाणेन वाक्यप्रमाणस्य बाधः स्यादिति ।

एतादृशबलाधिक्यप्राप्तेरुपयोगमुदाहरणान्तरद्वारा प्रदर्शयति-<u>पूषानुमन्त्रणेति</u> । पूर्वं सामान्यसंबन्धबोधकप्रमाणान्तरसापेक्षस्य लिङ्गस्य दुर्बलप्रकरणप्रमाणापेक्षा प्रदर्शिता । अत्र तु समाख्यारूपप्रमाणापेक्षा । समाख्यारूपप्रमाणं चातीव दुर्बलतरम् । कस्यचिन्मन्त्रसमुदायस्य यागानुमन्त्रणेति समाख्या । समाख्या यौगिकः शब्दः । अनुमन्त्रणं संस्पर्शनम् । यागसंबन्धेनानुमन्त्रणं येन क्रियते तादृशो मन्त्रसमुदायो यागानुमन्त्रणशब्देनोच्यते । पूषप्रभृतिदेवतानामनुमन्त्रणं यैर्मन्त्रैः क्रियते ते पूषानुमन्त्रणमन्त्रा इत्युच्यन्ते । ते च मन्त्राः पूष्णोऽहं देवयज्यया प्रजया पशुभिश्च जनिषीयेत्यादयः । तेषां मन्त्राणां तादृशदेवतानुमन्त्रणाङ्गत्वं लिङ्गप्रमाणेन साध्यते । परं तु मन्त्रोच्चारणपूर्वकेऽनुमन्त्रणे तूष्णीं वा क्रियमाणेऽनुमन्त्रणे यावन्न कश्चिद्विशेषोऽवगम्यते तावदकिंचित्करं लिङ्गप्रमाणमुदासीनं सत्सामान्यसंबन्धबोधकं प्रमाणान्तरमपेक्षते । मन्त्राम्नानबलान्मन्त्रोच्चारणपूर्वकेऽनुमन्त्रणे किंचिदपूर्वमुत्पद्यत इति कल्पनायामपि तस्यापूर्वस्य फलं वक्तव्यम् । तच्चात्र न किंचिन्निश्चेतुं शक्यत इत्यत एतदपूर्वं फलोत्पादकत्वेन निर्ज्ञातस्य कस्यचिन्मुख्यापूर्वस्याङ्गभूतमित्यभ्युपेयम् । तच्च मुख्यापूर्वं

ननु तेषां यावत्समाख्यया पूषयागेन सामान्यसंबन्धोऽवगम्यते, तावत् प्रकरणाद्दर्शपूर्णमासाभ्यामेव सामान्यसंबन्धोऽवगतः । समाख्यातस्तस्य बली-

---

किमिति तन्निश्चयार्थं प्रमाणान्तरापेक्षा वर्तत एव । तत्र च यागानुमन्त्रणेति समाख्यया तेषां मन्त्राणां यागे संबन्धो बोध्यते । यागश्चापूर्वसाधनमित्युत्पत्तिवाक्यादवगम्यते । तत उत्पत्तिवाक्यस्य यो देशः स देशस्तेषां मन्त्राणां यागसंबन्धबोधकसमाख्याप्रमाणेन कल्प्यते । ततस्तेन समानदेशत्वरूपेण स्थानप्रमाणेनाकाङ्क्षा कल्प्यते । आकाङ्क्षारूपेण च प्रकरणप्रमाणेन सामीप्यं कल्प्यते । तेन चैकवाक्यताद्वारेण यागीयापूर्वसाधनीभूतः कश्चनार्थ एतैर्मन्त्रैः प्रकाश्यत इति यावत्सामर्थ्यं कल्प्यते तावत्तत्कल्पितं सामर्थ्यं स्वकुक्षौ प्रवेश्य वस्तुसत्सामर्थ्यं यागीयापूर्वसाधनीभूतपूषादिदेवताप्रकाशनरूपतां दधत्तेन विशेषरूपेण स्वानुरूपां विनियोक्त्रीं श्रुतिं कल्पयति यदेतैर्मन्त्रैर्यागे पूषादिदेवता अनुमन्त्रयते इति । तया च कल्पितया श्रुत्या विनियोगो भवति ।

अथापेक्षकप्रमाणस्य यादृशं बलं तादृशं बलमपेक्षितस्य साहाय्यकारिणः प्रमाणस्य भवतीत्येतदजानानः शङ्कते–ननु तेषां यावदित्यादिना 'अभिधायित्वात्' (पृ.११० प. ४ ) इत्यन्तेन । अयमाशयः । लोके हीत्थं दृश्यते । प्रबलस्य प्रवृत्तौ दुर्बलस्य निवृत्तिः। प्रबलस्य निवृत्तौ दुर्बलस्य प्रवृत्तिः । प्रबलस्य प्रमाणान्तरापेक्षायामौदासीन्ये तु तत्साहाय्यकारिणो दुर्बलस्य प्रवृत्तिर्भवत्येव । तद्विरोधिनस्तु दुर्बलस्य तदानीं मन्थरं प्रवृत्तिरिति । प्रकृते च पूषानुमन्त्रणमन्त्रविषये लिङ्गसमाख्ययोर्द्वयोः प्रमाणयोः प्रवृत्तिः प्रदर्शिता । किंतु तत्र प्रकरणप्रमाणस्यापि प्रवृत्तिः संभवति । दर्शपूर्णमासप्रकरणे ह्येते मन्त्राः पठ्यन्ते । प्रकरणस्य लिङ्गप्रमाणं बाधकं समाख्याप्रमाणं बाध्यं च । तत्र प्रकरणस्य स्वबाधकलिङ्गप्रमाणाविरोधित्वे प्रवृत्तिरप्रत्यूहैव । विरोधित्वे तु बाधकस्य लिङ्गप्रमाणस्यौदासीन्यं दृष्ट्वा मन्थरं प्रवृत्तिः स्यात् । तावतापि तत्प्रकरणं समाख्यां बाधितुं क्षमत एव यदि समाख्याप्रमाणं स्वविरोधि स्यात् । अविरोधि चेत्स्वकुक्षौ प्रवेशयेत् । अथात्र प्रकरणं प्रमाणं लिङ्गप्रमाणविरोधि तदविरोधि वा । तथा समाख्याप्रमाणमत्र प्रकरणप्रमाणविरोधि तदविरोधि वेति विचार्यते । तत्र प्रकरणप्रमाणं लिङ्गप्रमाणेन सह विरुध्यत एव । लिङ्गप्रमाणविचारे क्रियमाणे मन्त्रस्य पूषदेवताप्रकाशनसामर्थ्यमवगम्यते । प्रकरणप्रमाणेन च दर्शपूर्णमासाङ्गत्वमवगम्यते । दर्शपूर्णमासे च न पूषदेवतासंबन्ध इति । अत एव चात्र समाख्याया अपि प्रकरणप्रमाणेन सह विरोधः सिद्धो भवति । समाख्याया लिङ्गप्रमाणानुसारित्वेन पूषयागसंबन्धबोधकत्वात् । दर्शपूर्णमासे च पूषदेवताया असंबन्धात् । तथा चात्र समाख्या प्रकरणप्रमाणेन बाधिता सती कथं लिङ्गप्रमाणस्य

यस्त्वात् । अत एव पौरोडाशिकमिति समाख्याते ब्राह्मणे आम्नातानामपि प्रयाजानां प्रकरणात्सान्नाय्योपांशुयागाङ्गत्वमपीत्युक्तम् ।

---

साहाय्यं कुर्यात् । ननु नात्र समाख्यायाः पूषयागसंबन्धबोधकत्वम् । तस्या लिङ्गप्रमाणानुसारित्वे स्यान्नाम तथा कथंचित् । लिङ्गप्रमाणानुसारित्वमेव तु न सिध्यति । मध्ये प्रकरणेन प्रमाणेन तस्या बाधात् । तथा चात्र समाख्याया यागसामान्यसंबन्धबोधकत्वान्न सा प्रकरणप्रमाणेन सह विरुद्धा भवतीति चेत्-किं ततः । प्रकरणप्रमाणं हि स्वेन सहाविरोधिनीं समाख्यां स्वकुक्षौ प्रवेश्य स्वयं विशेषरूपतां दधानं दर्शपूर्णमासरूपयागसंबन्धं बोधयेत् । नैतावतात्र समाख्या साहाय्यापेक्षिणो लिङ्गप्रमाणस्य साहाय्यं कथमपि कर्तुं क्षमते । एवं चात्र साहाय्यापेक्षिणो लिङ्गप्रमाणस्य साहाय्यालाभेन न्यूनबलस्य परमुखप्रेक्षित्वापत्तौ प्रकरणप्रमाणेन मन्त्रस्य दर्शपूर्णमासयागाङ्गत्वं यद्बोधितं तत्रैव कथंचिल्लिङ्गप्रमाणस्यानुमतिः संपादनीया भवति । सा चेत्थम् । पुष्णातीति पूषेति पूषशब्दस्यावयवशक्त्या दर्शपूर्णमासयागीयाग्न्यादिदेवताप्रतिपादकत्वं नत्वत्र रूढ्यादित्यदेवताप्रतिपादकत्वमिति । एवं चात्र लिङ्गप्रकरणसमाख्यारूपप्रमाणत्रयेणैकवाक्यतया पूषानुमन्त्रणमन्त्राणां दर्शपूर्णमासाङ्गत्वं स्यान्नतु पूषयागाङ्गत्वमिति । अत एवेति । प्रकरणप्रमाणस्य समाख्यापेक्षया बलीयस्त्वादेवेत्यर्थः । बलीयस्त्वे बीजं च प्रागुक्तम् ( पृ. १०१ प. २० ) । समिधो यजति । तनूनपातं यजति । इडो यजति । बर्हिर्यजति । स्वाहाकारं यजति ( तै. सं. २।६।१।१ ) एते पञ्च प्रयाजाः । प्रयाजानां मन्त्रास्तु तैत्तिरीयब्राह्मणे मन्त्रकाण्डे पञ्चमानुवाक एवमाम्नाताः—समिधो अग्न आज्यस्य वियन्तु । तनूनपादग्न आज्यस्य वेतु । इडो अग्न आज्यस्य वियन्तु । बर्हिरग्न आज्यस्य वेतु । स्वाहाग्निम् । स्वाहा सोमम् । स्वाहाग्निम् । स्वाहा प्रजापतिम् । स्वाहाग्नीषोमौ । स्वाहेन्द्राग्नी । स्वाहेन्द्रम् । स्वाहा महेन्द्रम् । स्वाहा देवाँ आज्यपान् । स्वाहाग्निँ होत्राज्जुषाणाः । अग्न आज्यस्य वियन्तु ( तै. ब्रा. ३।५।५ ) इति । एते मन्त्राः सायणाचार्यैस्तैत्तिरीयसंहिताभाष्ये द्वितीयाष्टके षष्ठप्रपाठके प्रथमानुवाके प्रसङ्गाद्व्याख्याताः । तथाहि तत्र भाष्यम्—एतेषां मन्त्राणां विनियोगं बौधायनो दर्शयति समिधो अग्न आज्यस्य वियन्त्विति प्रथमम् । तनूनपादग्न आज्यस्य वेत्विति द्वितीयमित्यादि । हे अग्ने समिध्यमानास्तवमूर्तय आज्यस्य वियन्तु इयमानामिदमाज्यमश्नन्तु । तनूं शरीरं न पातयति न नाशयति किं तु पालयतीति तनूनपात् । हे अग्ने द्वितीया तनूनपात्तव मूर्तिराज्यं पिबतु । हे अग्ने इड ईड्याः स्तुत्यास्तव मूर्तय आज्यं पिबन्तु । बृंहणाद्बर्हिः । हे अग्ने फलं बृंहयन्ती तव मूर्तिराज्यं पिबतु । अग्निं प्रथमाज्यभागदेवं प्रति स्वाहा हुतं भविष्यति । एवं द्वितीयाज्यभागदेवे

किंच यागानुमन्त्रणसमाख्ययापि न पूषयागेन सामान्यसंबन्धोऽवगम्यते। किंतु यागमात्रेण। प्रकरणेन तु दर्शपूर्णमासाभ्यामेव विशेषसंबन्धोऽवगम्यते। अतः प्रकरणाज्झटिति तत्संबन्धस्यैवावगतत्वात्तदर्थत्वमेव तेषां युक्तम्। पूषेतिशब्दस्य पुष्णातीति व्युत्पत्त्या कथंचिदग्न्याद्यभिधायित्वात्।

मैवम्। पूषानुमन्त्रणमन्त्रे हि श्रूयमाणे एवमवगम्यते–पूषाभिधानसमर्थत्वादयं मन्त्रस्तत्प्रकाशनार्थ इति लवनमन्त्र इव लवनप्रकाशनार्थः। न तत्र प्रकरणाद्यपेक्षा। येन तेषामुपजीव्यत्वेन प्राबल्यं स्यात्। प्रकरणात्तु दर्शपूर्णमासार्थत्वे तस्य वाक्यलिङ्गश्रुतिकल्पनेन विनियोजकत्वात् लिङ्गस्योपजीव्यत्वेन प्राबल्यम्। अतो लिङ्गात्पूषप्रकाशनार्थत्वेऽवगते तन्मात्रप्रकाशनमनर्थकमित्यपूर्वसाधनपूषप्रकाशनार्थत्वं वक्तव्यम्। किं तदपूर्वमित्यपेक्षायां

---

प्रति स्वाहा हुतमस्त्विति भविष्यतीति क्रमेण द्रष्टव्यम्। आवाहननिगदे या देवताः क्रमेण निर्दिष्टास्ता एवास्मिन् स्वाहाकारनिगदेपि निर्दिश्यन्त इत्यवधेयम्। होत्रात्-होमनिमित्तं स्विष्टकरणार्थमित्यर्थः। हे अग्ने एते सर्वे देवाः प्रीयमाणा इदानीं त्वन्मुखेनाज्यं पिबन्त्विति। एते च मन्त्रा यत्र ब्राह्मणभागे पठितास्तस्य ब्राह्मणभागस्य पौरोडाशिक इति समाख्या याज्ञिकानाम्। प्रकरणं च तत्र सांनाय्योपांशुयागस्य। सम्यङ्नीयते होमार्थमग्निं प्रतीति सांनाय्यं हविर्विशेषः। ऐन्द्रं दध्यमावास्यायाम् ऐन्द्रं पयोमावास्यायाम् इति विहितयोर्दधिपयसोः सांनाय्यसंज्ञा। उपांशुयागश्च दर्शपूर्णमासान्तर्गतो यागविशेषः। उपांशुयाज इत्यपि शब्दः साधुः। प्रयाजानुयाजौ यज्ञाङ्गे (पा. सू. ७।३।६२) इति सूत्रे प्रयाजानुयाजग्रहणमुपलक्षणार्थमित्यपि पक्षोस्ति। अतो यज्ञाङ्गभूतयत्किंचिदर्थवाचकपूषांशुयाजादिशब्देष्वपि तत्सूत्रप्रवृत्त्या कुत्वनिषेधसंभवात्। किं च यागेति। अनुपदमेवैतदुपपादितम्। अथापेक्षकप्रमाणस्य यावद्बलं तावद्बलमपेक्षितस्य भवतीत्याशयेन समाधत्ते–मैवमिति। पूषानुमन्त्रणेति। अयं भावः। पूषानुमन्त्रणमन्त्रश्रवणे सत्यन्यानपेक्षयैव पूषदेवताप्रकाशनार्थोयं मन्त्र इत्यवगम्यते। तथा चात्र लिङ्गप्रमाणस्य स्वरूपलाभे न प्रमाणान्तरापेक्षा। किं तु लिङ्गप्रमाणेन मन्त्रस्य विनियोगे तस्य किं फलमित्येवं प्रयोजनावगत्यर्थं प्रमाणान्तरापेक्षा। यत्र स्वरूपलाभार्थं प्रमाणान्तरापेक्षा तत्र प्रमाणान्तरस्योपजीव्यत्वेन प्राबल्यादपेक्षकस्य प्रमाणस्य बलहानिर्भवति। प्रकृते तु स्वयमेवान्यानपेक्षतया लब्धस्वरूपं लिङ्गमिति तस्य प्रयोजनावगतये परमुखप्रेक्षित्वेपि न बलहानिरीषदपि जायते। अतस्तल्लिङ्गप्रमाणमत्र कथं स्वापेक्षया दुर्बलेन प्रकरणप्रमाणेन संपादिते विनियोगे कथंचिदनुमतिं दद्यात्। प्रत्युत तं

यागानुमन्त्रणसमाख्यानुगृहीताल्लिङ्गात्पूषयागापूर्वसंबन्धिदेवताप्रकाशनार्थोऽय-मित्यवगम्यते। अतो यद्यपि समाख्यातः प्रकरणं बलीयस्तथाऽपि तस्य लिङ्गेन बाधितत्वात् समाख्याया दुर्बलाया अपि प्रबललिङ्गाश्रितत्वेन प्राबल्यात्सैव सामान्यसंबन्धे प्रमाणं संभवति। दुर्बलस्यापि प्रबलाश्रितस्य प्राबल्यात्।

अत एव श्रुत्यपेक्षया दुर्बलाया अपि स्मृतेराचमनरूपप्रबलार्थाश्रितत्वेन प्राबल्यात्पदार्थधर्मगुणभूतश्रौतक्रमत्यागेन वेदकरणानन्तरं क्षुते आचमनमेव कार्यमित्युक्तम् (जै. १।३।७)। यथाहुः—

अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः।
दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः॥

इति। (त. वा. ३।३।७)

---

विनियोगं रुणद्ध्येव। प्रकरणप्रमाणं च स्वरूपलाभ एव लिङ्गापेक्षम्। प्रकरणप्रमाणस्य वाक्यलिङ्गश्रुतिकल्पनेनैव विनियोजकत्वात्। एवमत्र लिङ्गप्रमाणेन प्रकरणप्रमाणेपसारिते समाख्याप्रमाणस्य प्रवृत्तिर्निराबाधैव भवतीति पूषयागीयापूर्वसंबन्धिपूषदेवतानुमन्त्रणे मन्त्रस्य विनियोगः सिध्यतीति।

अत एव श्रुतीति। जैमिनीये प्रथमाध्यायतृतीयपादे चतुर्थे पदार्थप्राबल्याधिकरण इदमुक्तम्। क्षुत आचामेत् इत्येवं शुद्ध्यर्थमाचमनं सार्वत्रिकं पुरुषार्थं विधीयते। क्रतुमध्ये क्षुते जाते तु तेन निमित्तेन तत्र नैमित्तिकमाचमनमाचान्तेन कर्तव्यमित्येवं क्रत्वर्थं विधीयते। यज्ञोपवीतिना कर्तव्यमित्यत्र यज्ञोपवीतित्ववत्। क्रतुप्रकरणे वेदं कृत्वा वेदिं करोति इति श्रूयते। वेदो नाम दर्भमयं संमार्जनसाधनम्। आहवनीयगार्हपत्यरूपाग्निद्वयमध्यवर्तिनी चतुरङ्गुलखाता भूमिर्वेदिः। वेदं कृत्वेत्यनेन वेदकरणोत्तरं क्षुतं स्यात्तर्हि तत्र स्मृतिप्राप्ताचमनापेक्षया श्रुत्युक्तस्य वेदिकरणस्य बलवत्त्वादाचमनं बाधित्वा वेदिः कर्तव्येति पूर्वपक्षः। सिद्धांतस्त्वित्थम्। स्मृतावाचमनरूपः पदार्थो विधीयते। वेदं कृत्वा वेदिं करोतीति श्रुतौ तु वेदं वेदिं चेति पदार्थद्वयमनूद्य केवलं तयोः क्रमो विधीयते। क्रमश्च पदार्थधर्मः। पदार्थश्चानुष्ठेयत्वात्प्रधानम्। क्रमस्तु पदार्थधर्मत्वादप्रधानम्। धर्मस्य च पदार्थाश्रितत्वात्पदार्थस्तस्योपजीव्यो भवति। श्रुत्युक्तेन क्रमेण श्रुत्युक्तस्याचमनस्य बाधे त्वप्रधानेन स्वोपजीव्यस्य प्रधानस्य बाधः स्वीकर्तव्यः स्यात्। स च न न्याय्यः। उपजीव्यविरोधस्यायुक्तत्वात्। तथा च श्रुतिरप्यत्राप्रधानानुषङ्गित्वाद्दुर्बलेव भवति।

यत्तु पूषेति शब्दः कथंचिदग्न्याद्यभिधायीति तन्न । तस्यादन्तको हि सः ( तै. सं. २।६।८ ) इत्यादिवाक्यशेषेण वैदिकप्रसिद्धया च अर्थविशेषे रूढत्वात् । रूढेश्चावयवार्थालोचनसव्यपेक्षाद्योगाद्बलीयस्त्वात् । अत एव

---

किंच श्रुतौ वेदं कृत्वेत्यत्र क्त्वाप्रत्ययेन शब्दमर्यादया पूर्वकालिकत्वं वेदकरणस्य बोध्यते । अव्यवधानांशस्त्वार्थिकः । तस्य स्मृत्युक्ताचमनेन बाधेपि न सर्वथा श्रुतेर्बाधो भवति । एवं चात्र पूषानुमन्त्रणेति समाख्यायाः प्रबलप्रमाणाश्रितत्वेन प्राबल्यात्तया प्रकरणस्य बाध एव । अतोत्र प्रकरणेन प्रमाणेन संभाव्यमानो यो दर्शपूर्णमासे पूषानुमन्त्रणमन्त्राणां विनियोगस्तत्र पुष्णातीति पूषेति योगार्थानुसरणेन लिङ्गप्रमाणस्यानुग्रहकल्पनं सुतरामन्याय्यम् । प्रकरणस्य समाख्यया बाधितत्वात् । एवं चात्र न पूषानुमन्त्रणमन्त्राणां दर्शपूर्णमासे विनियोग इति स्थितम् ।

अथात्र पूषेति शब्दे योगार्थ उपपादयितुं नैव शक्यत इत्याह-यत्तु पूषेति । तस्यादन्तक इति । तैत्तिरीयसंहितायां तस्मात्पूषा प्रपिष्टभागोदन्तकः ( तै. सं. २।६।८।५ ) इत्युक्तम् । पूषादित्यः । स चादन्तको दन्तरहितः । अतः स प्रपिष्टभागः । प्रकृष्टं यत्पिष्टं तद्रूपो हविर्भागो यस्य तादृशः । पूष्णः सर्वत्र चरोः पिष्टमेव भागं कुर्यात् । पूषदेवतोद्देशेन दीयमानं द्रव्यं पेषणं कृत्वा देयमिति यावत् । अस्यां श्रुतौ दन्तरहितस्य पूष्णः पिष्टभागत्वमुक्तम् । यद्यपीयं श्रुतिः प्रकृतिभूते दर्शपूर्णमासप्रकरणे पठ्यते तथापि प्रकृतौ पूषदेवताया असंभवेन प्रकरणादुत्कृष्य विकृतिगामिनी भवेति । तत्र पूषदेवतायाः संभवात् । तदुक्तं जैमिनिना पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात्प्रकृतौ ( जै. सू. ३।३।३४ ) इति । पौष्णं पूषदेवतासंबन्धितया प्रतीयमानं पेषणं प्रदेयद्रव्यसंचूर्णनं पौष्णं चरुम् ( तै. सं. १।८।२ ) इत्यादिना विहिते विकृतिभूते पूषयागे प्रकरणादुत्कृष्य प्रतीयते । कुतः । प्रकृतिभूते दर्शपूर्णमासयागे पूषदेवताया अचोदनादङ्गत्वेनाविधानादिति सूत्रार्थः । पुष्णातीति पूषेति योगार्थग्रहणे तु पूषशब्दस्याग्न्यादिदेवताभिधायकत्वेन प्रकृतिभूते दर्शपूर्णमासयागे च तादृशदेवतासंबन्धस्य सत्त्वेनैतत्सूत्रं विरुद्धं स्यात् । दन्तराहित्यस्याग्न्यादिदेवतास्वसंभवाच्च । नन्वादित्यरूपे देवताविशेषे पूषशब्दस्य रूढ्यभ्युपगमेपि पुष्णातीति पूषेत्यवयवशक्त्याग्न्यादिदेवतापरत्वं पूषशब्दस्य दुर्वारमिति चेत्तत्राह-रूढेश्चेति । रूढ्यर्थोहि शब्दश्रवणमात्रेणोपस्थितो भवतीत्यतः स शीघ्रोपस्थितिकः प्रथममुपस्थितत्वादन्तरङ्गः । योगार्थश्च तादृशशब्दावयवीभूतप्रकृतिप्रत्ययतदर्थतदन्वयानुसंधानेनोपस्थितो भवतीत्यतः स विलम्बोपस्थितत्वाद्बहिरङ्गः । तत्र प्रथममुपस्थितस्य रूढ्यर्थस्यान्वयेन वाक्यार्थे वृत्ते तदनन्तरं निष्फलत्वाद्योगार्थस्योपस्थितिरेव न भवति । एतदेव च रूढेर्योगापेक्षया बलीयस्त्वम् । एतन्मूलिकैव योगजबोधे तदना-

वर्षासु रथकारोऽग्नीनादधीत ( बौ. श्रौ. सू. २।१२।५३।१७ ) इत्यत्र रथकारशब्देन सौधन्वनापरपर्यायो वर्णविशेष उच्यते । रूढेः प्राबल्यात् । न तु रथं करोतीति व्युत्पत्त्या द्विजातीयः । योगस्य दौर्बल्यादित्युक्तं षष्ठे ( ६।१।४४ ) ।

---

लिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धिकेति व्युत्पत्तिः । तदनालिङ्गितेत्यस्य योगशक्त्यनालिङ्गितेत्यर्थः । पङ्कजादियोगरूढशब्दस्थले रूढ्यर्थस्य पङ्कजस्य पङ्कावधिकोत्पत्त्याश्रयत्वरूपयोगार्थालिङ्गितत्वेन न योगशक्तिप्रतिबन्धः । योगशक्तिस्तत्र रूढिशक्तेः सहकारिणी भवति । एवं च यौगिकरूढमण्डपादिशब्दविषयोयं प्रतिबध्यप्रतिबन्धकभावः । एतन्मूलक एव योगाद्रूढिर्बलीयसीति न्यायः । तथा च प्रकृते पुष्णातीति पूषेत्येवं योगशक्तेः प्रतिबन्धान्न पूषशब्दोग्न्यादिदेवतामभिधातुं प्रभवतीति भावः । अत एव वर्षास्विति । जैमिनीये षष्ठाध्यायप्रथमपादे द्वादशे रथकाराधिकरणे इदमुक्तम् । तस्यायं भावः । 'वसन्ते ब्राह्मणोऽग्निमादधीत' 'ग्रीष्मे राजन्यः' 'शरदि वैश्यः' इत्येवमृतुविशेषपुरस्कारेण त्रैवर्णिकानामग्न्याधानमुक्तम् । तथा 'वर्षासु रथकारोग्नीनादधीत' इत्येवं वर्षाकाले रथकारस्याग्न्याधानमुक्तम् । अत्र रथकारशब्दस्त्रैवर्णिकातिरिक्ते कस्मिंश्चिज्जातिविशेषे रूढः । तदुक्तं याज्ञवल्क्येन–

माहिष्येण करण्यां तु रथकारः प्रजायते ( याज्ञ. १।९५ ) इति ।

वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः । शूद्रायां वैश्यादुत्पन्ना करणी । तदप्युक्तं याज्ञवल्क्येन—

वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।
वैश्यात्तु करणः शूद्र्यां विन्नास्वेष विधिः स्मृतः ॥

( याज्ञ० १।९२ ) इति ।

अस्मिंश्च जातिविशेषे रथकारशब्दो न रथं करोतीति व्युत्पत्त्या प्रवर्तते । रथमकुर्वत्यपि तज्जातीये रथकारशब्दप्रयोगदर्शनात् । तथा च जातिविशेषे रूढोयं रथकारशब्दः । सौधन्वनशब्देनायमेवोच्यते । सौधन्वनशब्दस्य रथकारशब्दपर्यायत्वात् । प्रकृते च वर्षासु रथकारोग्नीनादधीतेत्यत्र रथकारशब्देनायमेव जातिविशेषो गृह्यते । न तु रथं करोतीति व्युत्पत्त्या रथनिर्माता यः कश्चिद्विप्रादिरत्र गृह्यते । नन्वत्रावयवार्थानुरोधेन रथकारशब्देन विप्रादिस्त्रैवर्णिक एव गृह्यताम् । तथा सति हि तस्याधानं सिद्धमेवेति केवलमत्र रथकरणेन निमित्तेन वर्षाकालमात्रविधानमिति लाघवम् । रूढ्यर्थग्रहणे तु तस्य त्रैवर्णिकातिरिक्तत्वादाधानस्यासिद्धत्वेन तदपि विधेयमिति गौरवं स्यादिति चेन्न । तत्र हि लाघवगौरवचर्चावसरो यत्र द्वयोः पक्षयोः

तस्माद्युक्तं समाख्यया सामान्यसंबन्धेऽवगते सामर्थ्यात्पूषयागसंबन्धः पूषानुमन्त्रणमन्त्राणामिति । यथाहुः—

यागानुमन्त्रणानीति समाख्या क्रतुयोजिका ।

तस्माच्छक्त्यनुरोधेन प्राप्तिस्तद्देवते क्रतौ ॥

( त. वा. ३।२।२ ) इति ।

तत्सिद्धं प्रमाणान्तरसिद्धसामान्यसंबन्धस्य पदार्थस्य विनियोजकं लिङ्गमिति ।

तत्र मन्त्रविनियोजकं लिङ्गं मुख्ये एवार्थे विनियोजकं न गौणे । मुख्यार्थस्य प्रथममुपस्थितत्वेन तत्रैव विनियोगबुद्धौ पर्यवसन्नायां पुनर्गौणेऽर्थे विनियोगकल्पनायां गौरवप्रसङ्गात् । अत एव बर्हिर्देवसदनं दामि ( तै. सं. १।१।२ ) इति मन्त्रः सामर्थ्यात्कुशलवनाङ्गम् । तेषां मुख्यत्वात् । न उलपराजिलवनाङ्गमित्युक्तम् ।

---

समकक्षता । प्रकृते तु रथकार इति शब्दश्रवणसमकालमेव रूढ्यर्थोपस्थितिः । योगार्थस्य तु ताद्दशशब्दावयवीभूतप्रकृतिप्रत्ययतदर्थतदन्वयानुसंधानोत्तरमिति स्पष्टमेव वैषम्यम् । उपस्थितं परित्यज्यानुपस्थितकल्पनाया अन्याय्यत्वादिति । तस्मात्प्रकृते पूषशब्दस्य रूढ्यादित्यपरत्वमेव नतु योगार्थानुसरणेनाग्न्यादिपरत्वम् । तथा च प्रकृतिभूते दर्शपूर्णमासे आदित्यदेवताया असंबन्धाद्विकृतिभूते सौर्ययाग एव पूषानुमन्त्रणमन्त्राणां विनियोगो नतु प्रकरणाद्दर्शपूर्णमासे । प्रकरणस्य लिङ्गप्रमाणेन बाधितत्वात् । बाधिते च प्रकरणे समाख्या लिङ्गप्रमाणस्य सहकारिणी भवतीति सिद्धम् । उपसंहरति-तस्मादिति । यागानुमन्त्रणानीति । शक्तिः पूषादिपदानामादित्यादौ रूढिरूपा शक्तिः । सा पूषादिर्देवता यत्र स तद्देवतः । यागानुमन्त्रणेति समाख्या यागानुमन्त्रणमन्त्राणां यागसामान्ये विनियोगं बोधयति । ततः पूषादिपदशक्त्यनुरोधात्तु लिङ्गप्रमाणेन पूषादिदेवताके यागविशेषे तेषां मन्त्राणां प्राप्तिर्भवतीत्यर्थः ।

लिङ्गप्रमाणेन विनियोगः सर्वभावानामिति प्रागुक्तम् ( पृ. १०४ प. १ ) । तत्र मन्त्रस्य विनियोगे विशेषमाह-तत्र मन्त्रेति । जैमिनीये तृतीयाध्याये द्वितीयपादे प्रथमाधिकरण इदं चिन्तितम् । बर्हिर्देवसदनं दामीति मन्त्रस्य लवनप्रकाशनसामर्थ्यलक्षणेन लिङ्गेन बर्हिर्लवने विनियोग इति पूर्वमुक्तम् ( पृ. १०४ प. २) । लवितव्यं बर्हिश्च द्विविधं मुख्यं गौणं च । मुख्यं कुशकाशा-

तदिदं लिङ्गं वाक्यादिभ्यो बलवत्। तेषां हि न साक्षाद्विनियोजकत्वम्। किंतु लिङ्गं श्रुतिं च कल्पयित्वा। न चासमर्थस्य श्रुतिं कल्पयित्वा विनियोगकल्पना संभवतीति सामर्थ्यस्यापि कल्प्यत्वेनोपजीव्यत्वात्। अतस्तैर्यावत्सामर्थ्यं कल्पयित्वा श्रुतिः कल्प्यते तावदेव क्लृप्तेन सामर्थ्येन श्रुतिं कल्पयित्वा विनियोगः क्रियते इति तस्य प्राबल्यम्।

अत एव 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामि' (तै. ब्रा. ३।७।५) इत्यस्य सदनाङ्गत्वं लिङ्गात्। न तु वाक्यात्सादनाङ्गत्वम्। तस्य दौर्बल्यादिति।

---

विवक्षाविषदर्भरूपम्। तत्सदृशं तृणान्तरमुलपादि गौणम्। मुख्यबर्हिर्निष्ठगुणसदृशगुणवत्त्वेनोलपादौ बर्हिःशब्दस्य प्रयुज्यमानत्वात्। यथाग्निशब्दोऽग्निसदृशे माणवके प्रयुज्यते तद्वत्। तत्र मुख्ये बर्हिष्येव बर्हिर्देवसदनं दामीति मन्त्रस्य विनियोगो न गौणे। मुख्यार्थस्य प्रथमं प्रतीतत्वेन तत्र मन्त्रं विनियुज्य चरितार्थस्य लिङ्गस्य गौणेऽर्थे प्रवृत्त्ययोगात्। यस्य तु मुख्योऽर्थः प्रकरणे नास्ति किंतु प्रकरणान्तरे तत्रापि मुख्यार्थलाभात्प्रकरणान्तरेऽपि मन्त्रस्य विनियोगः कार्यो नतु प्रकरणलोभाद्गौणेऽर्थे। प्रकरणविच्छेदापेक्षया मुख्यार्थपरित्यागस्य जघन्यत्वात्। अत एव पूषानुमन्त्रणमन्त्राणां दर्शपूर्णमासप्रकरणे पठितानामपि प्रकरणं विच्छिद्य प्रकरणान्तरे पूषयागे उत्कर्षो भवति। यत्र तु मन्त्रस्य मुख्यार्थेन न प्रकरणे नापि प्रकरणान्तरे विनियोगः संभवति तत्रापि जपमात्रेण तस्य मन्त्रस्योपयोगः कल्पनीयो न तु कथमपि गौणार्थेन। प्रमाणान्तरं विना गौणार्थस्य प्रतीतेरेवाभावात्। नह्यग्निरित्युक्ते तावता प्रमाणान्तरमन्तरेण तत्राग्निशब्दस्य गौणेऽर्थे सामर्थ्यं वक्तुस्तत्र तात्पर्यं वा कथंचिदपि लौकिकाः प्रतिपद्यन्ते। मुख्येऽर्थे तु श्रवणमात्रेण शब्दस्य सामर्थ्यं वक्तुस्तात्पर्यं च लोका अवगच्छन्ति।

<u>तेषां हीति</u>। वाक्यादीनां प्रमाणानामित्यर्थः। वाक्यप्रमाणं च समभिव्याहाररूपम्। नहि समभिव्याहारमात्रेण सामर्थ्यमकल्पयित्वा श्रुतिः कल्पयितुं शक्यते। येन च विनियोगः क्रियते तदेव प्रमाणम्। समभिव्याहाररूपं वाक्यं च लिङ्गं तद्द्वारा श्रुतिं च कल्पयित्वैव विनियोजकं भवतीति वाक्यप्रमाणस्य प्रमाणत्वमेव लिङ्गश्रुतिरूपप्रमाणद्वयाधीनम्। अतो लिङ्गं श्रुतिश्चेति प्रमाणद्वयं वाक्यप्रमाणस्योपजीव्यं भवति। उपजीव्यस्य प्राबल्यं च लोके प्रसिद्धमेव <u>अत एव स्योनमिति</u>। इदं प्रागुपपादितम् (पृ. ८३ प. १७)।

समभिव्याहारो वाक्यम् । समभिव्याहारो नाम साध्यत्वादिवाचकद्वितीयाद्यभावे वस्तुतः शेषशेषिणोः सहोच्चारणम् । यथा 'यस्य पर्णमयी जुहूर्भवति न स पापꣳश्लोकꣳशृणोति' (तै. सं. ३।५।७।२) इति । अत्र हि न द्वितीयादिविभक्तिः श्रूयते । केवलं पर्णताजुह्वोः समभिव्याहारमात्रम् । तस्मादेव च पर्णताया जुह्वङ्गत्वम् ।

---

एवं लिङ्गप्रमाणं सप्रपञ्चं व्याख्यायेदानीं वाक्यप्रमाणं निरूपयति-समभिव्याहार इति । समभिव्याहारः सामीप्यम् । तच्च शब्दयोर्वाक्ययोर्वोच्चारणक्रियाद्वारा संभवति । साध्यत्वादीति । शेषशेषिणावङ्गाङ्गिनौ । यथा व्रीहीन्प्रोक्षतीत्यत्र व्रीहीनिति द्वितीयाश्रुत्या व्रीहीणां साध्यत्वावगमेन तेषामङ्गित्वं साधनस्य च प्रोक्षणस्याङ्गत्वं ज्ञायते । यद्यपि प्रोक्षणात्प्रागेव लब्धस्वरूपा व्रीहय इति न ते प्रोक्षणस्य साध्या भवितुमर्हन्ति तथापि न तेषां प्रोक्षणात्पूर्वमपूर्वसाधनत्वमित्यपूर्वसाधनत्वरूपधर्मविशिष्टा व्रीहयः प्रोक्षणेनैव जायन्ते । अतस्ते प्रोक्षणसाध्या इत्युच्यन्ते । एवं च यत्र साध्यत्वादिबोधिका द्वितीयादिश्रुतिर्नास्ति तत्र केवलं तेषां सहोच्चारणमात्रेणाङ्गाङ्गिभावोऽवगम्यते । एतदेव वाक्यं प्रमाणम् । यस्य पर्णेति । तैत्तिरीयसंहितायां तृतीयाष्टके पञ्चमप्रपाठके सप्तमेनुवाके इदं पठ्यते– तृतीयस्यामितो दिवि सोम आसीत् । तं गायत्र्याहरत् । तस्य पर्णमच्छिद्यत । तत्पर्णोऽभवत् । तत्पर्णस्य पर्णत्वम् । यस्य पर्णमयी जुहूर्भवति सौम्या अस्याहुतयो भवन्ति जुषन्तेऽस्य देवा आहुतीः । देवा वै ब्रह्मन्नवदन्त । तत्पर्ण उपाशृणोत् । सुश्रवा वै नाम । यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकꣳ शृणोति (तै. सं. ३।५।७) इति । अयं भूलोकः प्रथमः । द्वितीयोन्तरिक्षलोकः । तृतीयो द्युलोकः । इतो भूलोकादारभ्य तृतीये द्युलोके पूर्वं सोम आसीत् । गायत्री तं सोमं समाहरत् । तस्याह्रियमाणस्य सोमस्यैकं पर्णं भूमौ पतित्वा पलाशवृक्षोऽभवत् । पर्णजन्यत्वात्तस्य वृक्षस्य पर्णनाम संपन्नम् । तादृशेन पर्णवृक्षेण जुहुं संपादयेत् । तथा सति तया जुह्वा हूयमाना आहुतयः सर्वाः सोमसंबन्धिन्यो भवन्ति । देवाश्च ता आहुतीः प्रीतिपुरःसराः सेवन्ते । यदा च देवा ब्रह्मतत्त्वविषये परस्परं संवादं रहसि कृतवन्तस्तदानीं पर्णवृक्षाभिमानी देवस्तद्वृक्षच्छायायामुपविष्टानां देवानां वचनमशृणोत् । तस्मात्तस्य वृक्षस्य सुश्रवा इति नाम संपन्नम् । यस्मादयं वृक्षः सुश्रवास्तस्माज्जुह्वास्तन्मयत्वे यजमानः शोभनं स्तुतिरूपमेव वाक्यं सर्वदा शृणोति न तु पापं श्लोकं निन्दावचनं शृणोतीति तत्र भाष्यम् । अत्र पर्णमयीपदस्य जुहूपदस्य च सामीप्यम् । तेन च पर्णवृक्षसंबन्धिकाष्ठस्य जुह्वाकारप्राप्तिसामर्थ्यं बोध्यते । तादृशसामर्थ्येन च पर्ण-

न चानर्थक्यम्। जुहूशब्देनापूर्वलक्षणात्। तदयं वाक्यार्थः—पर्णतया अवत्तहविर्धारणद्वारा यदपूर्वसाधनं तद्भावयेदिति। एवं च पर्णतया यदि जुहूः क्रियते तदैव तत्साध्यमपूर्वं भवति नान्यथेति गम्यते इति न पर्णताया वैयर्थ्यम्। अवत्तहविर्धारणद्वारेति चावश्यं वक्तव्यम्। अन्यथा स्रुवादिष्वपि पर्णतापत्तेः। सा चेयं पर्णताऽनारभ्याधीता न सर्वक्रतुषु गच्छति। विकृतिषु चोदकेनापि प्राप्तिसंभवेन द्विरुक्तत्वापत्तेः। किंतु प्रकृतिषु। तदुक्तम्—'प्रकृतौ वाऽद्विरुक्तत्वात्' (जै. ३।६।४) इति।

---

काष्ठेन जुहूं भावयेदिति द्वितीयाश्रुतिः कल्प्यते। तया च पर्णताया जुहूङ्गत्वं बोध्यते। पर्णकाष्ठस्य जुहूनिर्माणे विनियोगः कार्य इति यावत्।

न चानर्थक्यमिति। काष्ठान्तरेणापि जुह्वाः सिद्धत्वात्पलाशकाष्ठेनैव जुहूनिर्माणे विशेषादर्शनात्पर्णताया जुह्वङ्गत्वविधानं व्यर्थं स्यादिति न वाच्यमित्यर्थः। तत्र हेतुमाह-जुहूशब्देनेति। तथा च पलाशकाष्ठेन जुहूं कुर्यादिति न वाक्यार्थः। किंतु पलाशकाष्ठेन जुहूपूर्वं भावयेदिति। काष्ठान्तरेण जुहूनिर्माणे तया हविःप्रक्षेपेऽपि नापूर्वोत्पत्तिः। एतच्चात्र पर्णताया जुह्वङ्गत्वविधानस्यान्यथानुपपत्त्या कल्प्यते। अवत्तेति। अवद्यत इत्यवत्तं खण्डशो गृहीतम्। अवेत्युपसर्गपूर्वाद्दो अवखण्डने इत्यस्माद्धातोः कर्मणि क्तप्रत्ययः। तादृशं यद्धविस्तस्य जुह्वा यद्धारणं तद्द्वारा पर्णतयाऽपूर्वं भावयेदित्यर्थः। अन्यथेति। यद्यपि स्रुवादिभिरप्याज्यधारणं क्रियते तथापि पात्रान्तरादिभ्यः सकाशादवदीयमानं हविर्यथा जुह्वा धार्यते न तथा स्रुवादिभिरिति भावः। अत्र च प्रसङ्गादनारभ्याधीतानां क्व संनिवेशस्तन्निरूपयति—'सा चेयम्' इत्यादिना 'आस्तां तावत्' (पृ. १२१-प. ८) इत्यन्तेन। यस्य पर्णमयी जुहूर्भवति इति वाक्यं न प्रकृतिभूतदर्शपूर्णमासप्रकरणे पठ्यते। न वा तद्विकृतिभूतस्य कस्यचिद्यागविशेषस्य प्रकरणे। अतश्चैतद्वाक्यं पूर्वं किंचित्प्रकृत्य न पठितमित्यनारभ्याधीतमित्युच्यते। तेन च प्रतिपादिता पर्णता प्रकृतिभूते दर्शपूर्णमासे याग एव संबध्यते। यद्यपि पर्णताबोधकस्यैतद्वाक्यस्य विकृतावपि प्रवृत्तौ न किंचिद्बाधकं दृश्यते तथापि प्रवृत्तेः पूर्वमेव तत्र प्रकृतिवद्विकृतिरित्यतिदेशेन तत्र पर्णतायाः सिद्धत्वात्पुनरुक्तिप्रसङ्गान्न संबन्धः। चर्वितचर्वणस्यान्याय्यत्वात्। प्रकृतौ वेति। अद्विरुक्तत्वादिति पदच्छेदः। वाशब्द एवार्थे। अनारभ्याधीतानां प्रकृतावेव प्रवृत्तिः। तत्र पुनरुक्तत्वाभावात्। द्विरुक्तत्वादिति पदच्छेदे विकृतावित्यध्याहृत्य विकृतौ पुनरुक्तत्वान्न तत्र प्रवृत्तिः किंतु प्रकृतावेवेत्यर्थो बोध्यः।

अत्र विकृतिर्यतोऽङ्गानि गृह्णाति सा प्रकृतिरिति न प्रकृतिशब्देन विवक्षितम्। गृहमेधीये पर्णताया अप्राप्तिप्रसङ्गात्। न हि गृहमेधीयात्काचन विकृतिरङ्गानि गृह्णाति। मानाभावात्। किंतु चोदकाद्यत्राङ्गप्राप्तिस्तत्कर्म प्रकृतिशब्देन विवक्षितम्। यथा दर्शपूर्णमासौ। तत्र हि न चोदकादङ्गप्राप्तिः।

---

अत्र विकृतिरिति। प्रकृतौ वेतिसूत्रे प्रकृतिशब्देन कीदृशं कर्म ग्राह्यमिति विचार्यते। कर्म च चतुर्विधं दृश्यते। केवलप्रकृतिरूपं केवलविकृतिरूपमुभयरूपमनुभयरूपं चेति। आद्यं यथा दर्शपूर्णमासादि। तत्रोपदिष्टानां केषांचिदङ्गानां कर्मान्तरे सौर्ययागादावतिदेशेन गृह्यमाणत्वात्तस्य प्रकृतित्वम्। अन्यत्र च कर्मान्तर उपदिष्टस्य कस्याप्यनिर्देशेन तत्राग्रहमाणत्वात्तस्य न विकृतित्वमिति तस्य केवलप्रकृतित्वम्। केवलविकृतिरूपं तु विश्वसृजामयनादि। तत्र ह्यन्यतोऽङ्गानि प्राप्यन्ते इति तस्य विकृतित्वम्। कर्मान्तरे तु ततः किंचिदप्यङ्गं न गृह्यत इति न तस्य प्रकृतित्वमिति केवलविकृतित्वम्। उभयरूपं तु अग्नीषोमीयपश्वादिकम्। सवनीयपश्वादौ ततोऽङ्गग्रहणात्तस्य प्रकृतित्वम्। दर्शपूर्णमासतश्च तत्राङ्गग्रहणात्तस्य विकृतित्वमित्युभयरूपत्वम्। अनुभयरूपं तु गृहमेधीयादिकम्। तत्र हि नान्यतः किंचिदङ्गं गृह्यते नाप्यन्यत्र ततः किंचिद्गृह्यते इत्यनुभयरूपत्वम्। एषु च चतुर्विधेष्वपि कर्मस्वनारभ्याधीतानां प्राप्तिरविशिष्टा। सा च प्रकृतौ वाद्विरुक्तत्वादितिसूत्रेण प्रकृतावेवेति नियम्यते। तत्र चाद्विरुक्तत्वादिति हेतुः प्रदर्शितः। अन्यत्र प्रवृत्त्यङ्गीकारे द्विरुक्तिदोषः स्यादतः सूत्रकारैः प्रकृतावेवेति नियमं कृत्वा स दोषः परिहृतः। तथा चाद्विरुक्तत्वादिति हेत्वनुसारेणोक्तचतुर्विधकर्ममध्ये यस्मिन्कर्मण्यनारभ्याधीतानां प्रवृत्त्यङ्गीकारे द्विरुक्तिदोषो न स्यात्तादृशं कर्म तत्र सूत्रे प्रकृतिशब्देन ग्राह्यमिति सूत्रकाराशयः प्रतिभाति। द्विरुक्तिदोषस्तु प्राप्तस्य पुनर्विधानाद्भवति। द्विरुक्तिदोषः स्यात्प्राप्तस्य च पुनर्विधेः (शास्त्रदी० ३।६ अधि० १) इत्युक्तत्वात्। स चायं दोषः केवलविकृतिरूपे प्रकृतिविकृत्युभयरूपे च कर्मण्यनारभ्याधीतानां प्रवृत्त्यङ्गीकारे स्यादतस्तदितरत्प्रथमं केवलप्रकृतिरूपं तथा चतुर्थमनुभयरूपं चेति द्विविधं कर्मात्र प्रकृतिशब्देन सूत्रकारैरभिलक्षितमिति गम्यते। द्विविधे च तस्मिन्कर्मणि चोदकादङ्गप्राप्तिः समाना। चोदकोऽतिदेशः। एवं च सूत्रे प्रकृतिशब्दो विकृतित्वाभावविशिष्टकर्मोपलक्षकः। तेन पूर्वोक्तचतुर्विधकर्ममध्ये तृतीयस्योभयरूपस्य कर्मणः सूत्रगतप्रकृतिशब्देनासंग्रहश्चतुर्थस्यानुभयरूपस्य कर्मणः संग्रहश्च सिध्यतीति बोध्यम्। गृहमेधीय इति। चातुर्मास्ये साकमेधपर्वणि मरुद्भ्यो गृहमेधिभ्यः सर्वासां दुग्धे सायमोदनं निर्वपेत् इत्येवं

प्रकरणपठितैरेवाङ्गैर्नैराकाङ्क्षयात् । गृहमेधीयादिष्वपि न चोदकादङ्गप्राप्तिः । क्लृप्तोपकारैरेव आज्यभागादिभिर्नैराकाङ्क्षयात् । अतो यत्र चोदकाप्रवृत्तिस्तत्रानारभ्याधीतानां संनिवेशः ।

साप्तदश्यं त्वनारभ्याधीतमपि न प्रकृतौ गच्छति । प्रकृतेः पाञ्चदश्या-

---

गृहमेधीयेष्टिर्विधीयते । तत्र चाज्यभागौ यजतीति श्रूयते । दर्शपूर्णमासगतयोराज्यभागयोरत्रातिदेशेन प्राप्तौ सत्यां पुनरत्राज्यभागौ यजतीति यदुक्तं तद्यर्थं सद्गृहमेधीयस्यापूर्वत्वं ज्ञापयति । ज्ञापिते चापूर्वत्वे दर्शपूर्णमासविकृतित्वाभावाच्च चोदकेनाज्यभागप्राप्तिरतस्तद्वचनं सार्थकम् । तथा च दर्शपूर्णमासगतानामाज्यभागव्यतिरिक्तानामत्रानुक्तानामङ्गानामननुष्ठानं फलम् । इतिकर्तव्यताकाङ्क्षा त्वत्र प्रत्यक्षं यावदुक्तं तावतैव पूरणीया । अत्र चाज्यभागौ यजतीत्यस्य सार्थक्यायाष्टौ पक्षाः समुद्भवन्ति । तेषु चायमष्टमः पक्षो गृहमेधीयस्यापूर्वत्वप्रकल्पनरूपः सिद्धान्तितः । अवशिष्टाः सप्त पक्षास्तद्दोषाश्च जैमिनीयन्यायमालायामुक्ताः ( अध्या. १० पा. ७ अधि. ९ ) तत एव द्रष्टव्याः ।

ननु यथानारभ्याधीता पर्णता प्रकृतिभूते दर्शपूर्णमासादियागे संबध्यते तथा सप्तदश सामिधेनीरनुब्रूयात् इत्यनारभ्याधीतं सामिधेनीनां सप्तदशत्वं प्रकृतिगामि स्यात् । तथा च 'पञ्चदश सामिधेनीरन्वाह' इत्येवं प्रकृतौ यत्सामिधेनीनां पञ्चदशत्वमुच्यते तद्विरुध्यत इति चेत्तत्राह—साप्तदश्यं त्विति । अयं भावः । समिदाधानकाले उच्चार्यमाणा ऋचः सामिधेनीशब्देनोच्यन्ते । समिधामाधाने षेण्यण् ( पा. सू. ४।१।१२० वा. १० ) इत्यनेन समिच्छब्दात्षेण्यण्प्रत्ययः । अग्निसमिन्धनप्रकाशिका ऋचः सामिधेन्य इति यावत् । तादृशा ऋचः सूक्ते यद्यप्येकादश पठ्यन्ते तथापि तत्र 'त्रिः प्रथमामन्वाह त्रिरुत्तमाम्' इति वचनेनाद्याया अन्त्यायाश्च त्रिवारमभ्यासे पञ्चदशत्वं संपद्यते । अतः पञ्चदश सामिधेनीरन्वाहेत्युपपद्यते । यत्र च सामिधेनीनां सप्तदशत्वं संपादनीयं भवति तत्र दाशतय्यामग्निसमिन्धनप्रकाशिका ऋचोऽन्विष्य तादृशमृग्द्वयमधिकं तत्र प्रवेशनीयम् । अत एवोक्तमधिकानां च दर्शनात् ( जै. सू. १०।५।३१ ) इति सूत्रे सुबोधिनीकारैरग्नीषोमीयपशौ सप्तदशसामिधेनीके पृथुपाजाः, तं स बाध इति ऋचोरधिकयोर्दर्शनात् इति । एकविंशतिमनुब्रूयादित्यत्र सामिधेनीनामेकविंशतित्वमप्युक्तरीत्यैवोपपादनीयम् । न चतुर्वारं ततोऽधिकं वाद्यान्त्ययोरभ्यासेन । तदुक्तं जैमिनिना यावदुक्तं वा कृतपरिमाणत्वात् ( जै. सू. १०।५।३० ) इति । शास्त्रे यावदुक्तं तावदेवाभ्यसितव्यम् । कृतपरिमाण-

वरोधात्। किंतु विकृतिषु गच्छति। तत्रापि न सर्वासु गच्छति। चोदकप्राप्तपाञ्चदश्यबाधप्रसङ्गात्। किंतु प्रत्यक्षश्रुतसाप्तदश्यासु मित्रविन्दादिषु गच्छति। यथाहुः—

---

त्वात्। त्रिः प्रथमां त्रिरुत्तमामित्यनेनाभ्यासस्य नियतपरिमाणत्वादिति तदर्थः। एवं सामिधेनीसंख्योपपत्तिरभिहिता। अस्याश्च सामिधेनीसप्तदशसंख्याया अनारभ्याधीतत्वात्पर्णताया इव प्रकृतौ संबन्धो वक्तव्यः। स च न संभवति। प्रकृतौ पञ्चदश सामिधेनीरन्वाहेत्येवं सामिधेनीनां पञ्चदशत्वसंख्याया उक्तत्वात्तेन तत्र संख्यान्तरप्रवेशद्वारस्य पिहितत्वात्। नन्वनारभ्याधीतस्य विकृतौ द्विरुक्तिदोषप्रसक्तभिया न प्रवेश इति पूर्वमुक्तम्। यदि च द्वारावरोधेन प्रकृतौ साप्तदश्यस्य न प्रवेशस्तर्हि चोदकेन तस्य विकृतौ प्राप्तेर्दुर्वचत्वेन द्विरुक्तिदोषाप्रसङ्गाद्विकृतौ साप्तदश्यप्रवेशः स्यादिति चेन्न। चोदकेन पाञ्चदश्यस्य विकृतौ प्रवृत्तत्वेन प्रकृताविव विकृतावपि द्वारनिरोधेन साप्तदश्यप्रवेशस्याशक्यत्वात्। नन्वेवमनारभ्याधीतस्य साप्तदश्यस्य प्रकृतौ विकृतौ चेत्युभयत्रापि प्रवेशाभावे वैयर्थ्यं स्यादिति चेन्न। यत्र विकृतिविशेषेऽतिदेशेन पाञ्चदश्यस्याप्राप्तिस्तत्र साप्तदश्यस्य चारितार्थ्यसंभवात्। तत्र ह्यतिदेशो न प्रवर्तते यत्रातिदिश्यमानधर्मविरुद्धो धर्मः प्रत्यक्षत उपदिश्यते। मित्रविन्दादौ विकृतिविशेषे सामिधेनीनां साप्तदश्यं प्रत्यक्षत उच्यत इति न तत्रातिदेशेन पाञ्चदश्यस्य प्रवृत्तिः। ननु किं कृतमेतावता। अनारभ्याधीतस्य साप्तदश्यस्य वैयर्थ्यं यन्मयापादितं तद्द्वारायैतद्भवतोच्यते। तत्तु वैयर्थ्यं तदवस्थमेव। यद्यपि मित्रविन्दादौ पाञ्चदश्यातिदेशाभावादनारभ्याधीतस्य साप्तदश्यस्य प्रवृत्तिः सुवचा तथापि तत्र तत्प्रवृत्तौ फलाभावः। तत्र प्रत्यक्षतः साप्तदश्योक्त्या सिद्धेरिति चेन्न। मित्रविन्दादौ हि पाञ्चदश्यं निवर्तनीयं साप्तदश्यं च विधेयमिति द्वयं करणीयम्। तत्र मित्रविन्दादौ साप्तदश्योक्त्या प्रथमं साधितमनारभ्याधीतेन साप्तदश्येन च द्वितीयं साधितम्। यद्यपि मित्रविन्दादौ साप्तदश्योक्त्यैवैतत्कार्यद्वयं सिध्येत्तथापि तदुक्तेरतिभारः स्यात्। स च सत्यां गतावयुक्तः। तदुक्तं पातञ्जलभाष्ये नासूया कर्तव्या यत्रानुगमः क्रियते ( पा. भा. ५।१।५९ ) इति। एवं चानारभ्याधीतं साप्तदश्यं यत्सामान्येनोक्तं तदेव मित्रविन्दादिस्थलविशेषे पुनस्तदुक्त्या तत्रैव नियन्त्रितं भवतीति तात्पर्यम्। चोदकप्राप्तेति। अतिदेशप्राप्तेन पाञ्चदश्येन साप्तदश्यस्य बाधादित्यर्थः। प्रकृतौ पठितस्य पाञ्चदश्यस्य चोदकबलाद्विकृतौ प्रवृत्तिर्जायते। अनारभ्याधीतस्य साप्तदश्यस्य तु विकृतौ सामिधेनीदर्शनेन योग्यतया कल्पनीयेति मन्थरं प्रवृत्तिः।

एवं च प्रकृतावेतत्पाञ्चदश्यं प्रतिष्ठितम् ।
विकृतौ च न यत्रास्ति साप्तदश्यपुनःश्रुतिः ॥
(त. वा. ३।६।९) इति ।

न च वाक्यवैयर्थ्यम् । अनारभ्याधीतस्यैव साप्तदश्यस्य मित्रविन्दादिप्रकरणस्थेन वाक्येनोपसंहारात् । उपसंहारो नाम सामान्यप्राप्तस्य विशेषे नियमनम् । यथाहुः—

सामान्यविधिरस्पष्टः संह्रियेत विशेषतः (त. वा. ३।४।४७) इति । तत्रानारभ्य विधिः सामान्यविधिः । मित्रविन्दादिप्रकरणस्थस्तु विशेषविधिरित्यास्तां तावत् । प्रकृतमनुसरामः । तत्सिद्धं वाक्यादङ्गत्वम् ।

तदिदं वाक्यं प्रकरणाद्बलीयः । प्रकरणं हि न साक्षाद्विनियोजकम् । तद्ध्याकाङ्क्षारूपम् । न चाकाङ्क्षा स्वयं प्रमाणम् । किंतु साकाङ्क्षं वाक्यं दृष्ट्वा भवत्येतादृशी मतिः—नूनमिदं वाक्यं केनचिद्वाक्येनैकवाक्यभूतमिति । तत्श्चाकाङ्क्षारूपं प्रकरणं वाक्यस्य वाक्यान्तरैकवाक्यत्वे प्रमाणम् । एवं च यावत्प्रकरणं वाक्यं कल्पयित्वा विनियोजकं भवति तावद्वाक्यं लिङ्गश्रुती कल्पयित्वा विनियोजकं भवतीति प्रकरणाद्वाक्यं बलीयः ।

---

अतः पाञ्चदश्येन साप्तदश्यस्य बाधः । चोदकप्राप्तेतिविशेषणेन बाधबीजं सूचितं भवति । एवं च प्रकृताविति । यदेतत्पाञ्चदश्यं प्रकृतावुक्तं तत्प्रकृतौ तथा यत्र विकृतौ साप्तदश्यपुनःश्रुतिर्नास्ति तत्र विकृतौ च प्रतिष्ठितं भवतीत्यर्थः ।

प्रासङ्गिकं परिसमाप्येदानीं वाक्यप्रमाणस्य प्रकरणाद्यपेक्षया बलीयस्त्वं प्रदर्शयति-तदिदं वाक्यमिति । प्रकरणापेक्षया वाक्यप्रमाणस्य प्राबल्ये सिद्धे प्रकरणापेक्षया दुर्बलात्स्थानप्रमाणात्तदपेक्षया दुर्बलात्समाख्याप्रमाणाच्च वाक्यप्रमाणस्य प्राबल्यमर्थादेव सिद्धं भवति । बलीयस्त्वप्रकारः प्रागुक्तः (पृ. ८३ प. १७) । स्वयमिति । साक्षादित्यर्थः । नूनमिदमिति । दूरस्थितयोर्मिथः साकाङ्क्षयोर्द्वयोर्वाक्ययोर्यद्यपि वस्तुतः सामीप्यं न दृश्यते तथाप्याकाङ्क्षावशादन्ततः सामीप्यमाकलय्य तयोरेकवाक्यता प्रकल्प्यत इति भावः । एकवाक्यत्वे प्रमाणमिति । एतावदेव प्रकरणेन कर्तुं शक्यम् । न तु तेन साक्षात्कस्यचित्कचिद्विनियोगः कर्तुं शक्यते । तादृशस्थले विनियोगस्तु परंपरया वाक्यलिङ्गश्रुतिकल्पनद्वारा जायते । तदाह-एवं चेति । प्रकरण-

अत एवैन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महो ज्यायोऽक्राताम् ( तै. ब्रा. ३।५।१०।३ ) इत्यत्रैन्द्राग्नीपदस्य लिङ्गाद्दर्शाङ्गत्वे सिद्धे इदं हविरित्यादेरपि तदेकवाक्यत्वाद्दर्शाङ्गत्वम् । न तु प्रकरणाद्दर्शपूर्णमासाङ्गत्वम् । प्रकरणाद्वाक्यस्य बलीयस्त्वादिति ।

---

मिति प्रथमान्तं कर्तृपदम् । वाक्यमिति लिङ्गश्रुत्योरप्युपलक्षणम् । वाक्यं लिङ्गं श्रुतिं चेति त्रयं कल्पयित्वा यावत्प्रकरणं विनियोजकं भवतीत्यर्थः । अत एवैन्द्राग्नी इति । तैत्तिरीयब्राह्मणे श्रूयते । इन्द्राग्नी इदं हविरजुषेताम् अवीवृधेतां महोज्यायोक्राताम् ( तै. ब्रा. ३।५।१० ) इति । अत्रेन्द्राग्निदेवतयोः संबन्धो दर्श एव न पौर्णमास्यां विहित इत्यत इन्द्राग्नी इति पदं दर्श एव प्रयुज्यते । तदेकवाक्यतया तदवशिष्टभाग इदं हविरित्यादिरपि दर्श एव प्रयुज्यते न तु पौर्णमास्यामित्यर्थः । अयं भावः । इदं दर्शपूर्णमासप्रकरणे पठ्यते । प्रकरणपठितस्य च मन्त्रस्य प्राकरणिके कर्मणि परस्पराकाङ्क्षावशाद्यो विनियोगो भवति स प्रकरणप्रमाणबलादेव । प्रकृते च प्रकरणप्रमाणेनेन्द्राग्नी इति मन्त्रस्य दर्शपूर्णमासकर्मणि विनियोगः प्राप्तः । परंतु पौर्णमास्यामिन्द्राग्नी न देवते । अतस्तत्र कर्मणीन्द्राग्नी इति मन्त्रप्रयोगे कृते तत्कर्मणीन्द्राग्न्योः संबन्धाभावेन मन्त्रपठितस्येन्द्राग्नी इति पदस्यार्थप्रकाशनरूपं सामर्थ्यं विहतं भवेत् । तथा च प्रकरणप्रमाणबलात्प्राप्तोपीन्द्राग्नी इति मन्त्रस्य तत्र विनियोगो न भवति । प्रकरणापेक्षया लिङ्गप्रमाणस्य बलीयस्त्वात् । ननु प्रकरणेनेन्द्राग्नी इदं हविरजुषेतामवीवृधेतां महोज्यायोक्रातामित्येतस्य सर्वस्य मन्त्रस्य विनियोगः प्राप्तः । लिङ्गप्रमाणं त्विन्द्राग्नी इत्येतावत्पदमात्रांशं विरुध्यते । तथा च तत्रेन्द्राग्नी इति पदमपनीयावशिष्टस्येदं हविरित्यादेर्मन्त्रभागस्य प्रकरणप्रमाणेन विनियोगः स्यादेवेति चेन्न । इदं हविरित्यादेर्मन्त्रभागस्येन्द्राग्नी इतिपदसमभिव्याहारो वर्तते । समभिव्याहार एव च वाक्यं प्रमाणम् । तेन प्रमाणेन च तस्येदं हविरित्यादिभागस्येन्द्राग्नी इति पदेन सहैकवाक्यतयेन्द्राग्निदेवतासंबद्धार्थप्रकाशकत्वरूपं सामर्थ्यं कल्प्यते । तथा चेन्द्राग्नी इतिपदरहितस्य तस्य मन्त्रभागस्य प्रयोगेपि पौर्णमास्यामिन्द्राग्निदेवतयोरसंबन्धेन वाक्यप्रमाणसिद्धैकवाक्यता विरुद्ध्यत एव । वाक्यप्रमाणं च लिङ्गप्रमाणमिव प्रकरणापेक्षया बलीय एव । तथा चात्र यथा लिङ्गप्रमाणेनेन्द्राग्नी इति पदमपनीयते तथा वाक्यप्रमाणेनेदं हविरित्यादिः शेषभागोप्यपनीयत इति नात्र प्रकरणप्रमाणस्यावकाशः । बलीयसा वाक्यप्रमाणेन प्रकरणप्रमाणस्य बाधात् । यतो वाक्ये पदानां संबन्धः प्रत्यक्षसिद्धः । प्रकरणे त्वाकाङ्क्षावशात्संबन्धः कल्पनीयः । तथा च वाक्येन प्रथममेवाभिधानसामर्थ्यं कल्प्यते । ततस्तेन

उभयाकाङ्क्षा प्रकरणम्। यथा प्रयाजादिषु। समिधो यजतीत्यत्र हि इष्टविशेषस्यानिर्देशात्समिद्यागेन भावयेत् किमित्यस्त्युपकार्याकाङ्क्षा। दर्शपूर्णमासवाक्येऽपि दर्शपूर्णमासाभ्यां स्वर्गं भावयेत्कथमित्यस्त्युपकारकाकाङ्क्षा। अत उभयकाङ्क्षया प्रयाजादीनां दर्शपूर्णमासाङ्गत्वं सिध्यति।

ननु यदि प्रयाजादिवाक्ये इष्टविशेषो न श्रूयते तर्हि विश्वजिन्न्यायेन

---

श्रुतिः कल्प्यते। तयात्र विनियोग इति तृतीयः क्षणो विनियोगस्य। प्रकरणेन तु प्रथमं वाक्ययोः संबन्धः कल्प्यते। तेन च सामर्थ्यं कल्प्यते। तेन श्रुतिः कल्प्यते। तया च तत्र विनियोग इति तत्र विनियोगक्षणश्चतुर्थः। तथा च वाक्यप्रकरणयोर्द्वयोः प्रमाणयोरेकत्र संनिपाते तृतीयक्षण एव वाक्यप्रमाणेन विनियोगात्तत्र चतुर्थक्षणे विनियोजकस्य प्रकरणप्रमाणस्य तत्र विनियोजकश्रुतिकल्पनपर्यन्तमनुधावनं न भवतीत्यर्थः।

एवं वाक्यप्रमाणं सप्रपञ्चं निरूप्याधुना क्रमप्राप्तं प्रकरणप्रमाणं निरूपयति—उभयाकाङ्क्षा प्रकरणमित्यादिना स्थानाद्बलीयस्त्वमिति इत्यन्तेन। उभयोराकाङ्क्षोभयाकाङ्क्षा। उभयोरिति कर्मणि षष्ठी। आकाङ्क्षायाः कर्ता चात्र न कश्चिदन्योऽनुपस्थितः प्रकल्पनीयः। किंतु तावुभावेव। उपस्थितत्वात्। अथवोभयोरिति कर्तरि षष्ठी। आकाङ्क्षायाः कर्म चात्र न किंचिदन्यदनुपस्थितं प्रकल्पनीयम्। किंतु तावुभावेव। उपस्थितत्वात्। तथा च पक्षद्वयेऽपि द्वयोः कयोश्चित्पदार्थयोः परस्परं परस्परस्य या आकाङ्क्षा सा प्रकरणशब्देनोच्यते इति फलति। अन्यतराकाङ्क्षापेक्षया चोभयाकाङ्क्षया जायमानो योगो द्रढीयान् भवति। यथान्धस्य व्यवहारसिद्ध्यर्थमवश्यं चक्षुष्मत्पुरुषापेक्षा। चक्षुष्मतस्तु नान्धापेक्षा। तत्र च तयोः संयोगेनान्धस्य व्यवहारसिद्धिर्भवति। किंतु स तयोर्योगो न द्रढीयान् भवति। यद्यप्यन्धोऽनन्यगतिकः कदापि न चक्षुष्मन्तं जिहासति तथापि चक्षुष्मतस्तज्जिहासा संभवत्येव। तादृशस्थले च यदि स चक्षुष्मान्पुरुषः पङ्गुः स्यात्तदा तयोः पङ्ग्वन्धयोर्जायमानो योगश्चिरस्थायी स्यात्। उभयोरप्यनन्यगतिकत्वेनान्योन्यसापेक्षत्वाज्जिहासायाः क्वाप्यसंभवात्। अनिर्देशादिति। स्वर्गकाम आयुष्काम इत्येवमधिकारिविशेषणद्वारा कस्यापि फलस्यानिर्देशादित्यर्थः। तैत्तिरीयसंहितायां द्वितीयेऽष्टके षष्ठे प्रपाठके प्रथमानुवाके समिधो यजति (तै.सं. २।६।१) इत्येवं पञ्च प्रयाजा विहिताः। ते च पूर्वं (पृ.१०१प.१९) प्रदर्शिताः। उभयाकाङ्क्षयेति। एवं चाङ्गप्रधानयोरुभयोरपि परस्पराकाङ्क्षया

स्वर्गः फलं कल्प्यताम् । विश्वजिदधिकरणे ( जै. सू. ३।५।७ ) हि विश्व-
जिता यजेतेत्यत्र फलस्याश्रवणात्, फलमन्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये सर्वाभिलषितत्वेन स्वर्गः फलमित्युक्तम् । तदुक्तम् —

'स स्वर्गः स्यात्सर्वान्प्रत्यविशिष्टत्वात्' (जै. सू. ४।३।१५) इति ।

---

यः संबन्धो जायते स प्रकरणप्रमाणेन जायत इति भावः । विश्वजिदधिकरण इति । चतुर्थाध्याये तृतीयपादे सप्तममधिकरणमेतत् । स स्वर्ग इति । देशात्मकस्वर्गवारणाय स इति । तथा चात्र स्वर्गशब्देन सुखविशेष उच्यते ।

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥

इत्येवं लक्षितः सुखविशेषः सर्वेषामभिमतः ।

स्वर्गोऽनतिशयप्रीतिरूपो दुःखविवर्जितः ।
भूयांसोभिलषन्त्येनमल्पे त्वल्पसुखं नराः ॥

इत्युक्तरीत्या सर्वसाधारण्येनाभिलषितं यत्सुखं तदेव कल्पनीयं भवति । तथाहि सति शास्त्रस्य भूयोविषयत्वमुपपद्यते । अविशेषप्रवृत्तस्य शास्त्रस्य संकुचितविषयत्वप्रकल्पनं त्वन्याय्यम् । पश्वादिफलकल्पनायां तु ये पशुमिच्छन्ति तावन्मात्रविषयत्वं विश्वजितेत्यादिशास्त्रस्य स्यादिति संकुचितविषयत्वं स्पष्टमेव । पश्वादिसुखं दुःखानुषक्तमल्पं चेति कश्चिदेव प्रार्थयन्ते । यद्यपि प्रत्यवायपरिहारः सर्वैरभिलष्यते तथापि स प्रत्यवायसापेक्षत्वात् कियतापि विलम्बेन बुद्धिमारोहतीति तदपेक्षया शीघ्रोपस्थितिकत्वादुक्तरूपः स्वर्ग एव कल्पनीयो भवतीति भावः । ननु यत्र फलं नावगम्यते तत्र विश्वजिन्न्यायेनोक्तरीत्या स्वर्गफलकल्पना भवति । फलावगतिश्च विधाचतुष्टयेन जायते । क्वचिद्विधिवाक्य एव फलं श्रूयते । यथा यजेत स्वर्गकाम इति । क्वचिदर्थवादवाक्यादवगम्यते । यथा रात्रिसत्रविधौ प्रतितिष्ठन्ति ह वै इत्याद्यर्थवादवाक्यात्प्रतिष्ठारूपं फलमवगम्यते । एतच्चानुपदमेव स्फुटीभविष्यति । क्वचिदानुषङ्गिकम् । यथा आरोग्यकामः सौरेण यजेत इत्यनन्तरं निर्दिष्टस्याश्विनो यजेत इत्यश्वियागस्य पूर्वनिर्दिष्टारोग्यफलानुषङ्गः । यद्यप्येतदारोग्यफलं विध्यन्तरस्थं तथापि प्रकृतत्वाद् बुद्धिस्थं स्वातन्त्र्येण कल्पनीयात्स्वर्गादिफलात्संनिकृष्यते । क्वचिच्च लिङ्गस्यम् । यथैन्द्रं यजेत इत्यैन्द्रयागे इन्द्रो देवः सहस्राक्ष ऐन्द्रदस्तस्मै जुहोमि इति मन्त्रः श्रूयते । तत्रैन्दद इत्युक्तत्वादैन्द्रपदप्रदानसामर्थ्यमिन्द्रस्यावगम्यत इत्यैन्द्रयागस्यैन्द्रपदप्राप्तिः फलम् । मन्त्रादर्थस्मृतौ सत्यां सद्य एवैतत्फलं बुद्धिमारोहतीत्यत एतदपि स्वातन्त्र्येण

रात्रिसत्रन्यायेन ( जै. सू. ४।३।१७ ) वार्थवादिकं फलं कल्प्यताम्। रात्रिसत्राधिकरणे हि प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्तीत्यत्र विध्युद्देशे फलाश्रवणात्फलमन्तरेण च विधिश्रुतेरनुपपत्तेरवश्यं फले कल्पयितव्ये आर्थवादिकं प्रतिष्ठाख्यं फलमित्युक्तम्। विश्वजिदधिकरणन्यायेनानुपस्थितस्वर्गकल्पने तस्य प्रकृतसंबन्धकल्पने गौरवादर्थवादोपस्थितस्यैव प्रकृतफलत्वकल्पने लाघवात्। तदुक्तम्—

---

कल्पनीयात्स्वर्गादिफलात्संनिकृष्यते। एषु चतुर्विधेषु फलेषु पूर्वाभावे परमितिक्रमो युक्तिसिद्ध एव। तथा च प्रकृते यत्प्रयाजा इज्यन्ते वर्मैव तद्यज्ञस्य क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै ( तै. सं. २।६।१।५ ) इत्येवमार्थवादिकफलमत्र दृश्यते। पुरा देवैरारब्धे यज्ञे असुरा यज्ञविघाताय प्राप्ताः। तदानीं यज्ञसंरक्षणाय देवा अष्टाक्षरे गायत्रीपादे व्यूहद्वयं कृतवन्तः। तत्राक्षरपञ्चकस्य व्यूहो यज्ञानुष्ठानात्प्राचीनो रक्षकः। अक्षरत्रयव्यूहः प्रतीचीनो रक्षकः। ततो व्यूहद्वयं यज्ञस्य कवचमाच्छादनायाभवत्। तथा यजमानस्यापि। अतः पञ्चाक्षररूपत्वेन पञ्च प्रयाजाः पूर्वमिज्यन्ते। त्र्यक्षररूपत्वेन त्रयोऽनूयाजाः पश्चादिज्यन्ते। तदुभयं कवचं यज्ञयजमानयोरुभयतो रक्षणम्। तेन रक्षणेन भ्रातृव्यस्याभिभूतिर्भवति। भ्रातृव्यः शत्रुः। अभिभूतिः शत्रुकृतपीडाया अभावः। तथा चात्र यज्ञविध्वंसकशत्रुपराभवद्वारा यज्ञयजमानसंरक्षणरूपस्यार्थवादिकफलस्य सद्भावान्नात्र विश्वजिन्न्यायावतारो युक्त इत्याशयेनाह—<u>रात्रिसत्रन्यायेनेति</u>। चतुर्थाध्याये तृतीयपादेऽष्टमाधिकरण इदं विचारितम्। तथाहि सत्रकाण्डे श्रूयते 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इति। द्वादशाहादूर्ध्वंभाविनस्त्रयोदशरात्रचतुर्दशरात्रादयः सर्वे सत्रविशेषाः। त्रयोदशसंख्याका रात्रयो यस्मिन्सत्रविशेषे सोऽयं त्रयोदशरात्रः। समुदायप्राधान्येनैकवचनान्तत्वम्। क्वचित्तु समुदायिनां रात्रिविशेषाणां प्रत्येकं प्राधान्यमभ्युपेत्यैक एव सत्रविशेषो बहुवचनान्तेन रात्रिशब्देनाम्नायते। यथा त एता विंशतिरात्रीरपश्यन्निति। अस्य रात्रिसत्रविधेः स्तावकेऽर्थवादवाक्ये प्रतिष्ठा श्रुता। सा चास्मिन्वाक्येऽत्यन्तमश्रुतात्स्वर्गात्प्रत्यासन्ना। तस्मात्प्रतिष्ठाकामो रात्रिसत्रं कुर्यादित्येवं प्रतिष्ठैव फलत्वेन कल्पनीयेति न्यायमालायामुक्तम्। शास्त्रदीपिकायां त्वित्थमुक्तम्—विश्वजिन्न्यायेन स्वर्गाध्याहारे स्वर्गस्य रूपं तस्य श्रुतकर्मसंबन्धः फलत्वं च कल्पनीयम्। प्रतिष्ठायास्तु स्वरूपमेकवाक्यत्वं च क्लृप्तम्। केवलं फलत्वसिद्ध्यर्थं प्रतितिष्ठन्तीत्यस्य सन्नन्ततया विपरिणाममात्रं लघीयः। अतस्तदनुरोधेनोपयन्तीत्यस्य विधिरूपेण परिणाम

'फलमात्रेयो निर्देशादश्रुतौ ह्यनुमानं स्यात्' (जै. सू. ४।३।१८) इति। तस्माद्विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा स्वतन्त्रफलार्थत्वे संभवति किमिति दर्शपूर्णमासाङ्गत्वं स्वीक्रियते इति।

मैवम्। स्वतन्त्रफलार्थत्वेऽन्यतराकाङ्क्षया संबन्धः स्यात्। न ह्यत्र फलस्य साधनाकाङ्क्षास्ति। श्रूयमाणं हि फलं साधनमाकाङ्क्षति। न चात्र तच्छ्रूयते। एवं च फलस्याकाङ्क्षाभावात् केवलं किं भावयेदिति प्रयाजानां भाव्याकाङ्क्षयैव स्वतन्त्रफलार्थत्वं स्यात्। दर्शपूर्णमासार्थत्वे तूभयाकाङ्क्षा

---

उपेयुरिति। यच्छब्दस्य व्यवहितान्वयः। तदयमर्थः। ये प्रतितिष्ठासन्ति त एता रात्रीरुपेयुरिति। प्रतिष्ठा च लोके संमाननीयत्वेन चिरकालजीवित्वम्। फलमात्रेय इति। निर्देशात् निर्देशयोग्यत्वात्। अनुमानमध्याहारः। प्रतिष्ठायाः फलत्वेन निर्देशयोग्यत्वात्प्रतिष्ठैवात्र फलम्। यद्यप्युपयन्तीत्यत्र विधिप्रत्ययो न श्रूयते तथापि तस्याध्याहारः कार्य इत्यात्रेयो मन्यत इति सूत्रार्थः। तस्मादिति। नन्वत्र रात्रिसत्रन्यायेनेत्येव वक्तव्यं न तु विश्वजिन्न्यायस्योल्लेखोऽत्र युक्तः। यथा रात्रिसत्रे गौरवाद्विश्वजिन्न्यायस्याप्रवृत्तिस्तथा प्रकृते प्रयाजविषयेऽपीति चेत्-अत्राहुः। यागकाले यज्ञयजमानयोर्यज्ञविध्वंसकपराभवद्वारा कवचरूपेण संरक्षणमित्येवं फलमार्थवादिकमत्र दृश्यते। प्रारब्धस्य कर्मणो निर्विघ्नपरिसमाप्तिरिति यावत्। निर्विघ्नपरिसमाप्तिविषयिणी कामना च फलान्तरोद्देशेन कस्मिंश्चित्कर्मणि प्रवृत्तस्यानुषङ्गिकी जायते। न तु निर्विघ्नपरिसमाप्तिमात्रकामनया कश्चित्कश्चित्प्रवर्तते। तावन्मात्रलभ्यार्थस्य तत्राप्रवृत्त्यैव सिद्धत्वात्। प्रकृते च शङ्काकारः प्रयाजानां दर्शपूर्णमासाङ्गत्वं न मन्यते। तथाच निर्विघ्नपरिसमाप्तिरत्र कस्य यागस्य भवेत्। प्रयाजदर्शपूर्णमासयोरङ्गाङ्गिभावाभावेऽपि दर्शपूर्णमासस्य निर्विघ्नपरिसमाप्तिकल्पनायां तु विश्वजिन्न्यायापेक्षया न किमपि रात्रिसत्रन्यायाङ्गीकारे लाघवमित्युभयोर्न्याययोरत्र साम्याद्विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वेत्युक्तमिति। स्वतन्त्रेति। प्रयाजादीनां भाव्याकाङ्क्षया दर्शपूर्णमासाङ्गत्वे दर्शपूर्णमासस्यापीतिकर्तव्यताकाङ्क्षया प्रयाजाद्यङ्गित्वे सति दर्शपूर्णमासस्य यत्फलं तदेव तद्द्वारा तदङ्गानां फलं भवति। यदि च विश्वजिन्न्यायेन रात्रिसत्रन्यायेन वा स्वतन्त्रं किंचित्फलं कल्प्यते चेत्तस्य फलस्य पूर्वं फलत्वमेव नास्ति कुतस्तस्य साधनाकाङ्क्षा स्यात्। केवलं प्रयाजानामेव भाव्याकाङ्क्षया तादृशकल्पितफलाङ्गत्वं स्यादिति

प्रमाणम्। प्रयाजानां भाव्याकाङ्क्षाया इतरत्र च कथंभावाकाङ्क्षायाः सत्त्वात्। अन्यतराकाङ्क्षातश्चोभयाकाङ्क्षा बलीयसीति वक्ष्यते। ततश्च दर्शपूर्णमासार्थत्वमेव युक्तं न स्वतन्त्रफलार्थत्वमिति। तदुक्तम्—

'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्'

(जै. सू. ४।३।१) इति।

अत्र द्रव्ये फलश्रुतिर्यस्य पर्णमयी जुहूर्भवति न स पापꣳ श्लोकꣳ शृणोति (तै. सं. ३।५।७) इत्येवमाद्या। संस्कारे फलश्रुतिर्यदङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते (तै. सं. ६।१।१।५) इत्येवमाद्या। कर्मणि फलश्रुतिर्वर्म वा एतद्यज्ञस्य

---

भावः। इतरत्र चेति। दर्शपूर्णमासरूपाङ्गिनि चेत्यर्थः। न स्वतन्त्रेति। ननु यदि प्रयाजादीनां स्वतन्त्रं न किंचित्फलं तर्हि वर्म वै तद्यज्ञस्येत्यादेरर्थवादस्य किं तात्पर्यमितिचेत्प्रशंसार्थं तत्। यद्यपि वर्म वै तद्यज्ञस्येत्याद्यर्थवाद-श्रुत्यनुरोधेन यागकाले यज्ञस्य यजमानस्य च संरक्षणं प्रयाजाद्यङ्गैः कवच-रूपेण संभवति तथापि यथा प्रतिष्ठारूपस्यार्थवादिकफलस्य रात्रिसत्रविधौ फलत्वेन संबन्धः प्रागुक्तः (पृ. १२५ प. १) तथात्र न तस्य फलत्वेन विधि-वाक्ये संबन्धः। तथा च क्वचिदार्थवादिकफलस्य फलत्वेन विधावन्वयः। क्वचिदार्थवादिकफलस्य सतोऽपि तस्य फलत्वेन विधौ नान्वयः। एतादृश-स्थले प्रशंसार्थोऽर्थवाद इत्युच्यते। क्वचित्त्वार्थवादिकफलस्यासंभव एव तत्र प्रशंसामात्रार्थोऽर्थवाद इति भावः। तदेव ध्वनयन्नाह-द्रव्यसंस्कारेति। चतुर्था-ध्याये तृतीयपादे प्रथमाधिकरणे न्यायमालायामित्थमुक्तम्-इदमाम्नायते-यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति (तै.सं.३।५।७।२) यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते (तै. सं. ६।१।१।५) यत्प्रयाजानूयाजा इज्यन्ते वर्म वै तद्यज्ञस्य क्रियते वर्म यजमानाय भ्रातृव्याभिभूत्यै (तै. सं. २।६।१।५) इति। तत्र यज्जुह्वाः प्रकृतिभूतं पर्णद्रव्यं यच्चाञ्जनेन चक्षुषः संस्करणं यच्च प्रयाजानु-याजरूपं वर्म तत्त्रितयं क्रत्वर्थत्वेनैव विधीयते न तु पुरुषार्थत्वेन। यद्यपि पापश्लोकश्रवणराहित्यादिकं फलं पुरुषसंबन्धि भवति तथापि फलत्वबोधक-कामशब्दाद्यभावः साध्यता चात्र न प्रतीयते। न शृणोति वृङ्क्ते वर्म क्रियते इत्येवं वर्तमानकालबोधकशब्दनिर्देशात्। तथा च तेषां क्रत्वर्थत्वं सिद्धम्। निर्देशस्य विपरिणामस्त्वत्र न संभवति। विपरिणामो हि फलाकाङ्क्षया भवति। अत्र तु फलाकाङ्क्षैव न संभवति। क्रत्वर्थानां क्रतुसंभवनमात्र-प्रयोजनत्वेनेतरकार्यकारित्वाभावात्। तस्मात्फलवत्त्वभ्रमहेतुः पापश्लोक-

क्रियते यत्प्रयाजानूयाजा इज्यन्ते ( तै. सं. २।६।१।५ ) इत्याद्या । कर्मपदं चारादुपकारककर्मपरं द्रष्टव्यम् । संस्कारकर्मणः पृथक्संकीर्तनादित्यास्तां तावत् ।

तदिदं प्रकरणं क्रियाया एव विनियोजकम् । न द्रव्यगुणयोः । तयोस्तु क्रियायोगाद्विनियोजकम् । कुत इति चेत् , शृणु । यजेत स्वर्गकाम इत्यत्राख्यातांशेनार्थीभावनाभिधीयते—भावयेदिति । सा चांशत्रयमपेक्षते— किं भावयेत् केन भावयेत्कथं भावयेदिति । तत्र भाव्याकाङ्क्षायां षष्ठ्याद्यन्यायेन स्वर्गो भाव्यतयान्वेति—स्वर्गं भावयेदिति । करणाकाङ्क्षायां समानपदोपात्तो यागो भावार्थाधिकरणन्यायेन ( जै. सू. २।१।१) करणतयान्वेति यागेन स्वर्गं भावयेदिति । ततः कथमिति कथंभावाकाङ्क्षायां यत्संनिधौ पठितमश्रूयमाणफलकं च क्रिया-

---

श्रवणराहित्यादिरर्थवाद इति । सूत्रार्थस्तु द्रव्यं संस्कारः कर्म चेत्येतेषां परार्थत्वात्पुरुषार्थत्वात्तत्र फलश्रुतिरर्थवाद इति । कर्मपदं चेति । कर्मपदेन यद्यारादुपकारकं संनिपत्योपकारकं चेति द्विविधमपि कर्म गृह्यते तर्हि पृथक्संस्कारशब्दो व्यर्थ एव स्यात् । द्रव्यकर्मणोः परार्थत्वादित्येव वक्तव्यं स्यात् । यतश्च जैमिनिराचार्यः पृथक्संस्कारशब्दं निर्दिशति ततस्तत्सार्थक्याय कर्मशब्देनारादुपकारकमेव कर्म गृह्यत इति बोधयतीत्यर्थः ।

क्रियाया एवेति । अयं भावः । कार्यकरणरूपौ द्वावर्थौ मिथः प्रतिद्वन्द्विभूतौ परस्पराकाङ्क्षिणौ लोके प्रसिद्धौ । तत्र यस्मिन्सत्यविलम्बेन कार्योत्पादस्तत्करणम् । तच्च क्रियारूपमेव । सत्यपि हस्तधृते कुठारे उद्यमननिपतनक्रियामन्तरेण द्वैधीभावरूपकार्याजननात् । तदेव करणं प्रकृतशास्त्रे इतिकर्तव्यताशब्देनोच्यते । तथा च साध्यसाधनेतिकर्तव्यतारूपत्रयमध्ये साध्येतिकर्तव्यतारूपमेव द्वयं मिथः साकाङ्क्षम् । न तु साधनेतिकर्तव्यतारूपं साध्यसाधनरूपं वा । तत्र साधनशब्देनोत्पादकस्याग्रहणात् । तस्य च करणत्वं न भावनोत्पादकत्वेन किंतु भावनाभाव्यनिर्वर्तकत्वेनेति प्रागुक्तमेव (पृ. १२ प. ३) । साध्येतिकर्तव्यतयोर्मध्ये च साध्यमङ्गीति तत्राङ्गत्वेनेतिकर्तव्यताया विनियोगः । इतिकर्तव्यता च क्रियारूपैवेत्यतः प्रकरणं क्रियाया एव विनियोजकं भवतीति सिद्धम् ।

आर्थी भावनेति । आर्थी भावना च प्रयत्नरूपा बाह्यव्यापारसामान्यरूपा वेत्यग्रे मूल एव ग्रन्थसमाप्तौ वक्ष्यते । षष्ठ्याद्येति । एतदधिकरणस्वरूपं प्रागुक्तम (पृ. ३४ प २०) । भावार्थाधिकरणेति । एतदधिकरणस्वरूपं प्रागुक्तम (पृ. ४९ प. ८) अश्रूयमाणफलकमिति । अश्रूयमाणफलत्वादेव किं साध्यमित्येवं तस्योपकार्याकाङ्क्षा जायते । श्रूयमाणफलकस्य तु न प्रकरण-

जातं तदेवोपकार्याकाङ्क्षयेतिकर्तव्यतात्वेनान्वयमनुभवितुं योग्यम्। क्रियाया एव लोके कथंभावाकाङ्क्षायामन्वयदर्शनात्। नहि कुठारेण छिन्द्यात्कथमित्याकाङ्क्षायां हस्त इति केवलमुच्चार्यमाणोऽपि हस्तोऽन्वयं प्राप्नोति। किं तर्हि हस्तेनोद्यम्य निपात्येति उच्चार्यमाणे उद्यमननिपातने एव। हस्तोऽपि तद्द्वारेणैवान्वयं प्राप्नोतीति सार्वजनीनमेतत्।

किं च कथंभावाकाङ्क्षा नाम करणगतप्रकाराकाङ्क्षा। कथमः प्रकारवाचित्वात्। सामान्यस्य भेदको विशेषः प्रकारः। सामान्यं च क्रियारूपमेवाख्यातेनोच्यते। यजेत स्वर्गकाम इत्यस्य ह्ययमर्थः-यागेन तथा कर्तव्यं यथा स्वर्गो भवतीति। क्रियासामान्यस्य च विशेषः क्रियैव भवति। न हि ब्राह्मणविशेषः परिव्राजकादिरब्राह्मणो भवति। एवं च करणगतक्रियाविशेषाकाङ्क्षापरनामधेयकथंभावाकाङ्क्षायां क्रियैवान्वेतीति युक्तम्।

स च करणगतः क्रियाविशेषोऽन्वाधानादिब्राह्मणतर्पणान्तः क्रियारूप एवेति युक्तं तस्य प्रकरणेन ग्रहणम्। तस्य च करणगतत्वं तदुपकारकत्वमेव। तेन विना यागेनापूर्वाजननात्। न ह्युद्यमननिपातनव्यतिरेकेण कुठारेण द्वैधीभावो जन्यते। तत्सिद्धं कथंभावाकाङ्क्षायां क्रियैवान्वेतीति। अत एव द्रव्यदेवतयोर्यागसंपादनद्वारान्वयः सांप्रदायिकैरुक्तः।

---

प्रमाणेन विनियोगः। उभयाकाङ्क्षाया अभावात्। तथा च तादृशस्थले विनियोजकप्रमाणान्तराभावे कर्मभेद एवेति बोध्यम्।

एवमितिकर्तव्यताकाङ्क्षायां तादृशाकाङ्क्षापूरकत्वं क्रियाया एव भवतीत्यतः प्रकरणं क्रियाया एव विनियोजकमित्युक्तम्। अधुना त्वितिकर्तव्यताकाङ्क्षैव क्रियाविषयिणीत्यतोऽपि प्रकरणं क्रियाया एव विनियोजकं भवतीति साधयति-किंच कथं भावेति। प्रकारवाचित्वादिति। किमश्च (पाणि. सू. ५। ३। २५) इति पाणिनिसूत्रेण किंशब्दात्प्रकारवचन एव थमुप्रत्ययस्य विधानात्। करणगत इति। करणशब्देन यागो गृह्यते। प्रत्ययार्थभावनायां यागस्यैव करणत्वेनान्वयात्। अत एवेति। कथंभावाकाङ्क्षायां क्रियाया एवान्वयस्य सिद्धत्वादेवेत्यर्थः। द्रव्यदेवतयोरफलत्वान्न साध्यत्वेन भावनायामन्वयः। नापि करणत्वेन। समानपदोपात्तत्वेन यागस्यैव करणत्वेनान्वयात्। नापीतिकर्तव्यतात्वेन। क्रियाया एव तेन रूपेणान्वयात्। तथा च विधौ निर्दिष्टानां द्रव्यदेवतानां कथं भावनायामन्वय इति चेत्-इत्थम्। द्रव्यं देवता च स्वनिष्ठक्रियया यागं संपादयति। तथा च तद्द्वारैव तेषां भावनाया-

विकृतौ च कथंभावाकाङ्क्षायामुपकारसंपादनमतिदिश्यत इत्युक्तम् । यदि च कथंभावाकाङ्क्षायां सिद्धं वस्त्वन्वययोग्यं स्यात् तदा संपादनपर्यन्तं धावनं ग्रन्थकृतामनर्थकं स्यात् । अतश्च क्रियाया एव इतिकर्तव्यतात्वम् । कथंभावाकाङ्क्षागृहीतस्येतिकर्तव्यतात्वात् । इतिशब्दस्य च प्रकारवाचित्वात् । 'कर्तव्यस्य' 'इति' प्रकार 'इतिकर्तव्यता'। प्रकारश्च सामान्यस्य भेदको विशेष इत्युक्तम् । कर्तव्यस्य च विशेषः कर्तव्य एव भवतीति न सिद्धस्य वस्तुन इतिकर्तव्यतात्वम् । किंतु क्रियाया एव । सिद्धस्य तु द्रव्यादेः केवलमङ्गत्वम् । तदपि श्रुत्यादिना । नतु प्रकरणात् । यथाहुः—

नार्थान्तरक्रियायोगादृते वाक्योपकल्पितात् ।

गुणद्रव्ये कथंभावैर्गृह्णन्ति प्रकृताः क्रियाः ॥ (त. वा. १४।३) इति । अत एव बर्हिर्देवसदनं दामीत्यादिमन्त्राणां लिङ्गादङ्गत्वम्, न तु प्रकरणादित्युक्तमर्थवादाधिकरणपूर्वपक्षसमाप्तौ राणके । क्वचिद्द्रव्यस्येति-

---

मन्वय इति भावः । विकृतौ चेति । अत एवेति सांप्रदायिकैरिति च पूर्ववाक्यस्थमत्रानुषज्यते । उपकारसंपादनमिति । इतिकर्तव्यताविशेष इत्यर्थः । इतिकर्तव्यतायां चातिदिष्टायां तत्पृष्ठभावेन प्रकृतिगतपदार्थातिदेशो इतिकर्तव्यताविशेषः सिध्यतीति भावः । इतिशब्दस्य चेति । इतिकर्तव्यताशब्दनिर्वचनेनापीतिकर्तव्यतायाः क्रियात्वमेवावगम्यत इति भावः । इत्युक्तमिति । अनुपदमेवेति शेषः (पृ १२९ प. ७)। केवलमङ्गत्वमिति । ननु तस्येतिकर्तव्यतात्वमित्याशयः । तदपीति । सिद्धस्य वस्तुनो विनियोगसाकाङ्क्षस्यापि भावनायाश्च कथंभावाकाङ्क्षायामपि न तत्र प्रकरणप्रमाणेन विनियोगः । सिद्धस्य वस्तुनः कथंभावाकाङ्क्षापूरणसामर्थ्याभावात् । एतच्च प्राङ्निरूपितम् (पृ. २८ प. २)। नार्थान्तरेति । एतद्वार्तिकस्यार्थः प्रागुक्तः (पृ. २१ प. १८)। अत एवेति । सिद्धस्य वस्तुनः प्रकरणप्रमाणेन विनियोगस्यासंभवादेवेत्यर्थः । बर्हिर्देवेति मन्त्रस्य लिङ्गप्रमाणेन लवनाङ्गत्वं प्रागुपपादितम् (पृ. १०४ प. २)। यद्यपि लवनस्य कथंभावाकाङ्क्षा मन्त्रस्य च प्रकरणपठितस्य विनियोगाकाङ्क्षेत्युभयाकाङ्क्षा वर्तते तथापि नात्र प्रकरणं प्रमाणं मन्त्रस्य लवनाङ्गत्वं बोधयति । लवनस्योत्पन्नां कथंभावाकाङ्क्षां पूरयितुं मन्त्रस्यासामर्थ्यात् । सा च लोकत उपस्थितया शस्त्रसंयोजनादिक्रिययैव निवर्तनीया भवति । मन्त्रस्य च स्वोच्चारणजन्यार्थस्मरणद्वारा लवनाङ्गत्वम् । तच्च लिङ्गप्रमाणेनैवेति । क्वचिदिति । न्यायरत्नमालायां द्रव्यादि त्वितिकर्तव्यतया संबन्ध्यत इति यदुक्तं

कर्तव्यतात्वाभिधानमङ्गत्वाभिप्रायं द्रष्टव्यम् । बहुग्रन्थस्वरसादुक्तयुक्तेश्चेति । तत्सिद्धं प्रकरणं क्रियाया एव विनियोजकमिति ।

तच्च प्रकरणं द्विविधम् । महाप्रकरणमवान्तरप्रकरणं चेति । तत्र फलभावनायाः प्रकरणं महाप्रकरणम् । तच्च प्रयाजादीनां ग्राहकम् । तच्च प्रकृतावेव । यत्र समग्राङ्गोपदेशः सा प्रकृतिः । यथा दर्शपूर्णमासादिः । तत्र चोभयाकाङ्क्षारूपं प्रकरणं संभवति । आकाङ्क्षानुपरमात् ।

विकृतौ तु न प्रकरणं संभवति । यत्र न समग्राङ्गोपदेशः सा विकृतिः । यथा सौर्यादिः । तत्र च यान्यपूर्वाण्यङ्गानि पठ्यन्ते उपहोमादीनि तेषां न

---

तदौपचारिकम् । इतिकर्तव्यतात्वस्याङ्गत्वप्रयोजकत्वादितिकर्तव्यताशब्देन प्रयोज्यतासंबन्धेनाङ्गत्वं लक्ष्यत इति भावः ।

प्रकरणप्रमाणं विभजते-तच्चेति । आकाङ्क्षानुपरमादिति । प्रयाजदर्शपूर्णमासयोः परस्परविषयकं यदाकाङ्क्षाद्वयं प्राक्प्रदर्शितं ( पृ. १२३ प. २ ) तस्य प्रयाजदर्शपूर्णमासयोरङ्गाङ्गिभावसंबन्धमन्तरेणानुपरमादित्यर्थः । साकाङ्क्षयोर्द्वयोः परस्पराकाङ्क्षानिवर्तनसामर्थ्यं सत्येव प्रकरणप्रमाणसंचार इति प्रागुक्तमेव ( पृ. १३० प. २० ) । किंतु न तावतैव प्रकरणप्रमाणबीजं कार्त्स्न्येनोक्तं भवति । तच्चेत्थम् । द्वयोः परस्परमाकाङ्क्षासत्त्वे सति तादृशाकाङ्क्षानिवर्तनसामर्थ्ये च सति प्रकरणप्रमाणेन जायमानं संबन्धं विना यत्र तादृशाकाङ्क्षानुपरमस्तत्रैव प्रकरणप्रमाणेन विनियोगो भवति । तेन विकृतौ न प्रकरणप्रमाणस्य संचारो भवति । तदाह-विकृतौ त्विति । विकृतियागे फलभावनायाः कथंभावाकाङ्क्षा वर्तते । तत्र पठितानि यानि क्रियारूपाण्यङ्गानि तेषां क्रियारूपत्वेन कथंभावाकाङ्क्षानिवर्तनसामर्थ्यं च वर्तते । किंतु प्रकरणपठितानां तादृशानामङ्गानां फलभावनायां संबन्धं विनापि प्रकृतिगतानामङ्गानामतिदेशेन प्राप्तिसत्त्वात्तेन च कथंभावाकाङ्क्षायास्तत्रोपरमो भवति । तथा च तत्र प्रकरणपठिताङ्गानां स्थानप्रमाणेनैव विनियोगो भवति न तु प्रकरणप्रमाणेनेति भावः । सौर्यादिरिति । सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः इत्येवं सौर्ययागो विधीयते । स च दर्शपूर्णमासान्तर्गताग्नेययागस्य विकृतिभूतः । औषधद्रव्यत्वेनैकदेवत्यत्वेन च साजात्यात् । उपहोमादीनीति । प्रकृतिस्थं किंचिदङ्गमनुद्दिश्य स्वातन्त्र्येणैवापूर्वा ये होमा विकृतौ पठ्यन्ते त उपहोमाः ।

प्रकरणं विनियोजकम् । तत्र यद्यपि तेषां किं भावयेदित्यस्याकाङ्क्षा तथापि प्रधानस्य न कथंभावाकाङ्क्षास्ति । प्राकृतैरेवाङ्गैर्निराकाङ्क्षत्वात् । न च प्राकृतानामङ्गानामत्रापठितत्वेनाप्रत्यक्षत्वाद्वैकृतानां तु पठितत्वेन प्रत्यक्षत्वात्तैरेवाकाङ्क्षोपशम इति वाच्यम् । तेषां पठितत्वेऽपि अक्लृप्तोपकारत्वेन झटित्याकाङ्क्षोपशमनेऽसामर्थ्यात् । प्राकृतानां तु क्लृप्तोपकारत्वेन तच्छमने सामर्थ्यात् । न चात्र तेषामुपस्थापकाभावः । उपमितिलक्षणप्रमाणेन तेषामुपस्थितत्वात् । सौर्यवाक्ये हि दृष्टे औषधद्रव्यत्वेन एकदैवत्यत्वेन सादृश्येन आग्नेयवाक्यमुपमीयते गवयदर्शनाद्गोरुपमानवत् । तस्मिंश्चोपमिते तेन तदर्थो ज्ञायते । सा त्र्यंशा भावना । तत्र सौर्यवाक्ये भावनायाः भाव्यकरणयोः सत्त्वादितिकर्तव्य-

---

न कथंभावाकाङ्क्षास्तीति । यद्यप्यत्र फलभावनायाः कथंभावाकाङ्क्षास्त्येव तथापि सा प्रकरणपठिताङ्गसंबन्धपर्यन्तं नावतिष्ठते । ततः प्रागेवातिदेशप्राप्तैः प्राकृतैरङ्गैराकाङ्क्षाया उपरमात् । तथा चात्र न कथंभावाकाङ्क्षास्तीत्यस्य प्रकरणपठिताङ्गसंबन्धकाले नास्तीत्यर्थः । अतस्तत्रत्याङ्गानां न प्रकरणप्रमाणेन विनियोग इति भावः । न च प्राकृतानामिति । विकृतियागे फलभावनायाः या कथंभावाकाङ्क्षा सा प्राकृतैरङ्गैरेव शान्तिं नेया न तु तत्र पठितैरङ्गैरित्यत्र विनिगमकं नास्ति । प्रत्युत तत्र प्रत्यक्षपठितत्वेन शीघ्रोपस्थितिकत्वेन तैरेवाकाङ्क्षोपशमः स्यादित्याशयः । पठितत्वेपीति । विकृतियागे पठितान्यङ्गानि शीघ्रोपस्थितिकान्यपि कार्यकारित्वेनानिर्णीतानि । अन्यत्रापि तेषामङ्गत्वाननुभवात् । प्राकृतान्यङ्गानि तु प्रकृतियागेऽङ्गत्वं संप्राप्याकाङ्क्षापूर्वोत्पादनेनोपयुक्तानि प्रदर्शितसामर्थ्यानीत्यतस्तानि पश्चादुपस्थितिकान्यप्यग्रतोभूय प्रथमोपस्थितान्यपि विकृतिपठितान्यपसार्य विकृतियागे फलभावनायामितिकर्तव्यतया संबध्यन्त इति भावः । न चात्रेति । विकृतियागे प्राकृताङ्गानामुपस्थितिरेव नास्तीत्याशयः । उपमितीति । यथा गवये दृष्टे तत्सादृश्यादनेन सदृशी मदीया गौरित्येवं गोरुपस्थितिर्भवति तथा सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इति सौर्ययागबोधके विधिवाक्ये दृष्टे तत्सादृश्यादाग्नेययागबोधकं वाक्यमुपस्थितं भवति । आग्नेययागेऽग्निरेकैव देवता सौर्येऽपि च सूर्य एकैव देवता । तथोभयत्र पुरोडाशरूपमोषधिद्रव्यं समानमिति तयोः सादृश्यम् । एवमाग्नेययागबोधके वाक्ये समुपस्थिते सति तद्यस्तदर्थो बुद्धिमारोहति । शब्दानां स्वार्थोपस्थापकत्वस्यावर्जनीयत्वात् । ततश्च सौर्यं चरुमिति वाक्यार्थान्तर्गतार्थीभावना ब्रह्मवर्चसकाम इत्युक्तत्वात्साध्यांशे निराकाङ्क्षैव । तथा करणांशेपि निराकाङ्क्षैव । चरुं निर्व-

ताकाङ्क्षायामुपकारपृष्ठभावेनाग्नेयेतिकर्तव्यताऽतिदिश्यते, –सौर्ययागेन ब्रह्मवर्चसं भावयेदाग्नेयवदुपकृत्येति। तथा च तयैवाकाङ्क्षोपशमान्न विकृतेः प्रकरणमस्ति। अन्यतराकाङ्क्षारूपस्थानादेव चापूर्वाङ्गग्रहणम्।

न च प्राकृताङ्गग्रहणमेव विकृतौ प्रकरणात् किं न स्यादिति वाच्यम्। तेषामपि प्रकृत्युपकारकतयाऽऽकाङ्क्षोपशमात्। ननु प्राकृतानामङ्गानामाकाङ्क्षाऽभावे तेषां विकृतौ संबन्धः केवलं स्थानात् स्यात्। अपूर्वाणां त्वाकाङ्क्षासत्त्वाद्विकृतेरप्याकाङ्क्षावत्त्वात्तेषां तत्संबन्धः प्रकरणात्स्यात्। प्रकरणं च स्थानात् झटिति विनियोजकमित्यपूर्वाणामेव प्रथमं संबन्धः स्यात्, न प्राकृतानामिति।

---

येदित्युक्त्या चरुनिर्वापेन यागस्याक्षेपात्। कथं ब्रह्मवर्चसं भावयेदित्येवं कथंभावाकाङ्क्षायां फलापूर्वोत्पादनोपयोग्युपकारसंपादनमन्तरेण तद्दुर्लभमित्युपकारसंपादनार्थमाग्नेययागीयेतिकर्तव्यतातिदिश्यत इति भावः। न विकृतेरिति। विकृतियागे प्रकरणप्रमाणस्यावकाशो नास्तीत्यर्थः। न चेति। विकृतौ तत्र पठितानामङ्गानां यो विनियोगः स प्रकरणप्रमाणेन मा भून्नाम। किंतु तत्र प्राकृताङ्गानां यो विनियोगः स प्रकरणप्रमाणेन भवतीति कुतो नोच्यत इत्याशयः। तेषामपीति। विकृतियागे हि वैकृतप्राकृतयोर्द्विविधयोरप्यङ्गयोः संबन्धो भवतीति सत्यम्। किंतु तत्राद्येऽङ्गस्य साकाङ्क्षत्वेऽप्यङ्गिनो निराकाङ्क्षत्वमन्त्ये चाङ्गिनः साकाङ्क्षत्वेऽप्यङ्गस्य निराकाङ्क्षत्वमिति न कश्चिदपि तयोरन्यतरः संबन्धः प्रकरणप्रमाणेन संभवतीति भावः।

अथ विकृतौ प्रकारान्तरेण प्रकरणप्रमाणसंभवमाशङ्कते–ननु प्राकृतानामिति। आकाङ्क्षाया अभाव इत्यभावशब्दोत्तरपदकस्तत्पुरुषः। स्थानादिति। श्रुतिलिङ्गादिषु विनियोजकेषु षट्सु प्रमाणेषु पञ्चमेन स्थानप्रमाणेनेत्यर्थः। अपूर्वाणामिति। विकृतौ पठितानामङ्गानामित्यर्थः। झटितीति। प्रकरणप्रमाणं हि वाक्यं लिङ्गं श्रुतिं चेति त्रयं क्रमेण प्रकल्प्य चतुर्थकक्ष्यायां विनियोजकं भवति। स्थानप्रमाणं तु प्रकरणं वाक्यं लिङ्गं श्रुतिं चेति चतुष्टयं क्रमेण प्रकल्प्य पञ्चमकक्ष्यायां विनियोजकमित्यतः स्थानप्रमाणापेक्षया प्रकरणप्रमाणेन झटिति विनियोगो भवतीति भावः। न प्राकृतानामिति। नन्वेकस्याङ्गस्य प्रमाणभेदेनानेकत्र विनियोगे प्राप्ते तत्र विरोधाद्बाध्यबाधकभावविचारः। अत्र तु न तथा। विकृतिपठितानामङ्गानां प्रकरणप्रमाणेन विकृतौ विनियोगो भवतु प्राकृतानां चाङ्गानां स्थानप्रमाणेन विकृतौ विनियोगो भवत्विति कथमत्र न प्राकृतानामित्युक्तमिति चेदत्र केचित्।

अत्रोच्यते । सत्यं प्रकरणं झटिति विनियोजकम् । तथापि प्रमाणबला-बलात् प्रमेयबलाबलस्य ज्यायस्त्वादुक्तविधयोपस्थितानां प्राकृतानामेव संबन्धो युक्तः स्यात् । क्लृप्तोपकारत्वात् । न वैकृतानाम् । कल्प्योपकारत्वात् । विकृतेश्चोपकारकपदार्थाकाङ्क्षा न पदार्थमात्राणामिति युक्तः प्रथमं प्राकृताङ्ग-संबन्धः । ततश्च न विकृतौ प्रकरणं विनियोजकम् ।

यत्तु विकृतौ प्राकृताङ्गानुवादेन विधीयते यथा — 'औदुम्बरो यूपो भवति' ( तै. सं. २।१।१।६ ) इति यूपानुवादेन औदुम्बरत्वम्, तत्प्रक-

---

न प्राकृतानामित्यत्र प्रथममित्यनुषज्यते । तथा च प्राकृतानामङ्गानां प्रथमं संबन्धो न स्यादित्येवात्र विवक्षितम् । पश्चात्तु भवत्येवेति । वस्तुतस्तु विकृतिपठितानामपूर्वाणामङ्गानां प्रकरणप्रमाणेन विनियोगश्चेत्तत्र जाते सत्यङ्गिनो निराकाङ्क्षत्वात्तत्र प्राकृताङ्गविनियोगे स्थानप्रमाणस्यावसर एव नेति प्राकृताङ्गानां पश्चादपि संबन्धो दुर्घट एवेति बोध्यम् ।

समाधत्ते-<u>अत्रोच्यत इति</u> । अयं भावः । फलभावना हि फलसाधनार्थं मुख्यत उपकारमपेक्षते । ततस्तत्पुष्ट्यभावेन तदुपकारसंपादकमपेक्षते । तथा च यदङ्गं स्वस्योपकारोत्पादनसामर्थ्यं पुरस्कृत्योपतिष्ठते तदेव तत्र प्रथमत संबन्धुमर्हति । तादृशं च प्राकृतमङ्गमिति तस्यैव प्रथमतः संबन्धः । स च केनापि प्रमाणेन भवतु न तत्र बलाबलचर्चावसरः । एवं प्राकृताङ्गानां विकृतौ प्रथमतः संबन्धे जाते ततो निराकाङ्क्षेऽपि तत्राङ्गिनि विकृतिपठितानां साकाङ्क्षाणामङ्गानां पुनः स्थानप्रमाणेन संबन्धो जायते । तादृशसंबन्ध-बलात्तु तेषामुपकारोत्पादनसामर्थ्यं पश्चात्कल्प्यत इति विशेषः ।

अथ विकृतावपि क्वचित्प्रकरणप्रमाणेन विनियोगं दर्शयति-<u>यत्तु विकृता-विति</u> । तैत्तिरीयसंहितायां द्वितीयाष्टके प्रथमप्रपाठके प्रथमानुवाके सोमापौष्णं त्रैतमालभेत पशुकामः ( तै. सं. २।२।१।६ ) इत्याम्नायते । अत्र विकृतिभूते यागविशेषे सोमः पूषा चेति देवताद्वयोद्देशेन त्रैतपश्वालम्भनं विधीयते । त्रयाणां वत्सानां युगपज्जातानां समुदायस्त्रितम् । तत्र भवस्त्रैतः । तेषां त्रयाणामन्यतम इत्यर्थः । अस्मिन्विकृतियागे प्रकृतितः प्राप्तं यूपमङ्ग-मुद्दिश्य तस्यौदुम्बरत्वं विधीयते औदुम्बरो यूपो भवति ( तै. सं. २।१।१।६ ) इति । अनेन च तत्र प्रकृतितः प्राप्तं यूपस्य खादिरत्वं बाध्यते । औदुम्बरत्वस्य च विकृतियागे प्रकरणप्रमाणेन विनियोग इति सिद्धान्तः । किंतु तत्र प्रकरणप्रमाणं न संभवतीत्याक्षेपः । तत्र च हेतुत्रयम् । औदुम्बरत्वस्य क्रियारूपत्वाभावेन कथंभावाकाङ्क्षानिवर्तनसामर्थ्याभाव इत्येकम् । विकृति-

रणाद्गृह्यते । ननु न तत्प्रकरणाद्गृह्यते । अक्रियात्वात् । क्रियाया एव प्रकरणग्राह्यत्वादिति चेत् सत्यम् । तथापि तु तावद्विधीयमानस्यौदुम्बरत्वस्यास्त्येवाकाङ्क्षा—किं भावयेदिति । न च यूपानुवादेन तस्य विधीयमानत्वाद्यूपस्य चादृष्टरूपत्वात्तेनैवौदुम्बरत्वस्य नैराकाङ्क्ष्यम् । आहवनीयेनेवाधानस्येति वाच्यम् । यूपस्य केवलादृष्टरूपत्वाभावात् । तस्य हि तद्रूपत्वे खादिरत्वादिकं केवलादृष्टार्थं स्यात् । न च तत्संभवति । तथा सति खादिराभावे प्रतिनिधित्वेन कदरोपादानं न स्यात् । अदृष्टार्थस्य प्रतिनिध्यभावात् । नहि खदिरजन्यमदृष्टं कदरेण क्रियत इत्यत्र प्रमाणमस्ति । अत एव नादृष्टार्थानां प्रतिनिधिः । तदुक्तम्—

'न देवताग्निशब्दक्रियमन्यार्थत्वात्' (जै. सू. ६।३ १८) इति ।

---

यागस्य प्राकृतैरङ्गैर्निराकाङ्क्षत्वादुभयाकाङ्क्षाया अभाव इत्यपरम् । तत्राद्यं न संभवति । कथंभावाकाङ्क्षानिवर्तनसमर्थां कांचित्क्रियां पुरस्कृत्य तत्प्रयुक्तः क्रियेतरस्य विनियोगे बाधकाभावात् । अन्त्यमपि न संभवति । प्राकृताङ्गसंबन्धोत्तरं हि विकृतियागो निराकाङ्क्षो न तु ततः प्राक् । तथा च प्राकृताङ्गसंबन्धसमय एव तादृशप्राकृताङ्गं पुरस्कृत्य तत्प्रयुक्तभावेन कस्यचित्साकाङ्क्षस्याङ्गस्य विनियोगे प्रकरणप्रमाणस्य संभवात् । तदेतच्छङ्कासमाधानाभ्यां विशदयति-ननु न तदिति । प्रथमतस्तावदौदुम्बरत्वस्य साकाङ्क्षत्वं प्रतिजानीते-अस्त्येवाकाङ्क्षेति । अथाहवनीयस्वरूपं किंचिददृष्टमेव । नहीतरलौकिकाग्न्यपेक्षयाहवनीयाग्नौ लोके किंचिदपि वैलक्षण्यमनुभूयते । यूपस्वरूपमपि तादृशं किंचिददृष्टमेवेत्याशयेनाशङ्कते- न च यूपेति । यथा आधानेनाहवनीयसिद्धौ तत्राहवनीयस्वरूपं यददृष्टं तेनैवाधानस्य फलवत्त्वम् । आहवनीयस्वरूपसंपादनेनैवाधानस्योपक्षीणत्वात् । अतस्तदाधानं स्वातन्त्र्येण फलापेक्षि न भवति तथा यूपस्वरूपादृष्टेनैवौदुम्बरत्वस्य फलवत्त्वं सिद्धमिति न तस्य किं भावयेदित्याकाङ्क्षा संभवतीत्याशयः ।

यूपस्येति । आहवनीयवन्न यूपस्य केवलादृष्टस्वरूपत्वमिति भावः । यूपत्वस्य केवलादृष्टस्वरूपत्वे खादिरत्वबैल्वत्वपालाशत्वौदुम्बरत्वादिकं केवलादृष्टसंपादनार्थमेव स्यात् । इष्टापत्तौ तु खादिराभावे तत्प्रतिनिधिभूतः कदरो गृह्यते स न गृह्येत । केवलादृष्टोत्पादकस्य प्रतिनिधिर्नास्तीति सिद्धान्तात् । कदरः श्वेतखदिरः । न देवतेति । देवता-इन्द्रादिः । अग्निराहव-

अन्यार्थत्वादिति अदृष्टार्थत्वात् । प्रतिनिधित्वेन चोपादानं कदरादेरुक्तं ग्रन्थेषु । तस्मान्न यूपस्य केवलादृष्टरूपत्वम् । अपि तु दृष्टादृष्टसंस्कारगणो यूप इति सांप्रदायिकाः । एवं चौदुम्बरत्वस्य न यूपमात्रेण नैराकाङ्क्ष्यम् । दृष्ट-संस्कारस्य प्रकारान्तरेणापि संभवात् । अतश्चास्ति औदुम्बरत्वस्याकाङ्क्षा । विकृतेरप्यस्ति कथंभावाकाङ्क्षा । सा च तदा शाम्यति यदोपकारास्तत्पृष्ठभावेन च पदार्था अन्वीयन्ते । न तूपकारमात्रान्वयेन शाम्यति । अतश्च यथेन्द्रिय-भावनायाः करणाकाङ्क्षा दध्नः करणत्वेनान्वये जाते सिद्धस्य करणत्वानुपपत्त्या होमस्याश्रयत्वेनान्वयं यावदनुवर्तते न तु दध्यन्वयमात्रेण निवर्तते । आश्रयत्वेन च गृह्यमाणो होमः करणाकाङ्क्षयैव गृह्यत इत्युच्यते । न त्वाश्र-

---

णीयादिः । शब्दो मन्त्रकलापः । क्रिया प्रयाजादिः । एतेषां मध्ये कस्यापि प्रतिनिधिर्नास्ति । दृष्टादन्यो यः अदृष्टरूपोर्थस्तदर्थत्वात् । दृष्टपुरोडाशसाध-नीभूतं यद्व्रीह्यादि द्रव्यं तस्य पुरोडाशरूपदृष्टकार्यसाधकत्ववन्नीवारस्यापि तादृशपुरोडाशसाधनत्वं प्रत्यक्षगम्यम् । अतस्तादृशस्थले प्रतिनिधिग्रहणं भवतु । देवतादीनामदृष्टसाधनत्वं तु न प्रत्यक्षगम्यम् । किंतु शास्त्रमात्रगम्यम् । तथा च यस्य पदार्थस्यादृष्टोत्पादकत्वं शास्त्रप्रमाणेन नावगम्यते तस्य प्रति-निधित्वेन ग्रहणं न संभवतीत्यर्थः । दृष्टादृष्टेति । छेदनतक्षणाष्टाश्रीकरणानां दृष्टसंस्काराणामञ्जनप्रोक्षणादीनामदृष्टसंकाराणां च यः समूहः स यूप इत्यर्थः । दृष्टादृष्टार्थजनकीभूतश्च योर्थः स दृष्टमर्थं समुत्पाद्य तद्द्वारा अदृष्टं साधयति । प्रकृते च दृष्टो यश्छेदनतक्षणाष्टाश्रीकरणसाधित आकारविशेषरूपोर्थः स औदुम्बरेणेव खादिरादिनापि साधितो भवेत्तद्द्वारा अदृष्टं च संपादयेदिति किमर्थं तत्र विकृतावौदुम्बरत्वं विशेषतो विधीयत इत्येवमौदुम्बरत्वस्य भाव्या-काङ्क्षा विद्यत एवेति भावः । नन्वेवमौदुम्बरत्वस्याङ्गस्याकाङ्क्षायां सिद्धायामप्य-ङ्गिनो विकृतियागस्य कथमौदुम्बरत्वविषयिण्याकाङ्क्षा, यथात्रोभयाकाङ्क्षारूप-प्रकरणप्रमाणप्रवृत्तिर्वक्तुं शक्या स्यादित्यत आह-विकृतेरपीति । कथंभावा-काङ्क्षेति । न चाक्रियारूपस्यौदुम्बरत्वस्य कथं कथंभावाकाङ्क्षया संबन्धः स्यात् । किं च विकृतियागीयकथंभावाकाङ्क्षया कल्पितोपकारकाणां प्राकृताङ्गानामेव संबन्ध इति कथं विकृतिपठितस्यौदुम्बरत्वस्य तया संबन्ध इति वाच्यम् । प्रकृतिपठितानां क्रियेतरेषामङ्गानां यथा क्रियाद्वारा कथंभावाकाङ्क्षया संबन्धो भवति तथा विकृतिपठितानामपि क्रियेतरेषामङ्गानां प्रकृतिगतक्रियाद्वारा कथंभावाकाङ्क्षया संबन्धे स्वीक्रियमाणे उक्तदोषद्वया-भावात् । तदुपपादयति-सा च तदेति । यथेन्द्रियेति । एतच्च प्रागुपपादितम्

याकाङ्क्षा नाम चतुर्थ्यस्ति। एवं विकृतेः कथंभावाकाङ्क्षा नोपकारान्वयमात्रेण निवर्तते। उपकारपृष्ठभावेन यावत्पदार्थान्वयमनुवर्तते। अतश्चोपकारपृष्ठभावेन गृह्यमाणाः पदार्थाः कथंभावाकाङ्क्षयैव गृह्यन्ते। तत्र प्राकृताः पदार्थाः कथंभावाकाङ्क्षया गृह्यमाणा अपि न प्रकरणग्राह्याः। प्रकृत्युपकारकतया तेषामाकाङ्क्षाऽभावात्। औदुम्बरत्वादयस्तु अन्यानुपकारकतया साकाङ्क्षाः पशुनियोजनयूपपृष्ठभावेन यावत्खादिरत्वमायाति तावद्विधीयन्ते इति युक्तं तेषां प्रकरणाद्ग्रहणम्। उभयाकाङ्क्षासत्त्वात्। यदि हि यूपपृष्ठभावेन खादिरत्वं विहितं स्यात्ततो विकृतेराकाङ्क्षाऽभावादौदुम्बरत्वं न प्रकरणग्राह्यं स्यात्। न चैतदस्ति। चोदकस्य खादिरत्वाविषयत्वात्।

---

(पृ. ४२ प. ५)। कथंभावाकाङ्क्षयेति। विकृतियागीयकथंभावाकाङ्क्षया गृह्यमाणाः प्राकृताः पदार्था विकृतियागे विनियुक्ता अपि न ते प्रकरणप्रमाणेन विनियुक्ता भवन्ति। प्रकृतिभूते यागे विनियुक्तत्वेन तेषां निराकाङ्क्षत्वात्। तथा च ते प्रकृतिपठिता अर्थाः प्रकृतियागे प्रकरणप्रमाणेन विकृतियागे तु स्थानप्रमाणेन विनियुक्ता भवन्तीति बोध्यम्। औदुम्बरत्वं तु प्रकृतौ न पठितमिति प्रकृतावविनियुक्तमतः साकाङ्क्षमिति प्रकरणप्रमाणेन विकृतौ विनियुज्यते। ननु तत्र न प्रकरणप्रमाणं संभवति। उक्तरीत्यौदुम्बरत्वस्य साकाङ्क्षत्वेपि विकृतियागस्य नौदुम्बरत्वविषयिण्याकाङ्क्षा। यथा प्रकृतियागे कथं फलं साधनीयमित्येवं फलभावनायाः कथंभावाकाङ्क्षायामुपकारं संपाद्येत्युक्तेपि केनोपकारसंपादनमित्येवमाकाङ्क्षा तदवस्थैव। ततः पशुनियोजनेनेत्युक्तेपि पुनः क्व पशुनियोजनमित्येवं पुनस्तदवस्थैवाकाङ्क्षा। ततो यूपे इत्युक्तेपि कस्य यूप इति पुनराकाङ्क्षा तदवस्थैव। ततः खदिरस्येत्युक्ते आकाङ्क्षा निवृत्ता भवति। ततश्चोपकारसंपादनं तत्पृष्ठतः पशुनियोजनं तत्पृष्ठतो यूपस्तत्पृष्ठतः खदिर इत्येतत्सर्वं खदिरपर्यन्तं कथंभावाकाङ्क्षयैव गृह्यते तथा विकृतियागेपि कथंभावाकाङ्क्षायाः खदिरपर्यन्तं संबन्धेन निवृत्तत्वात्। पश्चाच्च तस्य प्राप्तस्य खादिरत्वस्य विकृतिपठितेनौदुम्बरत्वेन बाधो भवेत्। किंतूक्तरीत्या निराकाङ्क्षे विकृतियागे संबध्यमानमौदुम्बरत्वं स्थानप्रमाणेन संबद्धं भवेन्नतु प्रकरणप्रमाणेनेति चेन्मैवम्। विकृतियागे कथंभावाकाङ्क्षायां सादृश्येन प्रकृतिस्थाः पदार्था उपस्थिता भवन्ति। ते च तथा बुद्ध्यारूढाः स्थानप्रमाणेन विनियुज्यन्त इति सत्यम्। किंतूपकारः पशुनियोजनं यूपश्चेत्येतावत्पर्यन्तमेव बुद्धावारोहन्ति न तु तत्पृष्ठतः खदिरः। तद्विरुद्धस्यौदुम्बरत्वस्य विकृतियाग एव प्रत्यक्षपठितत्वेन प्रथममेव

ननु यदि यावत्खादिरत्वमायाति तावदेवौदुम्बरत्वं विधीयते । तदा तेन खादिरत्वबाधोऽप्राप्तबाधः स्यात् । तार्तीयबाधवत् । तथा हि बाधो द्विविधः—अप्राप्तबाधः प्राप्तबाधश्चेति । तत्र तार्तीयो बाधोऽप्राप्तबाधः । तत्र हि यावद्दुर्बलेन विनियोगः कर्तुमारभ्यते तावदेव प्रबलप्रमाणेन विनियोगः क्रियते इति तद्बोधितेनेतरबाधोऽप्राप्तबाधः । दुर्बलप्रमाणस्याप्रवृत्तत्वात् ।

प्राकृतस्य त्वङ्गस्य विकृतौ चोदकप्राप्तस्य प्रत्याम्नानादर्थलोपात्प्रतिषेधाद्वा यो बाधः स प्राप्तबाधः । यथा प्राकृतानां कुशानां प्रतिकूलशराम्नानात् ।

---

बुद्ध्यावारोहसद्भावात् । तथा च प्रत्यक्षपठितत्वादुपक्रममारभ्यैव समुपस्थितं साकाङ्क्षं चौदुम्बरत्वं स्वसंबन्धयोग्यं समयं प्रतीक्षमाणं यूपपर्यन्तं समुपस्थितान् पदार्थानालोच्य यूपप्रभावेन संबध्यमानं प्रकरणप्रमाणेन संबध्यत इति युक्तमेव । नन्वेवं यद्यत्र खादिरस्योपस्थितिरेव नास्ति तर्हि तस्यौदुम्बरत्वेन बाधो य उच्यते सोऽप्राप्तबाध एव स्यादिति चेदस्तु न नः किंचिच्छिद्यते । प्रत्युत प्राप्तबाधं मन्वानस्य तवैव दोषः । खदिरस्य वचनप्राप्तत्वेन तस्य सर्वथा बाधासंभवेन खादिरत्वौदुम्बरत्वयोर्विकृतौ विकल्पापत्तेः । नहि खादिरत्वं रागतः प्राप्तम् । नापि त्वन्मते भ्रान्तिप्रतिपन्नम् । येन तस्य सर्वथा बाधः स्यात् । अथात्रौदुम्बरत्वेन खादिरत्वस्य प्राप्तबाध एवेति मन्यमानः शङ्कते—<u>ननु यदीत्यादिना तदनुपपत्तिः स्यादितीत्यन्तेन । तार्तीयबाधवदिति</u> । जैमिनिना तृतीयाध्याये श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात् ( जै. सू. ३।३।१४ ) इतिसूत्रे श्रुतिलिङ्गादिषु षट्सु प्रमाणेषु पूर्वपूर्वापेक्षया परस्य प्रमाणस्य दौर्बल्यमुक्तम् । तत्र दुर्बलस्य यो बाधः सोऽप्राप्तबाध एव । पूर्वप्रमाणेन प्रथमं विनियोगे पश्चात्तत्र परप्रमाणस्याप्रवृत्तेः । प्रागुपपादितमेतत् ( पृ. १०१ प. ५ ) ।

अथात्राप्राप्तबाधे स्वीकृते का हानिरित्याह—<u>प्राकृतस्य त्विति</u> । तृतीयाध्याये प्रतिपादितो यः श्रुत्यादिषु विनियोजकप्रमाणेषु बाध्यबाधकभावस्तत्राप्राप्तबाधो भवतु । विकृतौ विशेषतः पठितेन चोदकप्राप्तस्य यस्त्रिविधो बाधो दशमाध्याये निर्णीतः स प्राप्तबाध एव । तादृशश्चायमौदुम्बरत्वेन खादिरत्वस्य बाधः इति स प्राप्तबाध एवोचित इत्याशयः । <u>प्राकृतानां कुशानामिति</u> । प्रकृतौ बर्हिः कुशमयम् । रौद्रीं रोहिणीमालभेताभिचरन् ( तै. सं. २।१।७।७ ) इति वचनेन अभिचारेष्टिर्विधीयते । रुद्राध्याये नीलग्रीवा विलोहिताः ( तै. सं. ४।५।११ ) इति रुद्रस्य विशेषेण लोहितत्वं श्रूयते । अतो रोहिणी रुद्रदेवताकेति तत्र भाष्यम् । तस्यां शरमयं बर्हिः ( तै. सं. २।१।७।७ ) इति

यथा वाऽवघातस्य कृष्णलेषु वैतुष्यरूपप्रयोजनलोपात् । यथा वा पित्र्येष्टौ होतृवरणस्य न होतारं वृणीते ( मै. सं. १।१०।१८ ) इति प्रतिषेधात् । औदुम्बरत्वेन च खादिरत्वबाधः प्राप्तबाध एव वक्तव्यः शरकुशन्यायेन । चोदकस्य च खादिरत्वाविषयत्वे प्राप्त्यभावात्तदनुपपत्तिः स्यादिति ।

उच्यते । तार्तीयप्रमाणविनियुक्तेनेतरस्य बाधनं तावदप्राप्तबाधनम् । प्रकरणं च तार्तीयम् । तेन तद्विनियुक्तौदुम्बरत्वेनेतरस्य बाधनमप्राप्तबाध एव । नहि वैकृतेन प्राकृतबाधः प्राप्तबाध एवेति कुलधर्मः ।

---

विशेषतः पठ्यते । तथा च चोदकप्राप्तानां कुशानां शरैर्यो बाधः स प्राप्तबाधो भवति । अवघातस्येति । कृष्णलानां स्वर्णमयत्वेन स्वभावत एव तुषराहित्यात्तत्रावघातसाध्यं किंचित्प्रयोजनमित्यतोयं प्राप्तस्यावघातस्यार्थलोपाद् बाधो भवति । विकृतिरूपाणां काम्येष्टीनां काण्डे प्राजापत्यं चरुं निर्वपेच्छतकृष्णलमायुष्कामः इत्युच्यते । कृष्णलशब्दः सुवर्णशकलवाची । प्रकृतौ व्रीहीनवहन्तीति पुरोडाशहेतूनां व्रीहीणामवघातो विहितः । स विकृतौ कृष्णलेषु चोदकप्राप्तः । परंतु कृष्णलेषु वितुषीकरणरूपमवघातप्रयोजनं नास्तीति प्रयोजनलोपात्तत्रावघातो न भवति । यद्यप्येवं विक्लेदनरूपप्रयोजनाभावात्पाकोपि न कर्तव्य इत्यापतति तथापि घृते श्रपयति इति प्रत्यक्षतया पाकोभ्युपगम्यते । अवघातविषये तु तत्र तथा प्रत्यक्षोक्तिर्नास्तीत्यतोवघातस्तत्र न भवति । पाकस्त्वदृष्टार्थः स्यादिति । तैत्तिरीयसंहितायां( २।३।२ )मप्येतद्द्रष्टव्यम् । एतच्च जैमिनीयन्यायमालाविस्तरे दशमाध्याये प्रथमपादे प्रथमाधिकरणे द्वितीयवर्णके स्पष्टम् ।

पित्र्येष्टाविति । प्रकृतिभूते दर्शपूर्णमासे विहितस्य होतृवरणस्य विकृतिभूते महापितृयागे चोदकप्राप्तस्य विकृतिपठितेन न होतारं वृणीते ( मैत्रा. सं. १।१०।१८ ) इति विशेषनिषेधेन बाध इत्ययमपि प्राप्तबाधो भवति ।

समाधत्ते—उच्यत इति । कुलधर्म इति । एवं च यत्र प्रकृतितश्चोदकेन प्राप्तस्य विकृतिपठितेन बाधो दशमाध्यायोक्तस्तत्र सर्वत्र प्राप्तबाध एवेति न नियमः । यत्र संभवति प्राप्तबाधस्तत्र तथास्तु । यत्र तु न संभवति तत्राप्राप्तबाधाङ्गीकारेपि न क्षतिः । प्राप्तिश्च यद्यपि त्रिविधा संभवति भ्रान्तितो रागतो वचनतश्चेति तथापि वचनत एव प्राप्तिरत्र गृह्यते । सा च पूर्वोक्त—( पृ. १२७।९ ) रीत्या खादिरत्वस्य चोदकाविषयत्वेन प्रकृते न संभवतीत्यप्राप्तबाध एवायमिति तदाशयः ।

वस्तुतस्तु प्राप्तबाध एवायम्। न च खादिरत्वस्य चोदकाविषयत्वेन प्राप्त्यभावात् कथं तद्बाधः प्राप्तबाधः। तद्विषयत्वे वा तेनैव नैराकाङ्क्ष्यान्नौदुम्बरत्वे प्रकरणं विनियोजकं स्यादिति वाच्यम्। नहि प्राप्तबाधस्थले चोदकेन पदार्थाः प्राप्यन्ते। तथा सति शास्त्रप्राप्तत्वेन बाधो न स्यात्। किं तर्हि तानेव पदार्थान्वस्तुतः प्रापयति ये विकृतौ न बाध्यन्ते। ते च पदार्थाः प्रकृतिवच्छब्देन प्राप्यन्ते इति भवति पुरुषस्य भ्रान्तिः— यथा प्रकृतौ कृतं तथा विकृतौ कर्तव्यमिति सर्वे पदार्थाः प्राकृताः कर्तव्या इति।

अतश्च भ्रान्तिप्राप्ताः खादिरत्वादयः शास्त्रप्रतिपन्नैरौदुम्बरत्वादिभिर्बाध्यन्ते इति भवति तद्बाधः प्राप्तबाधः। न च भ्रान्तिप्रतिपन्नेन वैधी आकाङ्क्षा निवर्तयितुं शक्यते। तस्माद्युक्तमुक्तमुभयाकाङ्क्षारूपप्रकरणसंभवाद्विकृतौ प्राकृताङ्गानुवादेन विधीयमानानामौदुम्बरत्वादीनां प्रकरणं विनियोजकमिति।

एवं पृषदाज्येनानूयाजान्यजति ( तै. सं. ६।३।११।६ ) इति प्राकृता-

---

इत एवारुचेः पक्षान्तरमाह–वस्तुतस्त्विति। नहि प्राप्तिर्वचनत एवापेक्ष्यत इति कुलधर्मः। नापि च श्रुत्यादिभिर्विनियोजकप्रमाणैः परप्रमाणबाधस्तृतीयाध्यायोक्तः सर्वत्राप्राप्तबाध एवेति कुलधर्मः। किंच वचनत एव प्राप्तिश्चेत्तत्र बाधस्वरूपमपि कार्त्स्न्येन न संभवति। प्रापकवचनस्याप्रामाण्यापत्त्या तादृशस्थले पाक्षिकबाधस्यैवाङ्गीकर्तव्यत्वात्। बाधो न स्यादिति। सर्वथा बाधो न स्यादित्यर्थः। तानेव पदार्थानिति। अनुपदमुपपादितमेतत्। तथा च तत्र खादिरत्वादयो नैव वचनतः प्राप्नुवन्ति। किंतु प्रकृतिवद्विकृतिरिति सामान्यतोतिदेशं श्रुत्वा बाध्याबाध्यकृतविशेषमजानानस्यादूरदर्शिनः केवलं भ्रान्तिर्भवति खादिरत्वादयः प्राप्ता इति। भवति तद्बाध इति। अयं च कार्त्स्न्येन बाधो नतु पाक्षिकः। भ्रान्तिज्ञानेष्वप्रामाण्यस्य सर्वसंमतत्वात्। ननु भ्रान्तितोपि खादिरत्वं प्राप्तं चेत्तावतैव विकृतियागीयायाः कथंभावाकाङ्क्षायाः शान्तत्वात्पश्चात्तत्खादिरत्वं प्रबाध्य भवन्नौदुम्बरत्वस्य संबन्धो न प्रकरणप्रमाणेन भवेत्। उभयाकाङ्क्षाया अभावादिति चेत्तत्राह–नच भ्रान्तीति। अनुष्ठानस्य यथार्थज्ञानतन्त्रत्वात्। इतरथा पुरुषमतिवैरूप्येण भ्रान्तेरनियतत्वात्संबन्धस्याप्यनियतत्वेन सर्वत्रानुष्ठानसंशये बहुव्याकुली स्यात्। उपसंहरति–तस्मादिति।

अथ वादप्रस्तस्योदाहरणान्तरस्य स्वमतेन निर्णयं चिकीर्षुरादौ मतान्तरेण तद्योजयति–एवं पृषदाज्येनेति। दर्शपूर्णमासविकृतिभूते पशुचातु-

नुयाजानुवादेन विधीयमानं पृषदाज्यमपि प्रकरणाद्विकृत्यङ्गमिति केचिदाचार्याः। अस्मत्तातचरणास्त्वेवमाहुः । पृषदाज्यं हि अनुयाजानुवादेन विधीयते । तत्स्वरूपे चानर्थक्यप्राप्तौ तेन विकृत्यपूर्वं लक्षयितुं युक्तम् । विप्रकर्षात् । किंतु दीक्षणीयावाङ्नियमन्यायेन स्वापूर्वमेव लक्षयितुं युक्तम् । संनिकर्षात् । अत एवोत्पवनादीनां प्रोक्षणाद्यपूर्वप्रयुक्तत्वमुक्तं नवमे । अतश्च विधीयमानस्य पृषदाज्यस्य वाक्यप्रतिपन्नेनानुयाजापूर्वेणैव नैराकाङ्क्ष्यान्न प्रकरणाद्विकृत्यपूर्वार्थत्वमिति ।

वयं त्वङ्गीकृत्यापि विकृत्यर्थत्वं ब्रूमः । भवतु वा विकृत्यर्थत्वं पृषदा-

---

मौस्यादौ पृषदाज्येनानूयाजान्यजाति ( तै. सं. ६।३।११।६ ) इत्युक्तम् । प्रकृतिभूते दर्शपूर्णमासेऽनुयाजा आज्येनेज्यन्ते । तथा चौदुम्बरत्वमिव पृषदाज्यमपि प्रकरणाद्विकृतौ विनियुज्यत इति तद्भावः । इदं न्यायसुधाकृतां मतम् । तत्स्वरूप इति । नह्यनुयाजस्य पृषदाज्यं विना स्वरूपलाभ एव न भवति । आज्येनाप्यनुयाजसंभवात् । किंतु तादृशानुयाजेनापूर्वोत्पत्तिर्न स्यात् । तच्चापूर्वं न फलापूर्वम् । किंतु प्रत्यासत्त्यानुयाजजन्यमवान्तरापूर्वमेव । तथा च पृषदाज्यस्य साक्षाद्विकृत्यङ्गत्वमेव नास्ति दूरे तत्र तस्य प्रकरणप्रमाणेन विनियोग इत्याशयः । दीक्षणीयेति । एतच्च जैमिनीयन्यायमालाविस्तरे नवमाध्याये प्रथमपादे द्वितीयाधिकरणे द्वितीयवर्णके प्रतिपादितम् । तद्यथा ज्योतिष्टोमे श्रूयते–यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात् । मन्द्रं प्रायणीयायाम् । मन्द्रतरमातिथ्यायाम् । उपांशूपसत्सु । उच्चैरग्नीषोमीय इति । अत्र च योयं ध्वनेरुच्चावचभाव उक्तः स दीक्षणीयाद्यवान्तरापूर्वप्रयुक्तः । उच्चावचभावस्य दीक्षणीयादिस्वरूपे आनर्थक्यात् । उच्चावचभावमन्तरेणापि दीक्षणीयादिकर्मणः सिद्धत्वात् । नच परमापूर्वप्रयुक्त एवास्तु परमापूर्वस्य फलजनकत्वादिति वाच्यम् । अवान्तरापूर्वस्यापि परमापूर्वद्वारा फलजनकत्वात् । न चैवं विनिगमनाविरह इति वाच्यम् । दीक्षणीयाद्यवान्तरापूर्वस्यैतदुच्चावचभावसंनिकृष्टत्वेन तस्य तदर्थत्वनिर्णयादिति । अत एवेति । अङ्गस्वरूपलाभेनर्थकानां विहितानां पदार्थानां स्वसंनिकृष्टापूर्वजनकत्वस्वीकाराद्वेवेत्यर्थः । जलपूरिते प्रोक्षणीपात्रे उदगग्राभ्यां पवित्राभ्यामुत्पवनं विधाय ततस्तेन जलेन शुन्धध्वम (तै.सं.१।१।३) इति मन्त्रेण त्रिः पात्रप्रोक्षणमापस्तम्बश्रौतसूत्रे (१।११।९,१०) उक्तम् । तत्र चोत्पवनं विनापि प्रोक्षणसंभवेनोत्पवनमनर्थकं स्यादतस्तत्सार्थक्याय तदुत्पवनं स्वसंनिहितप्रोक्षणापूर्वजनकमिति तत्र सिद्धान्तितम् । अथात्र स्वमतं प्रदर्शयति–वयं त्विति । अङ्गीकृत्यापीति । अयं

ज्यस्य । तथापि न प्रकरणं विनियोजकं भवति । यूपपृष्ठभावेन हि यावत् खादिरत्वमायाति तावदौदुम्बरत्वविधानादुभयाकाङ्क्षासंभवाद्युक्तः प्रकरणविनियोगः । एवं यावदनुयाजपृष्ठभावेन आज्यमायाति तावदेव यदि पृषदाज्यं विधीयेत तदोभयाकाङ्क्षासंभवात्प्रकरणविनियोगो भवेत् । न त्वेतदस्ति । नहि पृषदाज्यं नाम द्रव्यान्तरं किंचिदस्ति यदाज्यस्थानापन्नं विधीयेत । औदुम्बरत्वमिव खादिरत्वस्थानापन्नम् । पृषच्छब्दस्य पृषन्मणिरित्यादौ चित्रतावाचित्वेन दृष्टत्वात् पृषदाज्यशब्दस्य चित्राज्यवाचित्वात् । अत एव निगमेषु आज्यपानित्येव वक्तव्यं न तु पृषदाज्यपानित्युक्तम् ।

न च यावत्प्राकृतमाज्यमायाति तावदेव चित्राज्यविधानात् प्रकरण-

---

भावः । पृषदाज्येन किं भावयेदित्याकाङ्क्षा तस्यावान्तरापूर्वार्थत्वकल्पनेऽपि न निवर्तते । नह्यपूर्वार्थं लोको यतते । अपूर्वस्य स्वतः सुखरूपत्वाभावात् । किंतु स्वर्गादिसुखार्थम् । तथा चावान्तरापूर्वजन्यमहापूर्वजन्यस्वर्गादिसुखकल्पनपर्यन्तमाकाङ्क्षा वर्तत एवेति विकृत्यर्थत्वं वर्तत एवेति । न प्रकरणमिति । उक्तरीत्या पृषदाज्यस्य विकृतियागसंबन्धपर्यन्तमाकाङ्क्षायां विद्यमानायामपि न तावत्पर्यन्तं विकृतियागीया कथंभावाकाङ्क्षा विद्यत इत्युभयाकाङ्क्षाया अभावान्नात्र प्रकरणप्रमाणेन विनियोग इति भावः । चित्राज्यवाचित्वादिति । चित्रं चित्रितं मिश्रितमिति यावत् । दधिमिश्रितमाज्यं पृषदाज्यं चित्राज्यमिति चोच्यते । तथा च यथा चोदकस्य खादिरत्वाविषयत्वं प्रागुक्तम् (पृ. १३७ प. ९) तथा नात्र चोदकस्याज्याविषयत्वमिति चोदकप्राप्तेनाज्येन विकृतियागीया कथंभावाकाङ्क्षा निवृत्ता भवति । ततः पश्चात्तत्र चित्रतागुणस्य भवन् संबन्धो न प्रकरणप्रमाणेन भवतीति बोध्यम् । अत एवेति । पृषदाज्यं नाम नाज्यादन्यत्किंचिद्द्रव्यम् । किं त्वाज्यविशेष एव । तथा च विकृतौ पृषदाज्यपानामपि देवतानामाज्यपत्वस्य सत्त्वादाज्यपानावहेत्यावाहनार्थे मन्त्रे प्रकृतितः प्राप्ते पृषदाज्यपानित्येवमूहो न कर्तव्यः । यद्यपि विकृतौ देवतानां पृषदाज्यपत्वमपि वर्तते तथापि मूलमन्त्रस्थाः शब्दा असंभाविनश्चेदेवोहः कर्तव्यो भवति । गत्यन्तराभावात् । न तूहितस्यापि संभवमात्रेण । ऊहादीनाममन्त्रत्वस्यानाम्नातेष्वमन्त्रत्वम् (जै. सू. २।१।३४) इति सूत्रे स्पष्टमुक्तत्वात् । इत्युक्तमिति । दशमाध्याये चतुर्थपादेऽन्तिमाधिकरणे जैमिनिनोक्तमित्यर्थः । प्राकृतमाज्यमिति । प्रकृतितश्चोदकप्राप्तं विशेषतः किंचिद्गुणरहितमाज्यमित्यर्थः । चित्राज्यविधानादिति । तथा च प्राकृ-

विनियोगः संभवतीति वाच्यम्। नहि पृषदाज्यशब्देन चित्रतागुणविशिष्टमाज्यं विधीयते। विशिष्टविधाने गौरवापत्तेः। किंतु प्राकृताज्यानुवादेन चित्रतागुणमात्रं विधीयते। लोहितोष्णीषा ऋत्विजः प्रचरन्तीतिवत्। तदुक्तं दशमचतुर्थचरणान्ते—

'न वा गुणशास्त्रत्वात्' (जै. सू. १०।४।५८) इति।

प्राकृतस्यैवाज्यस्य चित्रतागुणमात्रविधानमिति च शास्त्रदीपिका। एवं च विकृतेः प्राकृतेनाज्येन क्लृप्तोपकारैश्चानुयाजैर्नैराकाङ्क्ष्ये पश्चाद्विधीयमानस्य चित्रतागुणस्योपहोमाद्यपूर्वाङ्गवन्न प्रकरणं विनियोजकं संभवति।

यदि हि प्राकृतस्य कस्यचिद्गुणस्य स्थाने चित्रतागुणो विधीयेत तदा स गुणो यावदायाति तावद्विकृतेर्नैराकाङ्क्ष्याभावात् चित्रतागुणस्य च

---

तस्याज्यस्य चोदकाविषयत्वं खादिरत्वस्येव स्यादित्याशयः। लोहितोष्णीषा इति। श्येनयागे इदं पठ्यते। तत्रोष्णीषस्य प्रकृतितः प्राप्तत्वेन लौहित्यमात्रे तस्य विधेः पर्यवसानं भवति। लाघवानुगृहीतात्प्राप्ताप्राप्तविवेकन्यायादिति भावः। न वा गुणेति। गुणविधायकं शास्त्रं गुणशास्त्रम्। विकृतौ प्रकृतितः प्राप्ते आज्यपानावेहत्यावाहनमन्त्रे पृषदाज्यपानित्येवमूहो न कार्यः। पृषदाज्येनानूयाजान्यजतीति शास्त्रस्य गुणविधायकत्वादिति सूत्रार्थः। उपहोमाद्यपूर्वाङ्गवदिति। अयं भावः। प्रकृतितश्चोदकेनाप्राप्तो विकृतौ विशेषतः पठ्यमानेन वचनेन कर्तव्यतया बोधितोऽर्थस्त्रिविधः। तत्राद्यः प्राकृताङ्गं किंचिदनुद्दिश्यैव विहितः। यथा नक्षत्रेष्टिसंनिधौ अग्नये स्वाहा कृत्तिकाभ्यः स्वाहेत्येवं विहिता उपहोमाः। प्राकृताङ्गं किंचिदनूद्य प्राकृतस्य कस्याप्यबाधेन विधीयमानो द्वितीयः। यथा पृषदाज्येनानूयाजान्यजतीत्यनेन विहितः पृषत्त्वगुणः। प्राकृताङ्गं किंचिदनूद्य प्राकृतपदार्थबाधपुरःसरं विधीयमानस्तृतीयः। यथौदुम्बरो यूपो भवतीत्यनेन प्राकृतयूपमनूद्य प्राकृतखादिरत्वं प्रबाध्य च विधीयमानमौदुम्बरत्वम्। त्रिविधा अप्येतेऽर्था विकृतौ पठ्यमाना विकृतौ विनियुज्यन्त एव। किंतु तत्र प्रथमः प्रकरणप्रमाणेन न विनियुज्यते। विकृतियागीयकथंभावाकाङ्क्षायां चोदकप्राप्तैः क्लृप्तोपकारैश्च प्राकृतैरङ्गैर्निवृत्तायां पश्चादेकया स्वीयलाभाकाङ्क्षयैव विकृतौ तस्य विनियोगात्। द्वितीयोऽप्येवमेव। तृतीयस्तु औदुम्बरत्वादिः प्रकरणप्रमाणेन विनियुज्यते। तथाहि। विकृतियागीया कथंभावाकाङ्क्षा हि प्रकृतिवदित्यतिदेशस्य व्यापारो यावत्कालपर्यन्तं सर्वथा न विरतस्तावन्न निवृत्ता भवति। प्राकृतपदार्थविषयीकरणमतिदेशस्य व्यापारः। विकृतियागे कथंभावाकाङ्क्षायां सत्यामयमतिदेश उपकार-

तावदेव विधानादुभयाकाङ्क्षासंभवात् प्रकरणविनियोगो भवेत् । न च तादृशः प्राकृतो गुणोऽस्ति । आज्यस्यानुयाजानां च चित्रतागुणात्प्रागेव विधानात् । तस्य तत्स्थानापन्नत्वाभावात् ।

न च आज्यपृष्ठभावेन यावत्प्राकृतं निर्गुणत्वमायाति तावदेवास्य विधानात्प्रकरणसंभव इति वाच्यम् । निर्गुणत्वस्याविहितत्वेन पाणिकण्डूयनवदनङ्गत्वादिकृतेस्तदाकाङ्क्षाऽभावात् । यथा हि ज्योतिष्टोमे दक्षिणादानसमये विहितकृष्णविषाणत्यागस्य द्विरात्रादिषु चोदकप्राप्तस्य प्रथमेऽह्नि अननुष्ठानम् । उत्तरेऽह्नि दक्षिणादानपूर्वकालीनैः पदार्थैः कृष्णविषाणकण्डूयनस्य शास्त्रविहि-

---

विशेषाननेकान्पुरस्कृत्य तत्तदुपकारपृष्ठभावेन क्रमश उपस्थिताननेकानर्थान् विषयीकरोति । उपकारप्रभृतिषु तत्तत्पृष्ठभावेनोपस्थितेष्वर्थेष्वन्त्यं पदार्थं विषयीकृत्य विरतव्यापारो भवति । किंतु तेषु पदार्थेषु विकृतिपठितेन विशेषवचनेन बाध्यमानो योऽर्थस्तत्पर्यन्तं गतोऽपि तद्बाधं समालोचयंस्तमविषयीकृत्यैव ततः परावृत्य विरतव्यापारो भवति । सर्वथा व्यापारविरामे च कथंभावाकाङ्क्षा निवर्तते । व्यापारविरामात्प्राग्बाधसमालोचनकाल एव यूपपृष्ठभावेनौदुम्बरत्वं संबध्यमानं कथंभावाकाङ्क्षायां विद्यमानायामेव संबध्यत इति युक्त एव तस्य तत्र प्रकरणप्रमाणेन विनियोग इति । पृषदाज्यविषये तु नैवम् । तत्र प्रकृतावाज्यस्य पृष्ठतः कस्यचिद्गुणस्याविधानेन चरममाज्यं विषयीकृत्यातिदेशस्य विरतव्यापारत्वेन कथंभावाकाङ्क्षाया निवृत्तत्वात् । पश्चात्तत्र स्वीयैकयैव भाव्याकाङ्क्षया संबध्यमानः पृषत्त्वगुणो न प्रकरणप्रमाणेन विनियुक्तो भवति । इदं चात्र बोध्यम् । केवलाऽदृष्टार्थं प्राकृताङ्गमनूद्य विकृतौ विशेषतः पठ्यमानेन वचनेन विधीयमानो योऽर्थः स विकृतौ विनियुक्तोऽपि न प्रकरणप्रमाणेन विनियुक्तो भवति । तत्र तादृशादृष्टविशेषयुताङ्गस्वरूपलाभेन तावतैव तदीयभाव्याकाङ्क्षाया निवर्तनादिति । निर्गुणत्वमिति । विहितगुणराहित्यमित्यर्थः । अविहितत्वेनेति । शास्त्रविहितस्यैव पदार्थस्याङ्गत्वं भवति नत्वविहितस्य कस्यचित् । प्रकृतिवदित्यतिदेशश्चाङ्गस्यैवोपस्थापक इति भावः । पाणिकण्डूयनवदिति दृष्टान्तं विशदयति-यथाहीति । कृष्णविषाणया कण्डूयते । नीतासु दक्षिणासु चात्वाले कृष्णविषाणां प्रास्यति ( तै. सं. ६।१।३।८ ) इति श्रूयते । यज्ञे नखेन कण्डूयनं निषिद्धमित्यतो यज्ञारम्भे दीक्षाकाले कृष्णविषाणापरिग्रहो विहितः । दक्षिणानयनोत्तरं चात्वाले तस्यास्त्यागश्च विहितः । एवं च ज्योतिष्टोमे दक्षिणानयनात्पूर्वं कृष्णविषाणया कण्डूयनं तदुत्तरं च हस्तेन कण्डूयनं भवति । तच्च द्वयमतिदेशेन द्विरात्रादिविकृतियागेषु प्राप्तम् । परंतु तत्र तयोरन्यतरस्य कस्याचिदगत्या बाधः

त्वेनापेक्षितत्वात् । ज्योतिष्टोमे च दक्षिणादानोत्तरकालं पाणिकण्डूयनं दृष्टमपि द्विरात्रादिषु प्रथमेऽह्नि अनुष्ठीयमानैर्दक्षिणादानोत्तरकालीनैः पदार्थैर्नापेक्ष्यते । तस्य प्रकृतावर्थसिद्धत्वेनाशास्त्रीयत्वादिति ।

एवं निर्गुणत्वस्याविहितत्वेन प्रकृतेस्तदपेक्षा नास्तीति । तस्मादुभयाकाङ्क्षाया असंभवात्पृषदाज्यस्य न प्रकरणविनियोगः संभवतीत्यलमतिविस्तरेण ।

तत्सिद्धं महाप्रकरणं प्रकृतावेव विनियोजकम् । विकृतौ तु यत्प्राकृतदृष्टार्थाङ्गानुवादेन विधीयते तस्य विनियोजकं न तु केवलं विधीयमानस्यापूर्वाङ्गस्येति । यत्तु विकृतावपि प्राकृतधर्मानुवादेन विधीयमानयोर्धर्मयोरन्तरालेऽपूर्वमन्यदङ्गं केवलं पठ्यते तदपि प्रकरणेन विनियुज्यते ।

यद्यपि विकृतेः कथंभावाकाङ्क्षा प्राकृतैरेवाङ्गैः शाम्यति तथापि यत्र

---

प्राप्तः । द्विरात्रादौ हि प्रथमेऽन्त्ये चाह्नि दक्षिणानयनं भवति । तत्र प्रथमेऽह्नि दक्षिणानयनोत्तरं विषाणात्यागे द्वितीयाद्यहःसु दक्षिणानयनात्प्राग्विषाणया कण्डूयनं चोदकप्राप्तमपि कर्तुमशक्यमिति तद्बाधः स्यात् । अतः प्रथमेऽह्नि दक्षिणानयनोत्तरमपि विषाणाया अत्याग एव । न च तद्दिन एव दक्षिणानयनोत्तरं हस्तेन कण्डूयनं चोदकप्राप्तमपि न स्यादिति तद्बाधः स्यादिति वाच्यम् । हस्तेन कण्डूयनस्य चोदकाविषयत्वात् । तद्धि विषाणात्यागे रागतः प्राप्तं न तु तच्छास्त्रेण विधीयते । अतस्तत्कर्माङ्गमेव न भवतीति कथं तदतिदेशो विषयीकुर्यात् । तथा च तदभावेऽपि न शास्त्रबाधो भवतीति बोध्यम् । अथ क्वचित्प्राकृताङ्गानुवादेन विधानाभावेऽपि प्रकरणप्रमाणेन विनियोगः संभवतीत्याह–यत्तु विकृताविति । तथापि यत्रेति । यत्र प्राकृताङ्गान्यनेकान्यनूद्यानेके धर्मा विधीयन्ते तत्र तादृशसर्वधर्मसंबन्धपर्यन्तं विकृतियागीया कथंभावाकाङ्क्षा न निवर्तते । अतस्तन्मध्ये पठितस्य कस्यचिदपूर्वस्याप्यर्थस्य जायमानः संबन्धः कथंभावाकाङ्क्षायां विद्यमानायामेव जायत इति तत्र प्रकरणप्रमाणं संभवतीति भावः । ननु विकृतियागीया कथंभावाकाङ्क्षा प्रकृतिवदित्यतिदेशानुसारिणी । अतिदेशश्चोपकारगृध्रभावेन क्रमश उपस्थितान्प्राकृताननेकार्थान्मालारूपेण विषयीकरोति । उपकाराणां बहुत्वाच्च बह्व्यो माला भवन्ति । तथा च विकृतौ प्राकृताङ्गमनूद्य विधीयमानयोर्धर्मयोर्मध्ये योऽपूर्वो धर्मः कश्चन पठ्यते स पूर्वां परां च कामपि मालां न स्पृशति । औदुम्बरत्वं तु खादिरत्वं प्रबाध्य तत्स्थानमाक्रम्य यूपगृध्रभावेन मालास्पर्शि भवति न तथा काचिदत्र युक्तिर्दृश्यते । तथा च मध्ये पठितस्या-

प्राकृताङ्गानुवादेन धर्मविधानं तत्र तद्विधानं यावद्भवति तावत्कथंभावाकाङ्क्षा न निवर्तते । अतो विकृतेराकाङ्क्षावत्त्वादन्तराले विहितस्याप्यपूर्वाङ्गस्य भाव्याकाङ्क्षासत्त्वाद्युक्तं तस्य प्रकरणाद्विकृत्यर्थत्वम् । यथामनहोमेषु । ते हि प्राकृताङ्गानुवादेन विधीयमानयोर्धर्मयोरन्तराले विधीयन्त इत्युक्तं तन्त्ररत्नादावित्यास्तां तावत् ।

---

पूर्वस्याङ्गस्य विकृतियागीयायां कथंभावाकाङ्क्षायां विद्यमानायां संबन्धो भवतीत्येव न तु तया कथंभावाकाङ्क्षया भवतीति कथं प्रकरणप्रमाणस्यात्रावसर इति चेन्न । प्रकृतिवदित्यतिदेशविषयीभूतमालास्यार्शिभ्यां विकृतियागीयकथंभावाकाङ्क्षया संबध्यमानाभ्यां पूर्वोत्तरपठिताभ्यां धर्माभ्यामात्मना सहैव मध्ये पठितस्य विकृतौ संबन्धाङ्गीकारात् । मध्ये पठितो ह्यर्थः संबन्धयोग्यश्चेदुभाभ्यामप्यनुग्राह्यो भवति । यथा देवदर्शनार्थं गच्छद्भ्यां मातापितृभ्यां स्वीयः पुत्रो देवदर्शनार्हः किंचेदानीमगृहीतोऽप्ययं पश्चादवश्यमागमिष्यत्येवेत्येवं संभावनाविषयीभूतश्च स्याच्चेत्स पुत्र आत्मना सहैव नीयते तद्वदित्याहुः । यथामनहोमेष्विति । तैत्तिरीयसंहितायां द्वितीयाष्टके तृतीयप्रपाठके नवमेनुवाके सांग्रहणीष्टिर्विहिता । मनसा परस्परमैकमत्येन सम्यक् स्वीकारः संग्रहणम् । तद्यस्यामिष्टावस्ति सा सांग्रहणी । अनयेष्ट्या यजमानस्य कुले भवास्तद्ग्रामस्थाश्च प्रौढा बालाश्च सर्वे पुरुषाः सर्वाः स्त्रियश्च वशे वर्तेन्त इति यावत् । तस्मिंश्चानुवाके प्रारम्भे ध्रुवोसि ( तै. सं. २।३।९।१ ) इत्यादयः परिधिमन्त्रा आम्नाताः । तत आमनमसि ( तै. सं. २।३।९।१ ) इत्यादय उपहोममन्त्राश्च आम्नाताः । ततो वैश्वदेवीं सांग्रहणीं निर्वपेद्ग्रामकामः ( तै. सं. २।३।९।२ ) इति सांग्रहणीष्टिविधिवाक्यम् । ततो ध्रुवोसि ध्रुवोऽहꣳ सजातेषु भूयासमिति परिधीन् परिदधाति ( तै. सं. २।३।९।३ ) इति प्राकृतं परिधिपरिधानमनूद्य तत्र चोदकप्राप्तान् गन्धर्वोसि इत्यादिमन्त्रान्प्रवाध्य तत्स्थाने ध्रुवोसीत्यादयो मन्त्रा विनियुक्ताः । तत आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति ( तै. सं. २।३।९।३ ) इत्येवमामनमसीत्यादिमन्त्राणां विनियोग उक्तः । एते चामनहोमा अत्रोपहोमा इत्युच्यन्ते । प्राकृतं किंचिदङ्गमनुद्दिश्य स्वातन्त्र्येणैव तद्विधानात् । एतेषां चोपहोमानामत्र प्राकृताङ्गानुवादेन विधीयमानयोर्धर्मयोरन्तराले विधानाभावेन न प्रकरणप्रमाणेन सांग्रहण्यां विनियोगः संभवति । तिस्र आहुतीर्जुहोतीत्येतदुत्तरं कस्यचित्प्राकृताङ्गानुवादेन विधीयमानस्य धर्मस्यादर्शनात् । किंतु विकृतिसंनिधिपाठेन पाठसादेश्यात्स्थानप्रमाणेन सांग्रहण्यां विनियोगः संभवत्येव । उक्तञ्च तथार्थसंग्रहे । कथं तर्ह्यत्र प्रकरणप्रमाणेन तेषां विनियोग उच्यत

फलभावनाया अन्तराले यदङ्गभावनायाः प्रकरणं तदवान्तरप्रकरणम् । तच्चाभिक्रमणादीनां प्रयाजादिषु विनियोजकम् । तच्च संदंशेन ज्ञायते । तदभावेऽविशेषात्सर्वेषां फलभावनाकथंभावेन ग्रहणात् ।

संदंशो नाम एकाङ्गानुवादेन विधीयमानयोरङ्गयोरन्तराले विहितत्वम् । यथाभिक्रमणम् । तद्धि 'समानयत उपभृतः' (तै. सं. २।६।१।२) इत्यादिना प्रयाजानुवादेन किंचिदङ्गं विधाय विधीयते । पश्चादपि प्रयाजानुवादेन यो वै प्रयाजानां मिथुनं वेद (तै. सं. २।६।१।४) इत्या-

---

इति चेदत्राहुः । शाखान्तरानुसंधानेनेदमुक्तम् । मैत्रायणीयशाखायां हि यत्प्रयाजानां पुरस्ताज्जुहुयाद्बहिरात्मानं सजातानां दध्यात् यदनुयाजानां परस्ताज्जुहुयात्स्वर्गं लोकमपक्रामेत् मध्ये जुहोति इति पठ्यते । आमनहोमाश्च नानुयाजस्थाने कर्तव्याः किंतु स्वातन्त्र्येणैवेति दशमाध्याये चतुर्थपादे पञ्चमाधिकरणे सिद्धान्तितं जैमिनिना । तत्र प्रयाजा अनुयाजा आमनहोमाश्चेति त्रिषु होमेषु सांग्रहण्यामनुष्ठेयेषु क्रमोऽत्र मैत्रायणीयशाखायां प्रदर्शितः । प्रयाजानां प्राथम्यमनुयाजानां चरमत्वं च प्रसाध्य तयोर्मध्ये आमनहोमा विहिताः । अतस्ते प्रकरणेन प्रमाणेन सांग्रहण्यङ्गभूता इति ज्ञायत इति । एवं तत्र फलभावनायाः (पृ. १३१ प. ३) इत्यादिना आस्तां तावत् (पृ. १४६ प. ५) इत्यन्तेन ग्रन्थेन महाप्रकरणं निरूप्याधुनावान्तरप्रकरणं लक्षयति–फलभावनाया इति । संदंशो नामेति । लोहकण्टकविद्धलोहशलाकाद्वयरूपः कश्चनपदार्थः संदंशशब्देन लोके उच्यते । महाराष्ट्रभाषायां सांडस इति प्रसिद्धः । अत्र तु साजात्यादुपचारः । तदभावे इति । अवान्तरप्रकरणस्य विनियोजकत्वाभावे दर्शपूर्णमासयागीयफलभावनायाः कथंभावाकाङ्क्षायां यथा प्रयाजानां संबन्धो भवति तथा प्रयाजमध्ये पठितस्याभिक्रमणस्य स्वातन्त्र्येण संबन्धः स्यादिति तस्य प्रयाजाङ्गत्वं न स्यादिति भावः । यथाभिक्रमणमिति । अभिक्रामं जुहोत्यभिजित्यै (तै. सं. २।६।१।४) इत्यत्राभिक्रमणं विधीयते । अभिक्रम्यादूरे स्थित्वा प्रथमं हुत्वा पादं पुरतः प्रक्षिप्य द्वितीयं जुहोति । एवं प्रतिप्रयाजमुत्तरोत्तरमाहवनीयसमीपदेशगमनं यत्तदेतदभिक्रमणम् । समानयत इति । चतुर्थप्रयाजार्थमौपभृतस्याज्यस्य जुह्वामानयनमत्र विधीयते । उपभृतो घृतपात्रविशेषात्सकाशाज्जुह्वां जुहूरूपपात्रविशेषे अर्धमाज्यं समानयेदिति तदर्थः । तेजःशब्दोऽत्र घृतवाची । एतद्घृतानयनरूपमेकं प्रयाजाङ्गं पूर्वमुक्तम् (तै. सं. २।६।१।२) । ततोऽभिक्रमणमुक्त्वा पश्चाद्यो वै प्रयाजानाम् (तै. सं. २।६।१।४) इत्यत्र मिथुन-

दिना किंचिदङ्गं विधीयते । अतः प्रयाजाङ्गमध्ये पठितमभिक्रमणं तदङ्गं भवति । तत्कथंभावाकाङ्क्षाया अशान्तेः । यथाहुः—

परप्रकरणस्थानामङ्गे श्रुत्यादिभिस्त्रिभिः ।
ज्ञाते पुनश्च तैरेव संदंशेन तदिष्यते ॥ (त.वा. ३।१।२४) इति।

न चाङ्गभावनायाः कथंभावाकाङ्क्षाऽभावात् कथं प्रयाजभावनाकथंभावेनाभिक्रमणं गृह्यते इति वाच्यम् । भावनासाम्येन सर्वत्र कथंभावाकाङ्क्षायाः सत्त्वात् । प्रयाजैरपूर्वं कृत्वा यागोपकारं भावयेदित्युक्ते यो नाम न जानाति प्रयाजैरपूर्वं कर्तुं तस्यास्त्येव कथंभावाकाङ्क्षा— कथमेभिरपूर्वं कर्तव्यमिति । सा च संदंशपतितैर्वाचनिकैः स्मार्तैश्चाचमनादिभिः शाम्यति ।

---

त्वेन ज्ञानरूपमङ्गान्तरमुक्तम् । समिधो बह्वीरिव यजति तनूनपातमेकमिव यजति तदेतान्मिथुनत्वेन भावनीयम् । लोके एकस्य पुरुषस्य बह्व्यः स्त्रियो भवन्ति । तत्साम्यादत्र मिथुनत्वोपचारः । तत्कथंभावेति । अभिक्रमणोत्तरपठितं यन्मिथुनत्वभावनारूपमङ्गं तत्संबन्धपर्यन्तं प्रयाजीयकथंभावाकाङ्क्षाया अनिवर्तनादित्यर्थः । यद्यपि तेषां प्रयाजशब्दपुरस्कारेण विहितत्वाच्छ्रुत्यैव तेषां प्रयाजाङ्गत्वं तथाप्याकाङ्क्षा तत्रावर्जनीयैव भवति । तथा चाकाङ्क्षायां सत्यां श्रुत्यादिप्रमाणत्रयान्यतमेन प्रमाणेन संबद्धानामङ्गानां मध्ये पठितस्य प्रकरणप्रमाणेन संबन्धो भवतीति भावः । तदेवाह–परप्रकरणस्थानामिति । दर्शपूर्णमाससंबन्धिनां प्रयाजाद्यङ्गानामेकस्मिन् घृतानयनरूपेऽङ्गे श्रुत्यादित्रयान्यतमप्रमाणेनाङ्गत्वेन बोधिते तथा पुनरन्यस्मिन्मिथुनभावनारूपेऽङ्गे श्रुत्यादित्रयान्यतमप्रमाणेन प्रयाजाङ्गत्वेन बोधिते तयोरङ्गत्वेन विनियुक्तयोर्द्वयोर्मध्ये पठितं संदंशपतितत्वात्प्रयाजाङ्गत्वेनेष्यत इत्यर्थः । कथंभावाकाङ्क्षाभावादिति । कथंभावाकाङ्क्षाया अभावादित्यर्थः । स्वर्गादिफले हि प्रधानभावनाया इति तत्र कथंभावाकाङ्क्षा भवतु नाम । अङ्गभावनायास्तु तादृशफलाभावेन तत्र नियमेन कथंभावाकाङ्क्षा न संभवति । किंचाङ्गभावनायाः कथंभावाकाङ्क्षा चेत्तत्र तया संबद्धाया अङ्गाङ्गभावनाया अपि पुनः कथंभावाकाङ्क्षायामनवस्था स्यादित्याशयः । भावनासाम्येनेति । भावनया हि स्वभावत एव कथंभावाकाङ्क्षोत्थाप्यते । स्वर्गादिफलज्ञानेन तु सा केवलं कुर्वद्रूपतां दधाति । कार्यकारिणी भवतीति यावत् । स्वर्गादिफलं चाङ्गभावनाया अपि परंपरया वर्तत एवेति बोध्यम् । सा चेति । अङ्गभूतकर्माणि यान्युक्तानि तत्र मध्ये किंचित्पठितमस्ति चेत्तत्संदंशपतितत्वात्कथंभावाकाङ्क्षया संबन्धनीयम् ।

तदभावे च स्वरूपनिष्पादनेन दर्विहोमन्यायेन निवर्तते । दर्विहोमेषु हि स्वरूपनिष्पादनातिरिक्तस्तथाव्यापारो न श्रूयते । नाप्यतिदेशेन तत्प्राप्तिः । यागीयानां धर्माणां तावन्नातिदेशः । यागत्वेन होमत्वेन वैलक्षण्यात् । नापि होमीयानाम् । कस्य होमस्य धर्मः कस्मिन् होमे प्रवर्तत इति विशेषनिर्णये प्रमाणाभावात् । अतो धर्मप्राप्त्यभावाद्दर्विहोमैरिष्टं भावयेत्कथमित्युत्पन्नाप्याकाङ्क्षा स्वरूपनिष्पादनेनैव शाम्यति । एवं येष्वङ्गेषु संदंशाद्यभावस्तत्रोत्पन्नाप्याकाङ्क्षा तेनैव निवर्तते । न तु सर्वथा तदभावः । तस्माद्युक्तमुक्तमभिक्रमणं प्रयाजाङ्गमिति ।

तच्चेदमवान्तरप्रकरणं महाप्रकरणाद्बलीयः । संदंशपतितानां धर्माणां कैमर्थ्याकाङ्क्षायां प्रधानापूर्वात्प्रयाजाद्यपूर्वस्य झटित्युपस्थितेरिति ।

---

अविरोधिस्मृतिप्रोक्तमाचमनादिकं च तथैव संबन्धनीयम् । एतादृशश्च संबन्धः क्वचिदेव । बाहुल्येन तु न सर्वत्र संदंशपठितं दृश्यते । नापि सर्वत्र स्मार्तमाचमनादिकमुपस्थितं भवति । नहि प्रोक्षति परिदधाति उत्पुनाति जुहोति बध्नाति अवहन्तीत्यादिषु प्रोक्षणादिकं कथमित्येवं कथंभावाकाङ्क्षायामुत्पन्नायां संदंशपठितं स्मार्तं वा किंचिदुपस्थाप्यते । किंतु तत्र प्रोक्षणादीनां स्वरूपं लोकत एवावगम्याकाङ्क्षा निवर्तनीया । तथा चानवस्थापि परिहृता भवतीति भावः । तदाह-<u>तदभावे चेति</u> । लोकतोवगतकर्मस्वरूपमात्रानुष्ठानं स्वरूपनिष्पादनम् । <u>दर्विहोमेष्विति</u> । दर्विहोमेति कर्मविशेषनामधेयमित्यष्टमाध्याये चतुर्थपादे निर्णीतम् । स्वाहाकारप्रदाना एकमन्त्रका जुहोतिचोदनाचोदिता दर्विहोमाः । तत्र कथं जुहोतीत्येवं कथंभावाकाङ्क्षोत्पद्यते । किं तु तत्र कस्य चिदितिकर्तव्यताविशेषस्याश्रवणादपूर्वत्वाच्चातिदेशेनापि इतिकर्तव्यताविशेषस्याज्ञानात्केवलं लोकत एव होमस्वरूपमवगम्य सा निवर्तनीया भवति । <u>वैलक्षण्यादिति</u> । यजतिचोदनाचोदितो यागः । जुहोतिचोदनाचोदितो होमः । परिभाषायां च तयोर्भेद एवं प्रतिपादितः । देवतोद्देशेन द्रव्यत्यागो यागशब्दार्थः । प्रक्षेपविशिष्टो यागो होमशब्दार्थ इति । <u>प्रमाणाभावादिति</u> । यद्येवमेवं होमः कार्य इत्येवं होमस्वरूपं क्वचिदुपदिष्टं स्यात्तर्हि ततस्तस्य स्वरूपविशेषस्यान्यत्रातिदेशेन प्राप्तिः स्यात् । न तु तथा क्वचिद्दृश्यत इति भावः । <u>संदंशाद्यभाव इति</u> । न मध्ये पठितं किंचित्तथा वाचनिकं किंचिन्नापि स्मार्तं किंचित् । एतादृशानि प्रोक्षणादीनि बहून्यङ्गभूतानि कर्माणि सन्ति । तत्र लोकत एव तत्स्वरूपं ज्ञात्वाकाङ्क्षा निवर्तत इति भावः । <u>झटित्युपस्थितेरिति</u> । संनिहिततरत्वेन प्रथमतस्तस्य बुद्ध्यारोहादिति

प्रकृतमनुसरामः । तत्सिद्धमुभयविधस्य प्रकरणस्य विनियोजकत्वम् ।

तदिदं स्थानादिप्रमाणाद्बलवत् । यत्र हि स्थानादङ्गत्वं तत्रान्यतरस्य प्रकरणान्तरेण निराकाङ्क्षत्वम् । न च साकाङ्क्षं निराकाङ्क्षेण संबन्द्धुं योग्यं विनाकाङ्क्षोत्थापनेन । अतश्चान्यतराकाङ्क्षया यावदुभयाकाङ्क्षारूपप्रकरणकल्पनद्वारा वाक्यादि कल्पयितुमारभ्यते झटिति तावत्प्रकरणेन वाक्यादिकं कल्पयित्वा विनियोगः क्रियते इति स्थानात्प्रकरणस्य बलीयस्त्वम् ।

अत एव विदेवनादयो धर्मा अभिषेचनीयसंनिधौ पठिता अपि नाभिषेचनीयस्याङ्गम् । तेषां तदङ्गत्वं भवत् स्थानाद्भवेत्, न तु प्रकरणात् । अभिषेचनीयस्याव्यक्तचोदनाचोदितत्वेन ज्योतिष्टोमविकारत्वात्प्राकृतैरेव धर्मैर्निराकाङ्क्षत्वात् । किंतु प्रकरणाद्राजसूयाङ्गम् ।

ननु 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यत्र राजसूयशब्द-

---

भावः । इत्थं प्रकरणप्रमाणं निरूप्येदानीं स्थानप्रमाणापेक्षया तस्य बलवत्त्वं युक्तिपुरःसरं दर्शयति–तदिदमिति । अतश्चान्यतरेति । यथा लोके स्वीयकन्यापरिणयं चिकीर्षन्देवदत्तादिरकन्यार्थी वरश्चेत्प्रथमतस्तत्र कन्यार्थितां समुत्पाद्यैव पश्चात्तस्मै कन्यां दित्सति नत्वन्यथा । स्वयमेव कन्यार्थी वरो लब्धश्चेन्नाकन्यार्थिनि कन्यार्थितासमुत्पादने प्रयतते तद्वत् । अत एवेति । राजसूयप्रकरणे इष्टयः पशुयागाः सोमयागाश्च बहवः समप्रधानभूताः पठ्यन्ते । तेषु च सोमयागविशेषः कश्चिदभिषेचनीयसंज्ञकः । तादृशाभिषेचनीयसंनिधौ अक्षैर्दीव्यति राजन्यं जिनाति शौनःशेपमाख्यातीत्येवं विदेवनादयो धर्माः पठ्यन्ते । विदेवनं क्रीडनम् । जिनाति जयति । तत्र राजसूये फलभावनायाः कथंभावाकाङ्क्षायां विदेवनादीनां च साध्याकाङ्क्षणादुभयाकाङ्क्षासत्त्वात्प्रकरणप्रमाणेन विदेवनादीनां समग्रराजसूयशेषत्वं नतु तदन्तर्गताभिषेचनीयमात्रशेषत्वम् । अभिषेचनीयस्य विकृतियागत्वेन तत्रत्यकथंभावाकाङ्क्षायाश्चोदकप्राप्तैः कॢप्तोपकारैः प्राकृतधर्मैर्निवृत्तत्वेनोभयाकाङ्क्षाया अभावेन प्रकरणप्रमाणासंभवात् । यद्यप्यभिषेचनीयसंनिधिपाठेन विदेवनादिधर्माणां स्थानप्रमाणेनाभिषेचनीयाङ्गत्वं संभवति तथापि स्थानप्रमाणापेक्षया प्रकरणप्रमाणस्य बलीयस्त्वान्नाभिषेचनीयमात्राङ्गत्वं तेषाम् । अव्यक्तचोदनेति । उत्पत्तिवाक्ये देवताया अनभिधानं चोदनाया अव्यक्तत्वम् । तेन च धर्मेणाभिषेचनीयस्य ज्योतिष्टोमस्याजात्यामिति ज्योतिष्टोमविकृतिरभिषेचनीय इति भावः ।

ननु राजेति । अयं भावः । राजसूयेनेका इष्टयो बहवः पशुयागाः सोम-

स्तावन्नामधेयत्वादाख्यातपरतन्त्रो यत्राख्यातं तत्रैव प्रवर्तते। न च दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र यथा दर्शपूर्णमासपदं नामधेयमपि नाख्यातपरतन्त्रम्। तत्र हि यजेतेत्याख्यातमविशेषात्सर्वानेव प्रकृतानाग्नेयादीन्प्रयाजादींश्चाभिधातुं समर्थम्। दर्शपूर्णमासपदं त्वाग्नेयादीनेव वदति न सर्वान्। अतश्च न तदाख्यातपरतन्त्रम्। तथा राजसूयपदमपि किं न स्यादिति वाच्यम्। प्रसिद्धेन हि पदेनाप्रसिद्धं निर्णीयते। यथाहुः—

---

यागाश्च पठिताः। तथा च तेषामनेकेषां संघ एव राजसूयो नतु तदतिरिक्तः कश्चन पदार्थः। यथाम्रवणमित्युक्ते आम्रा एव बहवः प्रतीयन्ते नतु तदतिरिक्तं किंचित्। तथा च तेष्वाम्रेषु सिक्तेषु न सेक्तव्यतयावशिष्यते किंचित्। तथा प्रकृते इष्टिपशुसोमयागेषु स्वस्वप्रकृतितश्चोदकप्राप्तेतिकर्तव्यताकेषु तावता राजसूयो निराकाङ्क्ष एवेति प्रकरणप्रमाणं न संभवति। इष्टीनां प्रकृतिश्च दर्शपूर्णमासः। पशुयागानां प्रकृतिश्चाग्नीषोमीयः। सोमयागानां प्रकृतिश्च ज्योतिष्टोम इति। ननु न राजसूयशब्द इष्टिपशुसोमयागसंघमात्रार्थकः। किंतु विदेवनादिधर्मसहितताहशसंघार्थकः। तथा चेष्टीनां पशुयागानां सोमयागानां चेतिकर्तव्यताविषये नैराकाङ्क्ष्येऽपि न राजसूयफलभावनाया नैराकाङ्क्ष्यमिति चेन्न। राजसूयशब्दस्योक्तार्थकत्वे प्रमाणाभावात्। राजसूयशब्दो हि कर्मविशेषनामधेयम्। स च कर्मविशेषः प्रत्यासत्त्या राजसूयविधिवाक्यीयाख्यातेनोक्त एव। तच्चाख्यातं यजेतेति। यजेतेत्यस्यार्थे चेष्टिपशुसोमयागानामन्तर्भावेऽपि तदतिरिक्तानां विदेवनादीनां तत्रान्तर्भावो न भवति। ननु कर्मनामधेयभूतः शब्दस्ताहशकर्मविधिवाक्यीयाख्यातेन समानार्थक एवेति न नियमः। दर्शपूर्णमासशब्दे ताहशनियमस्य व्यभिचारादित्याशयेनाह—नच दर्शेति। आग्नेयादीनिति। आग्नेय एकः। अग्नीषोमीयोपांशुयाजौ द्वौ। ऐन्द्रौ द्वौ। ऐन्द्राग्नश्चैक इत्येवं षट् प्रधानयागा दर्शपूर्णमाससंज्ञकाः। तदङ्गभूताः प्रयाजादयो यागाः। तत्र प्रधानभूता अङ्गभूताश्च सर्व एव तत्रत्या यागा यागत्वाविशेषाद्यजेतेत्याख्यातेनोच्यन्ते। दर्शपूर्णमासशब्दौ हि कालविशेषवाचकौ। ताहशं च कालं पुरस्कृत्य प्रधानयागाः षड्विहिता इति न दर्शपूर्णमासशब्देनाङ्गभूतानां प्रयाजादीनां ग्रहणं भवति।

प्रसिद्धेनेति। अयं भावः। कर्मनामधेयं तद्विधायकवाक्यीयाख्यातं च समानार्थकमिति सत्यमेव। यत्र भिन्नार्थकत्वं शब्दतोऽवभासते तत्रापि तयोः समानार्थकत्वं केनापि प्रकारेणोपपादनीयमेव। तत्र द्वयी विधा। नामधेयमाख्यातपरतन्त्रमित्याख्यातार्थानुसारेण नामधेयशब्दार्थो निर्णेय इत्येका।

पदमज्ञातसंदिग्धं प्रसिद्धैरपृथक्श्रुति ।
निर्णीयते निरूढं तु न स्वार्थादपनीयते ॥

( त. वा. १।४।२ )इति ।

दर्शपूर्णमासपदं च कालनिमित्तम् । तद्योगश्चाग्नेयादिपूत्पत्तिवाक्यैरवगतः । अतस्तद्वाचित्वेन दर्शपूर्णमासपदं प्रसिद्धम् । न च आग्नेयादीनां बहुत्वाद्-द्विवचनान्तत्वमस्यानुपपन्नमिति वाच्यम् । विद्वद्वाक्यद्वयसिद्धसमुदायद्वयाभिप्रायेण तदुपपत्तेः ।

एवं च दर्शपूर्णमासपदस्याग्नेयादिवाचित्वे निर्णीते यजेतेत्याख्यातमपि

---

तद्वैपरीत्येनाख्यातं नामधेयपरतन्त्रमिति नामधेयशब्दार्थानुसारेणाख्यातार्थो निर्णय इत्यपरा । तत्रेयं व्यवस्था । यद्याख्यातपारतन्त्र्यं विना स्वयमेव नामधेयशब्दो निर्णीतार्थो भवेत्तर्हि न तत्र तस्याख्यातपारतन्त्र्यम् । प्रत्युत नामधेयशब्दार्थानुसारेणैव तत्राख्यातार्थो निर्णयः । यदि तु नामधेयशब्दः स्वयं निर्णीतार्थो न भवति तर्हि तत्राख्यातार्थानुसारेणैव तदर्थो निर्णय इति । पदमज्ञातेति । अनिर्ज्ञातार्थकमत एव संदिग्धार्थकं यत्पदं तत्तद्वाक्यीयैः प्रसिद्धार्थकैः पदैः समानाधिकरणं चेत्तदर्थकमेव तदिति निर्णीयते । यत्तु प्रसिद्धार्थकं पदं तत्तु न कदापि स्वार्थाद्भ्रष्टं भवतीति वार्तिकार्थः ।

तद्योग इति । कालयोग इत्यर्थः । य एवं विद्वान् पौर्णमासीं यजते ( तै. सं. २।६।९।१ ) य एवं विद्वानमावास्यां यजते ( तै. सं. २।६।९।२ ) इत्येवं दर्शपूर्णमासरूपं कालविशेषं पुरस्कृत्य तयोर्विधानात् । तथा च कालविशेषवाचित्वेन प्रसिद्धौ दर्शपूर्णमासशब्दाविति तयोः कर्मनामधेयत्वे तादृशकालविशेषपुरस्कारेण विहितं यत्कर्म तन्नामधेयत्वमेव तस्योचितमिति न दर्शपूर्णमासशब्दार्थे आख्यातार्थानुसारेण निर्णयो भवतीति भावः । नचाग्नेयादीनामिति । दर्शपूर्णमासशब्दस्य यागषट्कार्थत्वे दर्शपूर्णमासाभ्यां स्वर्गकामो यजेतेत्यत्र दर्शपूर्णमासाभ्यामिति द्विवचनं नोपपद्यते । किंतु तत्र दर्शपूर्णमासैरिति वक्तव्यं भवतीत्याशयः । विद्वद्वाक्येति । य एवं विद्वान्पौर्णमासीं यजते य एवं विद्वानमावास्यां यजत इत्युक्तं वाक्यद्वयं विद्वच्छब्दघटितत्वाद्विद्वद्वाक्यद्वयमित्युच्यते । तत्र चैवंशब्दद्वयेन प्रत्येकं पूर्वोक्तयागषट्कान्तर्गतं यागत्रयं परामृश्यते । षट्सु च यागेषु त्रिकद्वयमित्येकस्य त्रिकस्य दर्शसंज्ञा अपरस्य च पूर्णमाससंज्ञेति द्विवचनोपपत्तिरिति भावः । एवं चेति । प्रधानभूतयागषट्कमात्रवाचिदर्शपूर्णमासशब्दानुरोधेन यजेतेत्याख्यातमपि याग-

तानेव वदति । नहि तदुक्तौ स्वार्थत्यागो भवति । राजसूयपदं त्वनिर्णीतार्थम् । अतस्तदाख्यातपरतन्त्रमेव । तच्चाविशेषात्सर्वेषु इष्टिपशुसोमेषु विद्यते । तत्पर-तन्त्रत्वाद्राजसूयपदमपि तानेव वदति ।

न च राजसूयशब्दस्य राज्ञा सूयते यत्रेति व्युत्पत्त्या सोमाभिषव-निमित्तत्वात्तस्य च सोममभिषुणोतीति वाक्येन सोमयागेऽवगतत्वात्तद्वाचित्वमेव नेष्टिपशुवाचित्वमिति वाच्यम् । न ह्यभिषेचनीयादिसोमयागेष्वभिषवः प्रत्यक्षेण वाक्येन चोदितोऽस्ति । तद्वाक्यस्य ज्योतिष्टोमेऽसत्त्वात् । अतिदेशात्तत्संबन्धोऽवगत इति चेन्न । अतिदेशस्य फलसंबन्धोत्तरकालीनत्वेन राजसूयेन स्वाराज्यकामो यजेतेत्येतद्वाक्यार्थावगत्युत्तरकालीनत्वात् । अनेन हि वाक्येन फल-संबन्धे बोधिते पश्चात्कथंभावाकाङ्क्षायामतिदेशकल्पनात् । अतस्ततः प्रागेव एतद्वाक्यार्थो वर्णनीयः । तदा चाभिषवस्यानवगतत्वाद्राजसूयपदमप्रसिद्धार्थ-मेव । अत एव राजसूयपदमव्युत्पन्नमश्वकर्णशब्दवदित्युक्तं सांप्रदायिकैः ।

---

पदकमात्रवाचकमेव नतु प्रयाजादिवाचकमिति भावः । नहि तदुक्ताविति । यजेतेत्यनेन यागपदकमात्रोक्तावपि न यजधात्वर्थः परित्यक्तो भवतीत्यर्थः । तानेव वदतीति । नतु तद्व्यतिरिक्तः कश्चन राजसूयशब्दार्थ इति भावः । तथाचेष्टिपशुसोमानां चोदकप्राप्तेतिकर्तव्यतया निराकाङ्क्षत्वाच्च राजसूय-नामकः कश्चन कर्मविशेष इतिकर्तव्यतायां साकाङ्क्ष इति प्रकरणप्रमाणेन विदेवनादीनां तत्र विनियोगो न संभवतीति भावः । न च राजसूयेति । राज्ञा सूयते कण्ड्यते सोमो यत्रेति राजसूय इति व्युत्पत्त्या राजसूयशब्दः सोमयागमात्रार्थको नेष्टिपशुसोमसंघवाचीति शङ्काशयः । प्रासङ्गिकी शङ्केयम् । नत्वनया विदेवनादीनां धर्माणां राजसूयाङ्गत्वे विनियोजकस्य प्रकरणप्रमाणस्य समर्थनं भवति । समाधत्ते–नह्यभिषेचनीयादीति । अयं भावः । राजसूयप्रकरणेऽनेका इष्टयो बहवः पशुयागा बहवः सोमयागाश्च पठिताः । ते सर्वे राजसूयपदेनोच्यन्ते नतु तदन्तर्गताः केवलं सोमयागा एव । यद्यपि राज्ञा सूयते सोमो यत्रेति व्युत्पत्त्या सोमाभिषवरूपं राजसूय-शब्दस्य प्रवृत्तिनिमित्तं लभ्यते तच्च सोमयागेष्वेव नत्विष्टिषु नापि पशुयागेषु तथापि न तद्राजसूयशब्दार्थनिश्चयकाले ज्ञायते । यतो राजसूयप्रकरणे येऽभिषेचनीयादयः सोमयागाः पठितास्तत्र न सोमाभिषव उक्तः । स च तत्प्रकृतिभूताज्ज्योतिष्टोमाच्चोदकेन तत्राधिगन्तव्यः । ज्योतिष्टोमे हि सोमाभिषव उक्तः । अतिदेशश्च कथंभावाकाङ्क्षोत्तरमनुसंधीयते । कथंभावा-

एवं चाप्रसिद्धार्थत्वेनाख्यातपरतन्त्रत्वाद्राजसूयपदेनेष्टिपशुसोमयागा उच्यन्ते। ते च तैस्तैः प्राकृतैर्धर्मैर्निराकाङ्क्षा इति न प्रकरणं विदेवनादीनां राजसूये विनियोजकम्। उभयाकाङ्क्षाया अभावात्। नच प्रातिस्विकरूपैर्नैराकाङ्क्ष्येऽपि न राजसूयत्वेन रूपेण नैराकाङ्क्ष्यमिति वाच्यम्। आकाङ्क्षाद्वये प्रमाणाभावात्।

किंच प्रातिस्विकरूपैर्या कथंभावाकाङ्क्षा सापि फलसंबन्धोत्तरकालम्। स च राजसूयत्वेन न तु प्रातिस्विकरूपैः। राजसूयत्वेन च फलसंबन्धे उत्पन्नायाः कथंभावाकाङ्क्षाया विदेवनादिभिः शान्तेरतिदेशकल्पनमेव न स्यात्।

---

काङ्क्षा च फलाकाङ्क्षिण एव फलज्ञानोत्तरं फलप्राप्त्यर्थं यतमानस्य भवति। फलज्ञानं च तत्रत्यानामभिषेचनीयादीनां सोमयागानां राजसूयपदवाच्यत्वज्ञानोत्तरम्। स्वाराज्यकामो राजसूयेन यजेतेत्यत्र राजसूयपदबोधितस्य कर्मणः स्वाराज्यरूपफलसंबन्धावगमात्। तथा चादौ राजसूयपदार्थो निर्णेयः। तत्काले च सोमयागेषु वस्तुतो विद्यमानस्यापि सोमाभिषवस्याज्ञानात्केवलं राजसूयशब्दार्थस्तत्रत्ययजेतेत्याख्यातानुसारेणैव वर्णनीयः। यजेतेत्याख्यातेन च यागत्वाविशेषात्तत्रत्यप्रकरणपठिता इष्टयः पशुयागाः सोमयागाश्चेति त्रिविधा अपि संगृह्यन्ते। तथा च त्रिविधा अपि राजसूयपदवाच्या भवन्ति नतु केवलं सोमयागा एवेति। तथाचागत्या राजसूयशब्दो रूढ एव स्वीकार्यो भवति नतु यौगिकः। यथाश्वकर्णशब्दो वृक्षविशेषे रूढस्तद्वदिति।

नच प्रातिस्विकेति। प्रतिस्वं भवानि प्रातिस्विकानि तत्तदसाधारणानीष्टित्वादीनि त्रीणि रूपाणि। तैश्च रूपैस्तेषां नैराकाङ्क्ष्यं नतु राजसूयत्वेन। इष्टिः कथं कार्या पशुयागश्च कथं कार्यः सोमयागश्च कथं कार्य इत्येवमुत्पन्नानां तिसृणामाकाङ्क्षाणां तत्तत्प्रकृतितश्चोदकप्राप्तैर्धर्मैर्निवृत्तिर्भवति। परंत्विष्टिपशुसोमयागानां संघीभूतो यो राजसूयस्तस्य कथंभावाकाङ्क्षा न निवृत्तेति सा तत्र पठितैर्विदेवनादिभिर्धर्मैर्निवर्तनीयेति प्रकरणप्रमाणमत्र संभवतीत्याशयः। प्रमाणाभावादिति। समुदायो ह्यवयवापेक्षया नातिरिक्त इति प्रागेवोक्तम् (पृ.१५१प.७)। तथा च यथा ब्राह्मणान्भोजयेत्युक्ते प्रत्येकं वाक्यपरिसमाप्तिरिति प्रत्येकं भोजनस्य पर्याप्तौ तावतैव निदेशः परिपालितो भवति, नतु तत्र समुदायः कश्चनान्यो भोज्यो भवति तद्वत्। एवं च प्रातिस्विकरूपेण याकाङ्क्षा सैव राजसूयत्वेनाकाङ्क्षा नत्वन्येति भावः। किंच प्रातिस्विकेति। अयं भावः। कथंभावाकाङ्क्षा हि फलज्ञानोत्तरमेव फलेप्सोर्भवति। फलज्ञानं च राजसूयत्वेन कर्मावगम पश्चात्र भवति।

यदि हि सामान्यरूपेण प्रातिस्विकरूपेण च फलसंबन्धविधायि वाक्यद्वयं भवेत्तदा युज्येतापि आकाङ्क्षाद्वयानुसारेण विदेवनादीनामातिदेशिकानां चाङ्गानां संबन्धः। न तु तदस्ति। तस्मात् प्राकृतैर्धर्मैर्नैराकाङ्क्ष्यान्न विदेवनादीनां प्रकरणं विनियोजकमिति चेत्—

सत्यम्। अत एव सांप्रदायिकैर्विदेवनादीनां संदंशो दर्शितः। राजसूयत्वपुरस्कारेण ये धर्मा विधीयन्ते 'राजसूयाय ह्येना उत्पुनाति' (तै. ब्रा.

---

स्वाराज्यकामो राजसूयेनेत्युक्तेः। तथा च कथंभावाकाङ्क्षा प्रथमतो राजसूयत्वेनैवोत्पद्यते राजसूयः कथं कार्य इति। सा च प्रकृतिवदित्यतिदेशेन न निवर्तयितुं शक्या। राजसूयस्वरूपस्य सामान्यतोऽप्यज्ञातत्वेन तस्येदृशी प्रकृतिरिति ज्ञातुमशक्यत्वात्। तथा चाक्लृप्तोपकारैरपि प्रकरणपठितैरेव सा निवर्तनीया। सा च न प्रकरणपठितैरपीष्ट्यादिभिर्निवर्तयितुमर्हति। इष्ट्यादीनां स्वरूपानवबोधात्। लोकतस्तावत्तेषां स्वरूपं नावगम्यते। नापि शास्त्रतः। इष्ट्यादीनां स्वतन्त्रफलादेशेन प्रातिस्विकरूपेण कथंभावाकाङ्क्षाया अभावादतिदेशाप्राप्तेः। तथा च सा प्रकरणपठितैर्लोकावगतस्वरूपैर्विदेवनादिभिरक्लृप्तोपकारैरपि शान्तिं नेया। तथा सति तावन्मात्रानुष्ठानेनैव फलप्राप्तिसंभवे तत्र पठितानामिष्ट्यादीनां स्वरूपावबोधाय प्रकृतिवदित्यतिदेशकल्पनमेव तत्र न स्यात्। अथ माऽस्त्वतिदेशकल्पनम्। अस्तु च विदेवनादिभिरेव केवलमनुष्ठितै राजसूयफलप्राप्तिः। कस्तत्र भवतो मत्सर इति चेन्न कश्चिदपि तत्र मे मत्सरः। दोषस्तु भवति। प्रकरणपठितानामिष्ट्यादीनां नैरर्थक्यापत्तेः। तथा च तत्सार्थक्याय क्रमेण ते सर्वे संबन्धनीयाः। ते च प्रकरणपठिता इष्टयः पशुयागाः सोमयागाश्च कथंभावाकाङ्क्षया संबध्यमाना यद्यपि स्वरूपानवबोधेन न कथंभावाकाङ्क्षां निवर्तयितुमर्हन्ति तथापि तयैव कथंभावाकाङ्क्षया तत्रातिदेशं प्रवर्त्येष्ट्यादीनां स्वरूपावबोधः संपादनीयः। इष्ट्यादीनां प्रातिस्विकरूपेण फलादर्शनेऽपि प्रथमतो राजसूयत्वेनोत्पन्ना या कथंभावाकाङ्क्षा सैवेष्ट्यादित्वेन कथंभावाकाङ्क्षायां पर्यवस्यतीति यावत्। तथा चातिदेशेनेष्ट्यादीनां स्वरूपावगमे तत्र क्लृप्तोपकारैः पदार्थै राजसूयकथंभावाकाङ्क्षाया निवृत्तत्वेन तत्र पठितानामपि विदेवनादीनां धर्माणामक्लृप्तोपकाराणां न प्रकरणप्रमाणेन राजसूये संबन्धो भवितुमर्हति।

<u>अत एवेति</u>। यतश्च विदेवनादीनां धर्माणां राजसूये विनियोगे उभयाकाङ्क्षा न संभवत्यतोऽत्र सांप्रदायिकैः संदंशं प्रदर्श्य प्रकरणप्रमाणं समर्थितमित्यर्थः। <u>राजसूयायेति</u>। एना इत्यनेन पूर्वोक्तानामपां परामर्शः।

१।७।६ ) इत्येवमादयस्तन्मध्ये विदेवनादयः पठ्यन्ते । अतस्ते सर्वे राजसूयाङ्गम् । प्रयाजानुवादेन विधीयमानधर्ममध्ये पठितप्रयाजाङ्गाभिक्रमणवत् । तस्माद्युक्तमुक्तं विदेवनादीनां प्रकरणाद्राजसूयाङ्गत्वमिति । तत्सिद्धं प्रकरणस्य स्थानाद्बलीयस्त्वमिति ।

देशसामान्यं स्थानम् । तच्च द्विविधम् । पाठसादेश्यमनुष्ठानसादेश्यं चेति । यथाहुः—

तत्र क्रमो द्विधैवेष्टो देशसामान्यलक्षणः ।

पाठानुष्ठानसादेश्याद्विनियोगस्य कारणम् ॥ (त. वा. ३।३।५) इति । स्थानं क्रमश्चेत्यनर्थान्तरम् । पाठसादेश्यमपि द्विविधम् । यथासंख्यपाठः

---

अत्रापामुत्पवनं विधीयते । तच्च राजसूयशब्दपुरस्कारेण विहितत्वाच्छ्रुत्यैव राजसूयाङ्गम् । एताहशानां राजसूयाङ्गानां मध्ये विदेवनादयः पठ्यन्त इति परप्रकरणस्थानाम् ( पृ. १४८ प. २ ) इति पूर्वोक्तवार्तिकप्रदर्शितसंदंशन्यायेन विदेवनादयोपि राजसूयाङ्गत्वं प्रकरणप्रमाणेन प्राप्नुवन्तीत्यर्थः । अनेकेषामङ्गानामनेकप्रमाणैरेकनिरूपितमङ्गत्वं तु भवत्येव विरोधाभावादिति भावः ।

अथ क्रमप्राप्तं पञ्चमं स्थानप्रमाणं लक्षयति- देशसामान्यं स्थानम् इत्यादिना स्थानविनियोगः ( पृ. १५१ प. ८ ) इत्यन्तेन । देशसामान्यं समानदेशत्वम् । समानदेशपठितयोरङ्गाङ्गिभावयोग्ययोर्द्वयोः पदार्थयोः समानदेशपठनादेव मिथोऽङ्गाङ्गिभावो भवतीत्यर्थः । पाठसादेश्यमिति । सादेश्यं समानदेशत्वम् । द्वयोः पाठस्थानं संख्यया तुल्यं चेदनुवाकादिभेदेपि तयोः समानदेशत्वं भवति । किंचैकस्मिन्नेवानुवाकादौ द्वयोः पाठश्चेत्तयोः समानदेशत्वं भवति । अनुष्ठानसादेश्यमिति । द्वयोरेकस्मिन्ननुवाकादौ पाठाभावेपि तथा संख्यया तुल्ये स्थाने पाठाभावेपि यदि तयोर्द्वयोरनुष्ठानं केनचिद्धेतुनैकस्मिन्नेव दिनादौ कर्तव्यतया प्राप्तं चेत्तयोरपि समानदेशत्वं भवति । देशपदेनानुष्ठानकालस्य ग्रहणात् । पाठसादेश्येपि च न देशपदेन भूम्यादिर्देशो ग्रहीतुं शक्यः । किंतूच्चारणकाल एवेति बोध्यम् । अत्रार्थे वार्तिकोक्तिं प्रमाणयति-तत्र क्रम इति । क्रमः स्थानप्रमाणम् । विनियोगस्य कारणीभूतं देशसामान्यरूपं यत्स्थानप्रमाणं तत्पाठसादेश्यादनुष्ठानसादेश्याच्चेति द्विधैवेष्टमित्यर्थः । अनर्थान्तरमिति । अन्योर्थोर्थान्तरम् । न अर्थान्तरमनर्थान्तरम् । पर्याय इति यावत् । वार्तिकस्थक्रमशब्दः स्थानवाचीति भावः ।

संनिधिपाठश्चेति । तत्र ऐन्द्राग्नमेकादशकपालं निर्वपेत्, वैश्वानरं द्वादशकपालं निर्वपेत् ( मै. सं. २।१।१,२ ) इत्येवं क्रमविहितेष्टिषु इन्द्राग्नी रोचना दिवः ( मै. सं. ४।११।१ ) इत्यादीनां याज्यानुवाक्यामन्त्राणां यथासंख्यं प्रथमस्य प्रथमं द्वितीयस्य द्वितीयमित्येवं यो विनियोगः स यथासंख्यपाठात् । प्रथमपठितमन्त्रस्य हि कैमर्थ्याकाङ्क्षायां प्रथमतो विहितं कर्मैव प्रथममुपतिष्ठते । समानदेशत्वात् ।

यानि तु वैकृतान्यङ्गानि प्राकृताङ्गाननुवादेन विहितानि संदंशापतितानि तेषां विकृत्यर्थत्वं संनिधिपाठात् । तेषां हि कैमर्थ्याकाङ्क्षायां फलवद्विकृत्यपूर्वमेव भाव्यत्वेन संबध्यते । उपस्थितत्वात् । अत एव तेषु न विश्वजिन्न्यायावतारः । स्वतन्त्रफलार्थत्वे विकृतिसंनिधिपाठानर्थक्यापत्तेश्च ।

पशुधर्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्यात् । औपवसथ्येऽह्नि अग्नीषोमीयः पशुरनुष्ठीयते । तस्मिन्नेव दिने ते धर्माः पठ्यन्ते । अतस्तेषां कैमर्थ्याकाङ्क्षायामनुष्ठेयत्वेनोपस्थितं पश्वपूर्वमेव भाव्यत्वेन संबध्यते । अतो युक्तमनुष्ठानसादेश्यात्तदर्थत्वं तेषाम् ।

---

यथासंख्यपाठमुदाहरति- तत्रैन्द्राग्नमिति । मैत्रायणीयशाखायां काम्येष्टिकाण्डे ऐन्द्राग्नमित्यादय इष्टयः क्रमेणोक्ताः । तत्रैव च काम्येष्टियाज्यापुरोनुवाक्याकाण्डे याज्यामन्त्रः पुरोनुवाक्यामन्त्रश्चेत्येवं मन्त्रयुग्ममेकस्यामिष्टावित्येवं मन्त्रयुग्मानि निर्दिष्टानि । तत्र प्रथमं मन्त्रयुग्मं प्रथमेष्टौ द्वितीयं मन्त्रयुग्मं द्वितीयेष्टावित्येवं क्रमेण मन्त्राणां विनियोगो भवति ।

समानदेशत्वादिति । संख्यया देशस्य तुल्यत्वादित्यर्थः । संनिधिपाठमुदाहरति-यानित्विति । यथामनहोमानां सांग्रहणीष्टौ विनियोगः । एतच्च प्रागुपपादितम् (पृ. १४६ प.२१) । प्राकृताङ्गानुवादेन विहितानामौदुम्बरत्वादीनां प्रकरणप्रमाणेन विनियोगो भवति । तथा संदंशपतितानां विदेवनादीनां प्रकरणप्रमाणेन विनियोगो भवति । अतोत्र प्राकृताङ्गाननुवादेनेति संदंशापतितानीति चोक्तम् । अत एवेति । उपस्थितत्वादेवेत्यर्थः । विश्वजिन्न्याये ह्यनुपस्थितस्य स्वर्गस्य फलत्वकल्पनम् । उपस्थितं परित्यज्यानुपस्थितकल्पना च न कदापि न्याय्या भवतीति भावः । अनुष्ठानसादेश्यमुदाहरति- पशुधर्माणामिति । पशुधर्मा उपाकरणादयः । प्रजापतेर्जायमानाः ( तै. सं. ३।१।५ ) इत्यादिमन्त्रोच्चारणपूर्वकं पशोरुपस्पर्शनमुपाकरणम् । दर्भज्वालयार्चिःप्रदक्षिणीकरणं पर्यग्निकरणम् । यूपे रज्ज्वा बन्धनं यूपनियोजनम् ।

न च पाठसादेश्यादेव तत्किं न स्यादिति वाच्यम् । अग्नीषोमीयस्य पशोः क्रयसंनिधौ पाठात् । न च क्रयसंनिधौ तस्य पाठे तदनुष्ठानमपि तत्र स्यादिति वाच्यम् । 'स एष द्विदेवत्यः पशुरौपवसथ्येऽह्नि आलब्धव्यः' इति वचनात्तदनुपपत्तेः । न च स्थानात्प्रकरणस्य बलीयस्त्वेन पशुधर्माणां ज्योतिष्टोमार्थत्वमेव किं न स्यादिति वाच्यम् । तस्य सोमयागत्वेन पशुधर्मग्रहणेऽयोग्यत्वात् । अतः 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति

---

ज्योतिष्टोमप्रकरणे महादीक्षादिनतश्चतुर्थे औपवसथ्यसंज्ञके दिवसेनुष्ठेयत्वेन यद्धर्मजातमुक्तं तत्रैते पशुधर्माः पठ्यन्ते । अतस्तस्मिन्नेव दिने तेनुष्ठेया भवन्ति । तथा दीक्षणीयोत्तरदिनेनुष्ठेयत्वेन यद्धर्मजातमुक्तं तत्र सोमं क्रीणातीति सोमक्रय उक्तः । तत्रैव चाग्नीषोमीयपश्वालम्भनमुच्यते । तत्र सोमक्रयस्तस्मिन्नेव दिने क्रियते । परंतु तत्रैव तत्संनिधावुक्तमपि पश्वालम्भनं तत्र न क्रियते । किंत्वौपवसथ्यसंज्ञके चतुर्थदिने क्रियते । स एव द्विदैवत्यः पशुरौपवसथ्येह्नि आलब्धव्य इत्येवं तस्य विशेषतः कालविधानात् । अग्निः सोमश्चेति देवताद्वयमुद्दिश्य क्रियमाणः पशुर्द्विदैवत्यो भवति । तथाचैकस्मिन्नेव चतुर्थे दिने पशूपाकरणादयः पशुधर्माः पश्वालम्भनं चानुष्ठीयत इत्यनुष्ठानतो देशसाम्यात्पशूपाकरणादीनां धर्माणां पश्वङ्गतया साक्षात्पश्वपूर्वोपकारकत्वमेव न तु साक्षात्प्रधानभूतज्योतिष्टोमापूर्वोपकारकत्वम् । ज्योतिष्टोमे तेषां स्वातन्त्र्येण संबन्धाभावादिति भावः । न च स्थानात्प्रकरणस्येति । पशुधर्माणां भाव्याकाङ्क्षायाः सत्त्वेन ज्योतिष्टोमस्य कथंभावाकाङ्क्षायास्तत्र पठिततदङ्गसंबन्धपर्यन्तं सत्त्वेन चोभयाकाङ्क्षायाः सत्त्वादिति भावः । तस्य सोमयागत्वेनेति । ज्योतिष्टोमो हि सोमयागः । तत्र तदङ्गत्वेनाग्नीषोमीयसवनीयानुबन्ध्यास्त्रयः पशुयागा भवन्ति । तथा च पशुधर्माणां पशुयागाङ्गत्वमप्राप्य स्वातन्त्र्येण ज्योतिष्टोमाङ्गत्वं नैव संभवति । पशुव्यतिरिक्तेषु पशुधर्मानुष्ठानानुपपत्तेः । तथाचेदृशे विषये बलीयोपि प्रकरणप्रमाणं कुण्ठितं भवतीत्यालोच्य स्थानप्रमाणेनाग्नीषोमीयार्थत्वं पशुधर्माणां सिद्धम् । यथा स्मृतिपुराणापेक्षया बलीयस्यपि श्रुतिरनधिकारादयोग्ये शूद्रे कर्मानुष्ठातरि प्रयुज्यमाना चेन्नार्थवती भवति । तथा च तत्रानर्थक्येन प्रतिहतायां तस्यां स्मृतिपुराणानां तत्र प्रवेशस्तद्वत् । न चैवं पशुधर्माणामग्नीषोमीयार्थत्वे सवनीयानुबन्ध्ययोः कथं तत्प्राप्तिरिति वाच्यम् । तयोरग्नीषोमीयविकृतित्वेन चोदकेन तत्र तत्प्राप्तेरदोषात् । आनर्थक्येति । तथा च लौकिकी गाथा—

बलवाननर्थकारी चेदबलानां प्रवेशसौलभ्यम् ।
शोकप्रोज्झितशस्त्रो धृष्टद्युम्नेन घातितो द्रोणः ॥ इति ।

न्यायात् स्थानात्पशुयागार्थत्वमेव धर्माणां युक्तम्।

न च तेषां तदर्थत्वं प्रकरणादेव किं न स्यादिति वाच्यम्। अग्नीषोमीयकथंभावाकाङ्क्षायाः क्लृप्तोपकारैः प्राकृतधर्मैरेवोपशान्तत्वात्। स हि सांनाय्ययागप्रकृतिकः। उभयोः पशुप्रभवद्रव्यत्वसामान्यात्। तदुक्तं— 'सांनाय्यं वा तत्प्रभवत्वात्' (जै. सू. ८।२।१३) इति। सांनाय्यं दधिपयसी। तत्र पशुयागः पयोयागप्रकृतिकः। साक्षात्पशुप्रभवत्वात्। अतश्चोदकप्राप्तैस्तद्धर्मैर्निराकाङ्क्षत्वान्न पशुयागे धर्माणां प्रकरणं विनियोजकम्। किंतु स्थानमेव। तदेवं निरूपितः संक्षेपतः स्थानविनियोगः।

---

अत्रानर्थकारीत्यस्यानर्थं करोतीति नार्थः। किन्त्वर्थं न करोतीति। उत्तरार्धानुरोधात्। तेषां तदर्थत्वमिति। पशुधर्माणामग्नीषोमीयार्थत्वमनुष्ठानसादेश्येन स्थानप्रमाणाद्भवतीति यदुच्यते तदेव प्रकरणप्रमाणादिति वक्तव्यम् बलीयसः प्रमाणस्य संभवे दुर्बलप्रमाणप्रदर्शनस्यायुक्तत्वात् इत्याशयः। अग्नीषोमीयेति। अग्नीषोमीयपशुयागो हीतरपशुयागानां प्रकृतिभूतोऽपि स्वयं सांनाय्ययागस्य विकृतिरेव। तथा च पशुधर्मा अग्नीषोमीयादन्यत्रातिदिश्यन्ते। इतरे च सर्वे धर्माः सांनाय्ययागादग्नीषोमीयेऽतिदिश्यन्ते। तथा चाग्नीषोमीयकथंभावाकाङ्क्षा प्रकृतितः प्राप्तैः क्लृप्तोपकारैरितरधर्मैरेव निवर्तते न तु पशुधर्मसंबन्धपर्यन्तमवतिष्ठते। तेषामक्लृप्तोपकारत्वात्। पशुधर्माणामसंबन्धेऽपि चोदकप्राप्तैः क्लृप्तोपकारैर्धर्मैरेवाग्नीषोमीयानुष्ठानसंभवात्। एवमग्नीषोमीयस्य नैराकाङ्क्ष्ये पश्चात्तत्र पशुधर्माणां भवन्संबन्धः स्थानप्रमाणादेवेति भावः। सांनाय्ययागेति। सम्यङ्नीयते होमार्थमग्निं प्रतीति सांनाय्यं दधि पयश्च। तादृशं यत्र हविः स सांनाय्ययागः। जैमिनिनाष्टमाध्याये द्वितीयपादे द्वितीयाधिकरण इत्थं सिद्धान्तितम्। अग्नीषोमीयपशुयागस्य प्रकृतिः किमग्नीषोमीयः पुरोडाश उत सांनाय्ययागः। आद्ये देवतासाम्यम्। अग्निः सोमश्चेति देवताद्वयं पुरोडाशे पशौ च। अन्त्ये हविःसाम्यम्। दधिपयसोः पशुप्रभवत्वम्। पशोश्च पशुप्रभवत्वम्। तत्र देवतासाम्यापेक्षया हविःसाम्यस्य बलीयस्त्वात्सांनाय्ययाग एव प्रकृतिरिति। तदुक्तं सांनाय्यं वा तत्प्रभवत्वादिति। अग्नीषोमीयपशोः सांनाय्यं प्रकृतिः पशुप्रभवत्वसाम्यादिति तदर्थः। सांनाय्ययागमध्ये च पयोयाग एवाग्नीषोमीयपशोः प्रकृतिः। साक्षात्पशुप्रभवत्वात्। पशुप्रभवत्वं साक्षात्परम्परया चेति द्विविधम्। तत्र पशोः पयसश्च पशुप्रभवत्वं साक्षात्। दध्नस्तु परंपरया। पशुतो हि पयोद्वारा दधि प्रभवति।

तत्र समाख्यातः प्रबलम् । स्थानविनियोगे हि पदार्थयोर्देशसामान्यलक्षणः संबन्धः प्रत्यक्षः । समाख्याविनियोगे तु संबन्धो न प्रत्यक्षः । पदार्थयोर्भिन्नदेशत्वात् । न च सा संबन्धवाचिका । यौगिकानां शब्दानां द्रव्यवाचकत्वेन संबन्धावाचकत्वात् । तथा हि— समाख्या संबन्धसामान्यवाचिका स्यात् तद्विशेषवाचिका वा । नाद्यः । तदुक्तौ प्रयोजनाभावात् । सर्वयौगिकशब्दानां पर्यायतापत्तेश्च । द्वितीयेऽवश्यं संबन्धिनौ वाच्यौ । तदन्तरेण संबन्धे विशेषाभावात् । तत्प्रतिपत्तिमन्तरेण तदप्रतिपत्तेश्च । अतश्चावश्यं संबन्धिवाचकत्वं समाख्याया वक्तव्यम् । तथा च न संबन्धवाचकत्वम् । संबन्धिप्रतिपत्त्यैव वाक्यार्थप्रतिपत्तिन्यायेन तत्प्रतिपत्तिसंभवे तत्र शक्तिकल्पने गौरवात् । यथाहुः—

सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते ।
नहि संबन्धवाचित्वं संभवत्यतिगौरवात् ॥

( त. वा. ३।१।१२ ) इति ।

---

एवं स्थानप्रमाणं सप्रभेदं निरूप्येदानीं तस्य समाख्याप्रमाणापेक्षया प्राबल्यं प्रदर्शयति–तत्रेति । पदार्थयोरिति । यथा यत्र क्वचन स्थिते पुरुषे अयं राजपुरुष इति समाख्यया तत्र राजसंबन्धः कल्प्यते । न तु तस्माच्छब्दात्स वृत्त्या प्रतीयते । राजेति पुरुषेति च पदद्वयं वृत्त्या राजानं पुरुषं च बोधयति । संबन्धबोधकं तु न किंचिदप्यत्र श्रूयते । अतस्तत्र संबन्धः कल्प्यो भवति । संबन्धसामान्यवाचिकेति । पदार्थविशेषस्य पदार्थविशेषे संबन्धः संबन्धविशेषः । यस्य कस्यापि यत्र क्वापि च भवन्संबन्धः संबन्धसामान्यम् । सर्वयौगिकेति । संबन्धिनोरप्रतीतौ संबन्धमात्रप्रतीतिः सर्वत्र साम्येनेन्द्रसभाश्वशालाशब्दयोरर्थभेदस्य वक्तुमशक्यत्वात् । तत्प्रतिपत्तिमिति । संबन्धिप्रतिपत्तिं विना संबन्धविशेषप्रतीतेर्वक्तुमशक्यत्वात् । तथा चेति । अयं भावः । राजपुरुषादिपदस्य न संबन्धमात्रवाचकत्वम् । अनुभवविरोधात् । राजपुरुषादिपदाद्धि संबन्धस्य संबन्धिनोश्च प्रतीतिर्जायते । प्रतीत्यनुसारेण संबन्धे संबन्धिनि च शक्तिः स्वीकार्या । परंत्वनन्यलभ्यः शब्दार्थ इतिन्यायेन संबन्धिमात्र एव शक्तिः । राजपुरुषपदाभ्द्यां शक्तिलितयोरपि राजपुरुषरूपयोरर्थयोरुपस्थितौ वाक्यार्थप्रतिपत्तिन्यायेन तत्संबन्धस्य प्रतीतिसंभवात् । तन्न्यायस्वरूपं चेत्थम् । शाब्दबोधे संसर्गमर्यादया भाने वृत्तिजन्योपस्थितिर्न हेतुः राज्ञः पुरुष इति वाक्ये स्वस्वामिभावसंबन्धस्य षष्ठीप्रत्ययवाच्यत्वेपि

तथा

पाकं तु पचिरेवाह कर्तारं प्रत्ययोऽष्यकः ।
पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्यचित् ॥ इति ।

तथा च समाख्या न संबन्धवाचिका । होतृचमस इत्यादिका तु वैदिकी समाख्या निषादस्थपतिशब्दवन्न षष्ठ्यर्थसंबन्धवाचिका ।

---

तत्र तत्संबन्धस्य राजनिरूपितत्वं पुरुषनिरूपितत्वं च यद्भासते तादृशनिरूप्यनिरूपकभावसंबन्धस्य कस्मादपि शब्दादवृत्त्यानुपस्थितत्वात् । तथा च यथा तत्र निरूप्यनिरूपकभावसंबन्धस्य वृत्तिमन्तरेणापि प्रतीतिस्तथा राजपुरुषपदे स्वस्वामिभावसंबन्धस्यापि वृत्तिमन्तरेणैव प्रतीतिरस्तु किं तत्र वृत्तिकल्पनयेति । तथा च संबन्धे शक्तिर्गौरवपराहतेति । पाकं त्विति पाचकशब्दे पचिधातुः पाकक्रियां ब्रूते । तथा अकइति तदुत्तरप्रत्ययः कर्तृरूपमर्थं ब्रूते । तयोश्च यः संबन्धस्तादृशसंबन्धविशिष्टमर्थं न कोपि ब्रूत इत्यर्थः । एवं वैदिकलौकिकसाधारणसमाख्यायाः संबन्धावाचकत्वं प्रसाधितम् । संबन्धावाचकत्वादेव च केवलं तत्र तादृशसमाख्याबलात्संबन्धः कल्पनीयो भवति । स्थानप्रमाणे च पाठसादेश्यत्वरूपः संबन्धः क्लृप्त एवेति तेन संबन्धेनाकाङ्क्षादिकल्पनद्वारा जायमानो विनियोगः कल्पनीयसंबन्धात्समाख्याप्रमाणात्पूर्वमेव भवतीति स्थानप्रमाणापेक्षया समाख्याप्रमाणस्य दुर्बलत्वं सिद्धम् । तत्र लौकिकी समाख्या स्थानादिसर्वप्रमाणापेक्षयातिदुर्बला । कस्यचित्पदार्थस्य प्रमाणान्तरेण क्वचिज्जायमानं संबन्धमालोच्य तदुत्तरं याज्ञिकैः साधारणानां लोकानां तदवबोधाय केवलं सा संकेतिता । तथा चाधुनिकसंकेतभूतायास्तस्याः प्रमाणत्वमेव तावद्दौर्बल्यमिति कथं सा प्रमाणान्तरेभ्यो बलीयसी भवेत् । वैदिकी समाख्या तु वेदे व्यवहृतात्वादनादिरिति सा प्रमाणम् । किंतु कल्पनीयसंबन्धत्वादेव तस्या दौर्बल्यं बोध्यम् । तदिदानीं निषादस्थपतिन्यायेन द्रढयति–होतृचमस इति । निषादस्थपतिशब्दवदिति । स्थपतिर्निषादः स्याच्छब्दसामर्थ्यात् (जै. सू. ६।१।५१) इति जैमिनेः सूत्रम् । एतया निषादस्थपतिं याजयेदित्यत्र निषादानां स्थपतिरिति न षष्ठीतत्पुरुषः । किंतु कर्मधारय एव । यः स्थपतिः स एव निषादः स्यात् । कुतः शब्दसामर्थ्यात् । शब्दनिष्ठमुख्यप्रवृत्तिसामर्थ्यात् । षष्ठीतत्पुरुषे हि संबन्धे लक्षणापत्त्या कर्मधारय एव युक्त इति तदर्थः । अत्र लक्षणादोषेण षष्ठीतत्पुरुषस्याग्राह्यत्वोक्त्या निषादस्थपतिशब्दस्य मुख्यवृत्त्या संबन्धावाचकत्वं सिद्धम् । संबन्धावाचकत्वादेव च क्लृप्तसंबन्धस्थानादिप्रमाणा-

नापि वाक्यवत्तद्बोधिका । तस्याः पदत्वेनाप्रमाणत्वात् । पौरोडाशिकमित्यादिसमाख्यास्त्वतिदुर्बलाः । लौकिकत्वेन पुरुषप्रत्ययसापेक्षत्वात् । काण्डगोचरत्वेन तत्तत्पदार्थागोचरत्वाच्च । काण्डवाचकत्वमपि न काण्डत्वेन । किंतु पौरोडाशिकत्वादिनैव । न ह्येकहायनीशब्दो द्रव्यवाचकोऽपि गोत्वेन तद्वदति । किं तर्हि एकहायनीत्वेनैव । स्थानविनियोगे तु पदार्थयोर्विशेषपुरस्कारेणैव संबन्धः प्रत्यक्षप्रमाणप्रतिपन्नः । अतश्च समाख्यामुपलभ्य नूनमनयोः पदार्थयोः संबन्धोऽस्तीति यावत्कल्प्यते तावत्प्रत्यक्षप्रतिपन्नेन संबन्धेन परस्परमाकाङ्क्षा । तदभावे च संबन्धानुपपत्तेः । कल्पितसंबन्धेन च यावदितरत्राकाङ्क्षादिकल्पना

---

पेक्षया समाख्याया दौर्बल्यमिति बोध्यम् । ननु यथा राज्ञः पुरुष इति वाक्ये निरूप्यनिरूपकभावसंबन्धस्यावाच्यस्यापि वाक्यस्वभावबलाद्यथा प्रतीतिस्तथा समाख्याशब्दादपि संबन्धप्रतीतिरस्तु किं लक्षणयेत्याशङ्क्याह—नापीति । तस्या इति । समाख्याया इत्यर्थः । समाख्याशब्दो हि पदरूपः । न तु वाक्यरूपः । प्रमाणं च लोके साकल्येनार्थप्रतीतिजनकत्वाद्वाक्यमेव । तथा च प्रामाण्यबलाद्वाक्यस्य तादृशं सामर्थ्यमस्तु नाम न तु पदस्येति भावः। पौरोडाशिकमिति । इयं लौकिकी समाख्या । पुरोडाशसंबन्ध्यर्थप्रतिपादकं काण्डं याज्ञिकैः पौरोडाशिकमिति संकेतितम् । तस्मिन्काण्डे शुन्धध्वं दैव्याय कर्मणे ( तै. सं. १।१।३ ) इति पात्रसंशोधनमन्त्रः पठ्यते । स च स्थानप्रमाणेन कुम्भीशाखापवित्रादिसांनाय्यपात्रशोधने विनियुज्यते । नतु पौरोडाशिकमिति समाख्याबलादुलूखलादिपुरोडाशपात्रशोधने विनियुज्यते । काण्डगोचरत्वेनेति । शुन्धध्वमिति मन्त्रस्य हि समाख्यया विनियोगः कार्यः। समाख्या च न मन्त्रस्य किंतु काण्डस्य। तथा च काण्डान्तर्गतपदार्थभूततत्तन्मन्त्रविनियोगे सा कथं प्रभवतीति भाव । काण्डवाचकत्वमपीति। पौरोडाशिकशब्दस्य हि न काण्डत्वं प्रवृत्तिनिमित्तम् । किंतु पौरोडाशिकत्वम् । तत्तद्विशेषरूपेणोपस्थितयोर्द्वयोः पदार्थयोः संबन्धः केवलं समाख्यया कल्प्यते । तथा चात्र मन्त्रसमुदायरूपस्य काण्डस्य न तादृशविशेषरूपेणोपस्थितिः पौरोडाशिकशब्दाद्भवतीत्यतोऽपि तस्याः सर्वथा दुर्बलत्वमेवेति भावः । न ह्येकेति । एकं हायनं वर्षं यस्यास्तादृशी गौरेकहायनी । अयं चैकहायनीशब्दो न गोरूपं द्रव्यं गोशब्द इव गोत्वेनाभिदधाति किंत्वेकहायनीत्वेन तद्वत् । तथा च पौरोडाशिकशब्दो न विशेषधर्मं पुरस्कृत्य प्रवर्तत इत्यतः समाख्यया कल्प्यमानोऽपि संबन्धो न संबन्धनीयत्वेनाभिमतपदार्थविशेषपुरस्कारेण कल्पयितुं शक्य इति भावः । संबन्धेनेति । समानदेशत्वरूपेणेत्यर्थः । कल्पितसंबन्धेन चेति ।

तावदन्यत्राकाङ्क्षया वाक्यादिकल्पनया विनियोगः क्रियते इति सिद्धं स्थानस्य समाख्यातः प्राबल्यम्। अत एव शुन्धनमन्त्रः सांनाय्यपात्राङ्गं पाठसादेश्यान्न तु पौरोडाशिकसमाख्यया पुरोडाशपात्राङ्गमिति।

समाख्या यौगिकः शब्दः। सा च द्विविधा वैदिकी लौकिकी चेति। तत्र होतुः चमसभक्षणाङ्गत्वं होतृचमस इति वैदिक्या समाख्यया। अध्वर्योस्तत्तत्पदार्थाङ्गत्वं लौकिक्या आध्वर्यवमिति समाख्ययेति संक्षेपः।

तदेवं निरूपितानि संक्षेपतः श्रुत्यादीनि षट् प्रमाणानि। एतत्सहकृतेन विनियोगविधिना समिदादिभिरुपकृत्य दर्शपूर्णमासाभ्यां यजेतेत्येवंरूपेण यानि विनियुज्यन्ते तान्यङ्गानि। तानि द्विविधानि सिद्धरूपाणि क्रियारूपाणि चेति।

तत्र सिद्धरूपाणि जातिद्रव्यसंख्यादीनि। तानि च दृष्टार्थान्येव। क्रियारूपाणि च द्विविधानि गुणकर्माणि प्रधानकर्माणि चेति। एतान्येव संनिपत्योपकारकाण्यारादुपकारकाणीति चोच्यन्ते। तत्र कर्माङ्गद्रव्याद्युद्देशेन विधीय-

---

समाख्याबलात्कल्पितेन संबन्धेनेत्यर्थः। अत एवेति। जैमिनिना तृतीयाध्याये तृतीयपादे एकादशाधिकरण इदमुक्तम्। अध्वर्योरिति। अध्वर्योरिदमाध्वर्यवम्। इयं काण्डविशेषस्य लौकिकी समाख्या। अध्वर्युर्ऋत्विग्विशेषः। आध्वर्यवकाण्डप्रतिपादिते कर्मजाते तस्य कर्तृत्वरूपेणाङ्गत्वम्। तथा स्थानप्रमाणनिरूपणे यथासंख्यपाठस्य यदुदाहरणमैन्द्राग्नमेकादशकपालमित्याद्युक्तम् (पृ. १५७ प. १) तत्रैन्द्राग्नमित्याद्युक्ता इष्टयः काम्येष्टिसंज्ञकाः। इन्द्राग्नी रोचना इत्यादि च याज्यापुरोनुवाक्याकाण्डम्। याज्यापुरोनुवाक्याकाण्ड इति समाख्यावशादेव तत्रत्यमन्त्राणां काम्येष्टौ विनियोगः। केवलं प्रथमस्य याज्यापुरोनुवाक्यायुगलस्य प्रथमेष्टावित्येवं क्रमेण विनियोगः स्थानप्रमाणेनेति बोध्यम्। सिद्धरूपाणामिति। क्रियाव्यतिरिक्तानि सर्वाण्येवाङ्गानि सिद्धरूपाणि। क्रियायाः साध्यत्वेनाधिगमात्। जातिद्रव्येति। आदिपदेन गुणसंग्रहः। वसन्ते ब्राह्मणोऽग्नीनादधीतेत्यादौ ब्राह्मणत्वादिजातिः व्रीहीनवहन्तीत्यादौ व्रीह्यादिद्रव्यं पशुना यजेतेत्यादावेकत्वादिसंख्या पुंस्त्वादिलिङ्गमरुणया पिङ्गाक्ष्यैकहायन्या क्रीणातीत्यादावारुण्यादिगुणश्चेत्येतेषां तत्र तत्राङ्गत्वेन विनियोगो द्रष्टव्यः। एतेषां च दृष्टकार्यकारित्वमेव। तत्र व्रीह्यादिद्रव्यस्य साक्षाद्दृष्टकार्यकारित्वम्। जातिसंख्यादीनां त्वाश्रयभूतद्रव्यद्वारेति बोध्यम्। एतान्येवेति। गुणकर्माणि संनिपत्योपकारकाणीत्युच्यन्ते तथा प्रधानकर्माणि चारादुपकारकाणीत्युच्यन्ते। कर्माङ्गभूतव्रीह्यादिद्रव्याण्युद्दिश्य विधीय-

मानं कर्म संनिपत्योपकारकम् । यथावघातप्रोक्षणादि । तच्च दृष्टार्थमदृष्टार्थं दृष्टादृष्टार्थं च । दृष्टार्थमवघातादि । अदृष्टार्थं प्रोक्षणादि । दृष्टादृष्टार्थं पशुपुरोडाशयागादि । तद्धि द्रव्यत्यागांशेनादृष्टं देवतोद्देशेन च देवतास्मरणं दृष्टं करोति । इदमेव चाश्रयिकर्म इत्युच्यते ।

तच्च संनिपत्योपकारकं द्विविधम् । उपयोक्ष्यमाणार्थमुपयुक्तार्थं चेति । तत्रावघातप्रोक्षणाद्युपयोक्ष्यमाणार्थम् । व्रीहीणां यागे उपयोक्ष्यमाणत्वात् । प्रतिपत्तिकर्म इडाभक्षणाद्युपयुक्तपुरोडाशसंस्कारकम् । उपयुक्तस्याकीर्णकरतानिवर्तकं कर्म प्रतिपत्तिकर्म ।

उपयुक्तसंस्कारार्थं च उपयोक्ष्यमाणसंस्कारार्थाद्दुर्बलम् । उपयुक्तापेक्षया उपयोक्ष्यमाणेऽत्यादरात् । अत एव प्रायणीयनिष्कासे उदयनीय-

---

मानानि यान्यवघातप्रोक्षणादीनि कर्माणि तानि संनिपत्य कर्माङ्गभूतं द्रव्यं प्राप्य तत्र दृष्टादृष्टातिशयाधानद्वारा मुख्यस्य दर्शपूर्णमासादिकर्मणः उपकारकाणि भवन्ति नतु स्वातन्त्र्येण । तेषां व्रीह्यादिद्रव्यावलम्बित्वात् । अत एवैतादृशानि कर्माणि गुणकर्माणीत्युच्यन्ते । यानि तु स्वातन्त्र्येण मुख्यकर्मण उपकारकाणि भवन्ति तान्यारादुपकारकाणि प्रधानकर्माणीत्युच्यन्ते । आरात्समीपे स्थित्वोपकारकाणीत्यर्थः । यथा प्रयाजादीनि कर्माणि । दृष्टार्थमिति । व्रीह्यादौ वितुषीकरणरूपमवघातस्य दृष्टं प्रयोजनम् । तथा व्रीह्यादावपूर्वोत्पादनसामर्थ्यरूपं प्रोक्षणस्यादृष्टं प्रयोजनम् । तथा तत्तद्देवतोद्देशेन कृतस्याङ्गभूतयागस्य तत्तद्देवतास्मरणरूपं दृष्टं प्रयोजनमवान्तरापूर्वं चादृष्टं प्रयोजनमिति भावः । इदमेव चेति । संनिपत्योपकारकं कर्मैवाश्रयिकर्मेत्युच्यते । कर्माङ्गभूतं द्रव्यमाश्रयते तदाश्रयीत्युच्यते । उपयोक्ष्यमाणार्थमिति । उपयोक्ष्यमाणायेदमुपयोक्ष्यमाणार्थम् । आकीर्णकरतानिवर्तकमिति । आकीर्णं व्याप्तं करोतीत्याकीर्णकरम् । तस्य भाव आकीर्णकरता । तन्निवर्तकमित्यर्थः । यथा ब्राह्मणभोजनादिकर्मण्यन्ने उपयुक्ते सति तत्रोच्छिष्टेन स देशो व्याप्तो भवति । तन्निवर्तकं गोमयोपलेपादिकं कर्म प्रतिपत्तिकर्म भवति ।

उपयुक्तेति । नन्वनयोर्द्वयोः संनिपत्योपकारकयोः कीदृशो मिथो विरोधः, यत्र तयोः प्रबलदुर्बलभाव उपयुज्येतेति चेत्-उच्यते । यत्रैकमेव कर्मोपयुक्तसंस्कारार्थमपि संभवति उपयोक्ष्यमाणसंस्कारार्थमपि च संभवति तत्र तदुपयोक्ष्यमाणसंस्कारार्थमेव मन्तव्यमित्याशयात् । तथा च तदुपयोक्ष्यमाणसंस्कारद्वारैवापूर्वोत्पादकं भवतीति भावः । अत एव प्रायणीयेति ।

मनुनिर्वपति ( तै. सं. ६।७।५।५ ) इत्यत्र निष्कासस्य निर्वापार्थत्वम्। न तु तस्य तदर्थत्वं निष्कासस्योपयुक्तत्वादित्युक्तमेकादशे ( ११।२।६४ )। तच्च संनिपत्योपकारकमारादुपकारकाद्बलीयः।

नन्ववघातादि भवतु बलीयः। तस्य दृष्टार्थत्वात्। आरादुपकारकस्य चादृष्टार्थत्वात्। दृष्टे संभवत्यदृष्टस्यान्याय्यत्वात्। प्रोक्षणादि संनिपत्योपकारकं तु कथं बलीयः। उभयोरदृष्टार्थत्वाविशेषात्। किंचारादुपकारकं साक्षात्-

---

निष्कासो नाम भाण्डलिप्तो हविर्द्रव्यावशेषः। चातुर्मास्ये वरुणप्रघासकर्मणि प्रायणीयनामके दिवसे आमिक्षापात्रे यवपिष्टमयमेषमवदाय हुत्वा भाण्डलिप्तो य आमिक्षावशेषस्तत्रोदयनीयनिर्वापः श्रुतः। उदयनीयश्चान्तिमो दिवसः। अत्र निष्कासस्याधिकरणतया निर्वापे संबन्धः श्रूयते। अत्र च किं निर्वापो निष्कासस्याङ्गमुत निष्कासो निर्वापस्याङ्गमिति संशयः। यदि निर्वापोऽङ्गं तर्हि निष्कासः संस्कार्यः। यदि च निष्कासोऽङ्गं तर्हि निर्वापः संस्कार्यः। निष्कासस्य संस्कार्यत्वे च तादृशनिष्कासद्वारा यस्य हविर्द्रव्यस्य स निष्कासस्तद्धविर्द्रव्यं संस्कृतं भवति। निर्वापस्य संस्कार्यत्वे च तादृशनिर्वापद्वारा तन्निर्वापसाधनीयं हविर्द्रव्यं संस्कृतं भवति। अस्मिन्संशये निर्णयश्चोपयोक्ष्यमाणस्य प्राबल्यात्क्रियत इति निष्कासस्य निर्वापार्थत्वं सिद्धं भवति।

उपयुक्तत्वादिति। उपयुक्तहविर्द्रव्यसंबन्धित्वादित्यर्थः। तच्चेति। अत्राप्युपयुक्तसंस्कारार्थोपयोक्ष्यमाणसंस्कारार्थकर्मणोरिव विरोध उपपादनीयः। स चेत्थम्। यत्रैकमेव कर्म संनिपत्योपकारकमपि संभवत्यारादुपकारकमपि च संभवति तत्र कीदृशं तत्स्वीकार्यमिति संशये संनिपत्योपकारकमेव मन्तव्यमिति। तच्च संनिपत्योपकारकमुपयोक्ष्यमाणसंस्कारार्थं वा भवतूपयुक्तसंस्कारार्थं वा भवतु न तत्रारादुपकारकत्वं तस्य स्वीकार्यम्। एतत्फलं तु स्थाणौ या स्थाण्वाहुतिर्विहिता तत्कर्मोपयुक्तसंस्कारार्थरूपं संनिपत्योपकारकमेव नतु प्रयाजादिवदारादुपकारकं भवति। एतच्चानुपदं मूल एव वक्ष्यते।

दृष्टार्थत्वादिति। तुषापसारणरूपदृष्टफलोत्पादनात्। आरादुपकारकस्य। समिद्यागादेः। दृष्टे संभवतीति। अदृष्टापेक्षया दृष्टस्य शीघ्रोपस्थितिकत्वात्।

अदृष्टार्थत्वाविशेषादिति। तथा च तादृशे विषये उभयोः साम्यमेव नतु तत्र कस्यापि प्राबल्यं वक्तुं शक्यत इत्याशयः। प्रत्युतारादुपकारकस्यैव प्राबल्यमुचितमित्याह—किंचारादिति।

प्रधानाङ्गम्। तस्यान्योद्देशेनाविधानात् । संनिपत्योपकारकं तु अङ्गाङ्गम्। कर्माङ्गव्रीह्याद्युद्देशेन विधानात् । अङ्गाङ्गापेक्षया च साक्षादङ्गं बलीयः। 'अङ्गगुणविरोधे तादर्थ्यात्' ( जै. सू. १२।२।२५ ) इति न्यायात् । अत एव 'य इष्ट्या पशुना सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत' ( का. सं. ६।१ ) इति अविशेषविधानेऽपि पर्वानुग्रहः सोमयागस्यैव क्रियते नतु दीक्षणीयादेः। अतः कथं सनिपत्योपकारकस्य बलीयस्त्वम्। उच्यते। सत्यप्यदृष्टार्थत्वाविशेषे संनिपत्योपकारकमारादुपकारकाद्बलीयः। संनिपत्योपकारके हि कर्मणि उपकार्योपकारकयोर्व्रीहिप्रोक्षणयोः संबन्धो वाक्यक्लृप्तः।

---

अङ्गगुणेति। मुख्यं वा पूर्वचोदनाल्लोकवत् (जै. सू. १२।२।२४) इति पूर्वसूत्राल्लोकवदित्यनुवर्तते । अङ्गस्याप्रधानस्य गुणेन प्रधानगुणेन विरोधे प्रधानगुण एव रक्षणीयः। कुतः। तादर्थ्यात् । अप्रधानस्यापि प्रधानार्थत्वादित्यर्थ । अथ वा अङ्गेनोत्पाद्यो यो गुणस्तद्विषये स गुणः किं प्रधाने उत्पाद्य उताप्रधाने इत्येवं विरोधे प्रधान एव स उत्पाद्यः । कुतः । तादर्थ्यात् । अप्रधानस्यापि प्रधानार्थत्वादिति सूत्रार्थः। य इष्ट्या पशुना सोमेन वा यजेत सोमावास्यायां पौर्णमास्यां वा इत्यनेन दीक्षणीयाया इष्टित्वात्तत्र पर्वसंबन्धः प्राप्तः। तथा सोमस्यापि पर्वसंबन्धः प्राप्तः। पर्व चामावास्यारूपं पौर्णमासीरूपं च। तत्संबन्धो द्वयोर्न संभवति। तथा च तत्र कस्य बाध इति संशयः। दीक्षणीयायां प्राथम्यं सोमे प्राधान्यं चेत्युभयत्रापि पर्वानुग्रहे बीजं दृश्यते। तत्र दीक्षणीयेष्टिः स्वयमप्रधानभूता सती अङ्गभूतपर्वसंबन्धजन्यमुपकारं स्वस्मिन्नुत्पादयितुं नार्हति किंतु प्रधाने सोम एव । दीक्षणीयाया अपि सोमार्थत्वात्। यथा लोके वने चोरैरपहृतसर्वस्वे राजनि एकं वस्त्रं संप्राप्तं चेद्भृत्यः स्वयं तदपरिधाय राजानमेव परिधापयति तद्वत् । तस्मात्पर्वानुग्रहः सोमस्यैवेति सिद्धम् । तथा च प्रकृते संनिपत्योपकारकापेक्षयारादुपकारकस्य प्राधान्यात्स्थाण्वाहुतिकर्मण आरादुपकारकत्वकल्पनमेवोचितमित्याशयः।

वाक्यक्लृप्त इति। व्रीहीन्प्रोक्षतीति वाक्ये द्वितीयाश्रुत्यैवोक्तः । तं च संबन्धमुपजीव्य केवलं व्रीह्यावघातोत्पादनशक्तिरूप उपकार आधीयते प्रोक्षणेनेति कल्पनीयं भवति। आरादुपकारकस्थले तु नैवम्। तत्र प्रयाजादेर्यो दर्शपूर्णमासकर्मणा संबन्धः स प्रकरणप्रमाणेन कल्पनीयः । तं च संबन्धमुपजीव्य तत्र तादृश उपकारोऽपि च कल्पनीयो भवति । एवं च स्थाण्वाहुतिरूपकर्मणः क्लृप्तसंबन्धसंबद्धस्थाणुद्वारा यूपसंस्कारकत्वकल्पनमेव न्याय्यमिति संनिपत्योपकारकमेव तत्कर्मेति सिद्धम्।

उपकारमात्रं तु कल्प्यम् । आरादुपकारकस्थले तु दर्शपूर्णमासयोः प्रयाजानुयाजयोः संबन्धः कल्प्य उपकारोऽपि ।

किंच आरादुपकारकस्थले हि प्रकरणं विनियोजकम् । इतरत्र तु व्रीहीन् प्रोक्षतीति वाक्यमेव व्रीहिपदेनापूर्वसाधनलक्षणां कृत्वा क्रतौ विनियोजकमिति बलीयस्त्वम् ।

यदुक्तम्—'अङ्गगुणविरोधे तादर्थ्यात्' इति न्यायेन दुर्बलत्वमिति तदसत् । नहि व्रीह्याद्युद्देशेन विधीयमानं प्रोक्षणादि तदर्थं भवति । तत्स्वरूपे आनर्थक्यात् । किंतु तत्संस्कारद्वारा क्रत्वर्थमेव । संनिपत्योपकारकाणामुत्पत्त्यपूर्वप्रयुक्तत्वस्य च वक्ष्यमाणत्वात् । अत उभयविधमप्यङ्गजातं क्रत्वर्थमेवेति नाङ्गगुणविरोधन्यायावतारः । दीक्षणीयादेः पर्वानुग्रहस्तु दीक्षणीयाद्यर्थ एव । तस्य तदपूर्वप्रयुक्तत्वात् । अतो युक्तं साक्षात्प्रधानाङ्गेन प्रधानपर्वानुग्रहेण स बाध्यत इति । तत्सिद्धं संनिपत्योपकारकस्यारादुपकारकाद्बलीयस्त्वम् ।

---

वाक्यमेवेति । अत्र च व्रीहिप्रोक्षणयोः संबन्धः श्रुत्यैव सिद्धः । तथा च प्रोक्षणेन संस्कृता अत एवापूर्वसाधनीभूता ये व्रीहयस्तेषां पुरोडाशद्वारा क्रतौ विनियोगो वाक्यप्रमाणेनैव भवति । तथा च प्रकरणप्रमाणापेक्षया वाक्यप्रमाणस्य शीघ्रोपस्थितिकत्वात्तदनुरोधेन स्थाण्वाहुतिकर्मणः स्थाणुसंस्कारद्वारैव क्रतौ विनियोगो न्याय्य इति तस्य संनिपत्योपकारकत्वमेव सिद्धं भवति ।

तदर्थमिति । व्रीह्यर्थमित्यर्थः । नाङ्गगुणात । अङ्गगुणविरोधे तादर्थ्यादितिसूत्रे सूत्रकारैस्तादर्थ्यादिति हेतुरुक्तः । तादर्थ्यादित्यस्य प्रधानार्थत्वादित्यर्थः । तथा च यत्राङ्गस्याप्रधानेन सह संबन्धे प्रधानार्थत्वं न संभवति तत्राङ्गस्याप्रधानेन सह संबन्धो न भवतीति सूत्रतात्पर्यमवगम्यते । सोमापेक्षया अप्रधानीभूताया दीक्षणीयेष्टेः पर्वानुग्रहे तु न तस्य पर्वणः कथमपि सोमार्थत्वमुपपद्यते । न च दीक्षणीयेष्टिद्वारा पर्वणः सोमार्थत्वं स्यादिति भ्रमितव्यम् । दीक्षणीयेष्टेः क्रत्वेकदेशत्वेन क्रत्वेकदेशान्तरं प्रत्यनङ्गत्वात् । सोमापेक्षया तस्या अप्राधान्यमित्यन्यत् । तथाच प्रधानीभूतसोमानुग्रहार्थं पर्वणः सोमसंबन्ध एव स्वीकार्यो भवति । प्रकृते तु न तत्सूत्रस्य प्रवृत्तिः । स्थाण्वाहुतिकर्मणः संनिपत्योपकारकत्वेपि यूपद्वारा क्रत्वर्थत्वमेव आरादुपकारकत्वेपि क्रत्वर्थत्वमेवेत्यविशेषात् ।

अत एव स्थाणौ स्थाण्वाहुतिं जुहोतीति विहिता स्थाण्वाहुतिर्यूपव्रश्चनस्थाणुद्वारा यूपसंस्कारार्था । देवदत्तधारितायाः स्रजः शुचिदेशनिधानमिव देवदत्तसंस्कारार्थम् । न तु स्थाण्वाहुतिराराादुपकारिकेत्युक्तं दशमे इति दिक् ।

द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आरादुपकारकम् । यथा प्रयाजादि । तदेवं निरूपितं द्विविधमप्यङ्गजातम् ।

तच्च न यागादिस्वरूपप्रयुक्तम् । स्वरूपे आनर्थक्यात् । तदन्तरेणापि

---

<u>अत एव स्थाणाविति</u> । यूपे छिन्ने सति अवशिष्टं वृक्षमूलं स्थाणुः । तत्र स्थाणावाहुतिर्विहिता छेदनजन्यापराधनिवृत्तये । इयमेव स्थाण्वाहुतिः । स्थाणुमुपजीव्य प्रवृत्तत्वात् । एतच्चाहुतिरूपं कर्म नारादुपकारकम् । किंतु संनिपत्योपकारकम् । न चाहुत्यानया स्थाणोः संस्कारेपि तस्माच्छिन्नस्य कर्माङ्गभूतयूपद्रव्यस्य कथं संस्कारः । तदानीं यूपस्थाण्वोः संबन्धाभावादिति वाच्यम् । भूतपूर्वसंबन्धेन यूपसंस्काराङ्गीकारात् । यथा गुरोः कण्ठादवतारिताया अपि स्रजः शिष्येण स्वमूर्ध्नि धारणे शुचौ देशेऽवस्थापने च कृते सति तेन गुरोरेव गौरवापादनं भवति तद्वत् । अत्र च यद्येतत्स्थाण्वाहुतिकर्माराादुपकारकं भवेत्तर्ह्यस्य स्थाणोर्यूपसंबन्धानवगमाद्यस्मिन्कस्मिंश्चित्स्थाणावप्याहुतिप्रसङ्गः । तथा खलेवाल्यां यूपाभावेप्यस्य स्थाण्वाहुतिकर्मण आवश्यकत्वं स्यात् । सिद्धान्ते त्वस्य कर्मणः संनिपत्योपकारकत्वाद्यूपसंस्कारकत्वेन खलेवाल्यां च यूपाभावेन तत्संस्कारकस्यास्य कर्मणस्तत्र लोप एव भवति । खलेवालीसंज्ञकः कश्चन विकृतिभूतो यागः । तत्र खलेवाल्येव यूपो भवति । न तु चोदकप्राप्तं यूपान्तरम् । खले बलीवर्दबन्धनाय निखातो मेढिः खलेवाली ।

<u>दशम इति</u> । जैमिनीये दशमाध्याये प्रथमपादे स्थाणौ तु देशमात्रत्वात् (जै. १०।१।१० ) इत्यधिकरण इति भावः ।

<u>तच्चेति</u> । संनिपत्योपकारकमाराादुपकारकं चेति द्विविधमङ्गजातं चेत्यर्थः। तच्च यागादिस्वरूपनिष्पत्तये न विधीयते । समिधो यजतीत्यादिप्रयाजविध्यभावे यावदुक्तं तावतैव यागस्वरूपनिष्पत्तिः स्यात् । अतस्तदपूर्वोत्पत्त्यर्थमेव विहितम् । एवं व्रीहीन् प्रोक्षतीति प्रोक्षणविधानमप्यपूर्वोत्पत्त्यर्थमेव । न चावघातरूपकर्माभावे पुरोडाशयोग्यतण्डुलस्वरूपनिष्पत्तिर्न भवतीति कथं तदपूर्वोत्पत्त्यर्थमिति वाच्यम् । लोक इव याज्ञे कर्मण्यपि व्रीहीनवहन्तीति वचनमन्तरेणापि तुषापसारणार्थं प्रवृत्तिः स्यादेवेति तत्रापूर्वोत्पत्त्यर्थमेव नियमविधिस्वीकारात् ।

तत्सिद्धेः। किं त्वपूर्वप्रयुक्तमेव। नहि तदन्तरेणापूर्वं भवतीत्यत्र किंचित्प्रमाणमस्ति। तस्यादृष्टत्वात्। न चैवं प्राधान्याददृष्टत्वाच्च फलप्रयुक्तमेव किं न स्यादिति वाच्यम्। फलभावनायां यागस्यैव करणत्वादङ्गानां च करणानुग्राहकत्वात्तदर्थत्वे बुद्धे तत्र चानर्थक्यप्रसक्तौ तेन स्वापूर्वमेवोपस्थाप्यते। संनिकर्षात्। दीक्षणीयादिशब्देनेव तदपूर्वम्। न तु फलमुपस्थाप्यते। विप्रकर्षात्। अतो न तत्प्रयुक्तत्वमङ्गानाम्। अत एव 'अगन्म सुवः सुवरगन्म (तै. सं. १।५।६।१) इति मन्त्रो विकृतावूहितव्य इत्युक्तं नवमे फलदेवतयोश्च (जै. सू. ९।१।४) इत्यत्र। फलप्रयुक्तत्वे तु सौर्यादिविकृतिषु स्वर्गरूपफलाभावान्मन्त्रो न प्रवर्तेत नतरां चोहितव्यः स्यादिति। तत्सिद्धमङ्गानामन्यप्रयुक्तत्वानुपपत्तेरपूर्वप्रयुक्तत्वम्।

---

फलप्रयुक्तमेवेति। फलापूर्वप्रयुक्तमित्यर्थः। यथा यागजन्यं परमापूर्वं फलजनकं तथा यागाङ्गजन्यमपि परमापूर्वान्तरं फलजनकं कल्पनीयम्। दण्डचक्रादिन्यायेन सर्वाणि परमापूर्वाणि मिलित्वा स्वर्गादिफलं जनयेयुरित्याशयः।

यागस्यैवेति। उत्पत्तिविधिगतयजेतेत्याख्यातवाच्यभावनायां भाव्याकाङ्क्षायां स्वर्गकाम इत्याद्यधिकारिविशेषणावगतस्य प्रकारान्तरेणोपस्थितस्य वा स्वर्गादिफलस्य भाव्यत्वेनान्वये जाते पश्चात्तादृशस्वर्गादिफलजनकभावनायाः करणाकाङ्क्षायां समानपदोपात्तस्य धात्वर्थयागस्यैव करणतयान्वयः। यागस्य चाशुविनाशित्वेन तस्य स्वर्गसाधनत्वमपूर्वद्वारैव वक्तव्यम्। एतदेव परमापूर्वम्। स्वर्गादिफलजनकं मुख्यमपूर्वं परमापूर्वशब्देन फलापूर्वशब्देन चोच्यते। पश्चात्तादृशफलापूर्वसाधनीभूतस्य यागस्येतिकर्तव्यताकाङ्क्षायामङ्गजातमितिकर्तव्यतात्वेन संबध्यते। तत्र प्रयाजाद्यङ्गजातं प्रकरणप्रमाणेन संबध्यत इति न तस्य कथमपि स्वातन्त्र्येण फलसंबन्धो वक्तुं शक्यते। तथा च फलभावनायां यागस्यैव करणत्वेन संबन्धो न तु प्रयाजादेरपीति सिद्धम्।

अत एवागन्मेति। तैत्तिरीयसंहितायां प्रथमकाण्डे दर्शपूर्णमासप्रकरणे अगन्म सुवः॰ अग्नेरहं॰ इत्येवं मन्त्रद्वयं पठितम्। तत्र प्रथमो मन्त्रः स्वर्गरूपफलप्रकाशकः। द्वितीयश्चाग्निदेवताप्रकाशकः। तत्र यदि फलदेवताप्रकाशनमात्रमेव मन्त्रोच्चारणस्य प्रयोजनं स्यात्तर्हि सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकाम इत्यत्र विकृतौ स्वर्गरूपफलस्याग्निरूपदेवतायाश्चाभावात्तत्र तयोर्मन्त्रयोरनुच्चारणमेव स्यात्। परंतु फलदेवताप्रकाशनमात्र-

तत्रापि संनिपत्योपकारकाणां द्रव्यदेवतादिसंस्कारद्वारा यागस्वरूपे उपयोगादुत्पत्त्यपूर्वार्थत्वम् । अत एवौषधधर्मावघातादीनामाज्ये न प्रवृत्तिः । तेषामाग्नेयापूर्वप्रयुक्तत्वात् । आज्यस्य च तदर्थत्वाभावादित्युक्तं तृतीये ( ३।१।६ )।

आरादुपकारकाणां तु स्वरूपेऽनुपयोगात्परमापूर्वार्थत्वम् । तत्रोत्पत्त्यपूर्वस्य

---

मनर्थकमिति फलदेवताप्रकाशनद्वारकमवान्तरापूर्वमेव तत्र तादृशमन्त्रोच्चारणप्रयोजकं वक्तव्यम् । अवान्तरापूर्वस्य च विकृतावप्यावश्यकत्वात्तत्साधनाय मन्त्रोच्चारणमप्यावश्यकमेव । किंतु तत्र स मन्त्रोऽसंबद्धार्थबोधको मा भूदित्यूहः कार्यः । स्वर्गशब्दस्थाने ब्रह्मवर्चसशब्दः प्रयोज्यः । तथाग्निशब्दस्थाने सूर्यशब्दः प्रयोज्यः । अत्र मन्त्रोच्चारणस्य स्वातन्त्र्येण फलार्थत्वे तु विकृतौ मुख्यत उद्दिष्टस्य स्वर्गस्य फलस्याभावान्मन्त्रोच्चारणस्य बाध एव स्यात् । उत्पत्त्यपूर्वार्थत्वमिति । नतु परमापूर्वार्थत्वमित्यर्थः ।

तृतीय इति । तेषामर्थेन संबन्धः ( जै. सू. ३।१।७ ) इत्यधिकरण इदमुक्तम् । अवघातप्रोक्षणादयो व्रीहिधर्माः । उत्पवनावेक्षणादय आज्यधर्माः । दोहनातञ्चनादयः सांनाय्यधर्माः । ते च सर्वे धर्मा यदि परमापूर्वार्थाः स्युस्तर्हि सर्वे सर्वत्र कर्तव्याः स्युः । यद्यप्यवघातरूपधर्मस्य व्रीहावेव दृष्टं फलं नत्वाज्ये तथाप्यदृष्टार्थं तद्वचनबलात्स्यात् । तथाच धर्माणां संकरः प्रसज्यते । परंतु ते सर्वे धर्मा न परमापूर्वार्थाः किंतु संनिहितोपस्थितावान्तरापूर्वार्था एव । अवान्तरापूर्वाणि चाग्नेयादिषड्यागजन्यानि षट् । तथाचाग्नेय उक्तानामवघातादीनां व्रीहिधर्माणामाग्नेयापूर्वार्थत्वमेवेति न तेषामन्यत्र प्रसक्तिरिति बोध्यम् ।

आरादुपकारकाणामिति । द्रव्यं देवता चेति रूपद्वयं यागस्य । आरादुपकारकं कर्म च न किंचिद्द्रव्यमुद्दिश्य नापि कांचिद्देवतां वोद्दिश्य विधीयते येन तद्द्वाराऽवान्तरापूर्वार्थं तत्स्यात् । तथाच तत्परमापूर्वार्थमेव भवति । अवान्तरापूर्वस्य कस्यचित्तत्रासंनिहितत्वात् ।

तत्रोत्पत्तीति । यागाङ्गानि च द्विविधानि प्रयोगस्थानि तद्बहिर्भूतानि च । तत्र प्रयोगबाहिर्भूतान्यारादुपकारकाण्येव । प्रयोगस्थानि संनिपत्योपकारकाण्यपि भवन्ति । प्रयोगस्थान्यपि द्विविधानि-प्रधानयागात्पूर्वमनुष्ठेयानि प्रधानयागोत्तरमनुष्ठेयानि च । प्रयोगबहिर्भूतान्यङ्गानि तु प्रधानयागोत्तरमेवानुष्ठेयानि भवन्ति । तत्रापूर्वोत्पत्तिः प्रधानयागाव्यवहितोत्तरक्षण एव भवति । तत्र संनिपत्योपकारकाणि कर्माण्युत्पत्त्यपूर्वोत्पादकानि ।

यागस्वरूपानुष्ठानानन्तरमेवोत्पद्यमानत्वात् संनिपत्योपकारकाणां पूर्वाङ्गानां तदुत्पत्तावुपयोगः। उत्तराङ्गानां तु तेषां तत्स्थितावुपयोगः। परमापूर्वस्य तु साङ्गप्रयोगानुष्ठानानन्तरमेवोत्पद्यमानत्वात् सर्वेषामारादुपकारकाणां तदुत्पत्तौ, प्रयोगबहिर्भूतस्य तु तत्स्थितावुपयोगः। यथा बृहस्पतिसवस्य वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेति वाजपेयोत्तरकालमङ्गत्वेन विहितस्य वाजपेयापूर्वस्थितावुपयोगः। तस्य प्रागेवोत्पन्नत्वादित्युक्तं चतुर्थे (४।३।२७)। तत्सिद्धं सर्वथाङ्गानामपूर्वार्थत्वम्। प्रकृतमनुसरामः। तदेवं निरूपितः संक्षेपतो विनियोगविधिः।

प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिः। स चाङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिरेव। स हि साङ्गं प्रधानमनुष्ठापयन् विलम्बे प्रमाणाभावादविलम्बापरपर्यायं प्रयोगप्राशुभावं विधत्ते। न च विलम्बवदविलम्बेऽपि प्रमाणाभाव इति वाच्यम्। विलम्बे हि अङ्गप्रधानविध्येक-

---

आरादुपकारकाणि तु परमापूर्वोत्पादकानि। तत्र केषां कर्मणां कीदृशमपूर्वार्थत्वमित्येतदनेन ग्रन्थेनोच्यते। पूर्वाङ्गानाम्। प्रधानयागात्पूर्वभाविनाम्। तत्स्थितावित्ति। इतरथाहि प्रधानयागाव्यवहितोत्तरक्षणे उत्पद्यमानस्याप्युत्पत्त्यपूर्वस्य फलापूर्वोत्पत्तिपर्यन्तमवस्थानं न स्यादिति फलापूर्वं नोत्पद्येतेति भावः। तस्य प्रागेवेति। वाजपेयापूर्वस्य बृहस्पतिसवात्प्रागेवोत्पन्नत्वादित्यर्थः।

प्रयोगप्राशुभावेति। प्राशुशब्दः शीघ्रवाची। तस्य भावः शैघ्र्यमित्यर्थः। सचाङ्गेति। प्रधानविधेरितिकर्तव्यताकाङ्क्षायां यावत्क्रियाजातमङ्गत्वेन तत्र संबद्धं तावत्क्रियाबोधकैस्तैस्तैरङ्गविधिभिः सह प्रधानविधेरेकवाक्यतया सर्वेषां वाक्यानां मिलित्वा यो महावाक्यार्थस्तादृशमहावाक्यार्थावगतो यो विधिः स प्रयोगविधिरित्यर्थः।

विलम्बे प्रमाणाभावादिति। निरुक्तेन प्रयोगविधिना यानि कर्माणि विहितानि तेषामेकविधिबोधितत्वात्साहित्यमेव प्रसज्यते। अतस्तत्र विलम्बे न किंचिदपि प्रमाणमिति भावः। न च विलम्बवदिति। उक्तरीत्या साहित्यावगमे तेन पौर्वापर्यमेव बाधितं भवति। विलम्बाविलम्बौ हि सति पौर्वापर्ये संभवतः। तथा च यत्र पौर्वापर्यमेव नास्ति तत्र का वार्ता विलम्बस्याविलम्बस्य वेति भावः।

वाक्यतावगततत्साहित्यानुपपत्तिः प्रसज्यते। नहि विलम्बेन क्रियमाणयोः पदार्थयोः सहकृतमिति साहित्यं व्यवहरन्ति। नचैवं साहित्यानुपपत्त्या समानकालत्वमेव स्यान्नत्वविलम्बः। अव्यवधानेन पूर्वोत्तरकाले क्रियमाणपदार्थयोरविलम्बेन कृतमिति व्यवहारादिति वाच्यम्। अनेकपदार्थानामेकस्मिन्कालेऽनुष्ठानानुपपत्तेः। न च तावत्कर्तृसंपादनेनानुष्ठाने किं न स्यादिति वाच्यम्। तस्यैतस्य यज्ञक्रतश्चत्वार ऋत्विजः (तै. ब्रा. २।३।६) इत्यादिना कर्तृणां नियतत्वात्।

तस्मादङ्गवाक्यैकवाक्यतामापन्नः प्रधानविधिरेकवाक्यतावगततत्साहित्यं विदधदुक्तविधया एककालानुष्ठानानुपपत्तेरविलम्बं विधत्ते इति सिद्धं प्रयोगप्राशुभावबोधको विधिः प्रयोगविधिरिति।

---

अविलम्बेन कृतमिति व्यवहारादिति। न तु सहकृतमिति तत्र व्यवहारो भवतीत्याशयः। न च तावदिति। यथानेकैर्भोक्तृभिर्युगपद्भोजने कृते सहभोजनमिति साहित्यव्यवहारो भवति तथात्रानेकैः कर्तृभिरनेकान्यङ्गभूतकर्माणि प्रधानकर्म च युगपत्कर्तुं शक्यन्त इत्याशयः।

तस्यैतस्येति। यो यज्ञाधिकारिणा स्वयज्ञसिध्यर्थं परिक्रीतः सन्यज्ञकृद्भवति स तस्य ऋत्विगित्युच्यते। तदुक्तं मनुना—

अग्न्याधेयं पाकयज्ञानग्निष्टोमादिकान्मखान्।
यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते॥

(मनुः २।१४३) इति।

ते च ऋत्विजश्चत्वारः। होता १ अध्वर्युः २ उद्गाता ३ ब्रह्मा ४ चेति। क्वचिद्यज्ञक्रतोरिति पाठः। तैत्तिरीयब्राह्मणे द्वितीये काण्डे तृतीये प्रपाठके षष्ठेनुवाके तस्माद्दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः इत्युक्तम्। तत्र भाष्ये दर्शपूर्णमासयोर्ब्रह्मा होताध्वर्युरग्नीदिति ऋत्विक्चतुष्टयमुक्तम्। क्रतुशब्दश्च तत्रौपचारिकः। सर्वथा यज्ञे यजमानेन वृत एव कर्म करोति। वरणं च नियतसंख्याकानामेवेति न यैः कैश्चिदनेकैरनेकानि कर्माणि युगपत्कर्तुं शक्यन्त इति भावः।

अविलम्बं विधत्त इति। स्नात्वा भुञ्जीतेत्यादौ क्त्वाप्रत्ययेन पौर्वापर्यं बोध्यते। तत्र स्नानोत्तरकालं व्यवधानेनापि भोजनं भवति नत्वव्यवधानेनैव। स्नानात्प्राग्भोजनाभावे तत्तात्पर्यात्। अत एवैकादश्यादौ स्नानोत्तरमभोजनेपि

स चाविलम्बो नियते क्रमे आश्रीयमाणे भवति। अन्यथा हि किमेतदनन्तरमेतत्कर्तव्यमेतदनन्तरं वेति प्रयोगविक्षेपापत्तेः । अतः प्रयोगविधिरेव स्वविधेयप्रयोगप्राशुभावसिद्ध्यर्थं नियतं क्रममपि पदार्थविशेषणतया विधत्ते। तत्र क्रमो नाम विततिविशेषः पौर्वापर्यरूपो वा।

तत्र च षट् प्रमाणानि, श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्यानि । तत्र क्रमपरं वचनं श्रुतिः । तच्च द्विविधं, केवलक्रमपरं तद्विशिष्टपदार्थपरं चेति। तत्र वेदं कृत्वा वेदिं करोतीति केवलक्रमपरम् । वेदिकरणादेर्वचनान्तरेण विहितत्वात्। वषट्कर्तुः प्रथमभक्ष इति तु क्रमविशिष्ट-

---

न तादृशविध्यतिक्रमः। तथा च तादृशस्थले व्यवधानमस्तु नाम । परंतु यत्र शाब्दमर्यादया पौर्वापर्यं नोच्यते किंतु शब्दतः प्रतीयमानेन साहित्येन पौर्वापर्यमाक्षिप्यते तत्राव्यवधानेनैव तत्पौर्वापर्यं संपादनीयं भवति । धुनोति चासिं तनुते च कीर्तिमित्यत्र चकारद्वयेन बोधितमासिधूननकीर्तिप्रसारयोः साहित्यं कार्यकारणभावापन्नयोस्तयोरसंभवदविलम्बितपौर्वापर्ये पर्यवस्यति । अन्यथेति। नियतक्रमाभावे हि युगपदनेककर्मणामुपस्थितौ तत्र पूर्वं किं कर्तव्यमिति संशये स्वकपोलकल्पनया पूर्वमिदमेवेदानीं कर्तव्यमिति किंचिन्निश्चित्य तत्कर्मानुष्ठाने विलम्बः स्यादित्यर्थः ।

प्रयोगविधिरेवेति। समिधो यजतीत्येवमादयो विधयो न केवलं समिद्यागादिविधायकाः किंतु पूर्वं समिद्यागः पश्चात्तनूनपाद्याग इत्येवं कालविशेषविशेषणविशिष्टसमिद्यागादिविधायका इति भावः। विततिविशेष इति। विततिर्विस्तारः। अयं च विस्तारविशेषरूपः क्रमः सर्वाङ्गघटितसमुदायनिष्ठोऽङ्गवाक्यैकवाक्यतापन्नप्रधानविधिरूपप्रयोगविधिना बोध्यते । पौर्वापर्यरूपः क्रमस्तु पूर्वकालभवत्वापरकालभवत्वरूपस्तत्तदङ्गभूतकर्मनिष्ठस्तत्तदङ्गविधिना बोध्यते। अस्मिंश्च क्रमे क्त्वाप्रत्ययप्रथमादिशब्दरूपा श्रुतिः प्रमाणम् । सा च क्वचित्प्रत्यक्षा क्वचिदर्थादिप्रमाणकल्पिता च। विततिविशेषरूपे क्रमे तु प्रायोऽर्थादिप्रमाणकल्पितैव श्रुतिः प्रमाणमिति विशेषः।

वेदं कृत्वेति। वेदो दर्भमुष्टिः। अत्र वेदं कृत्वेत्यनेन वाक्येन न वेदकरणं वेदिकरणं च विधीयते । किंतु केवलं तयोः पौर्वापर्यरूपः क्रमः। स चात्र कृत्वेत्यत्रत्यक्त्वाप्रत्ययेन बोध्यते । क्त्वाप्रत्ययश्च स्वप्रकृतिभूतधातूपस्थाप्यक्रियायाः क्रियान्तरापेक्षया पूर्वकालभवत्वं बोधयति । समानकर्तृकयोः पूर्वकाले (पा. सू. ३।४।२१) इति सूत्रेण पूर्वकालभवक्रियावाचकाद्धातोः क्त्वाप्रत्ययस्य विधानात्।

पदार्थपरम् । एकप्रसरताभङ्गभयेन भक्षानुवादेन क्रममात्रस्य विधातुमशक्यत्वात् ।

सेयं श्रुतिरितरप्रमाणापेक्षया बलवती । तेषां वचनकल्पनद्वारा क्रमप्रमाणत्वात् । अत एवाश्विनस्य पाठक्रमात्तृतीयस्थाने ग्रहणप्रसक्तावाश्विनो

---

एकप्रसरतेति । एकस्यां वृत्तौ प्रसरः प्रवेशो ययोरर्थयोस्तावेकप्रसरौ । तयोर्भाव एकप्रसरता । एकवृत्तिप्रविष्टता । तस्या अत्र भङ्गः स्यात् । समासघटकपदानि हि संभूय विशिष्टमेकमर्थमेकया वृत्त्या प्रतिपादयन्ति इति तस्यैकस्यार्थस्य विवक्षावशादुद्देश्यत्वं विधेयत्वं वा ग्राह्यं भवति । न तु तदेकदेशमात्रस्य कस्यचिदर्थस्योद्देश्यत्वं कस्यचिद्विधेयत्वं वा ग्रहीतुं युज्यते। अन्तर्भूतपदार्थानां पार्थक्येनोपस्थित्यभावात् । तथा च यद्यत्र प्रथमभक्ष इति वृत्त्यन्तर्गतभक्षपदार्थमात्रमुद्दिश्य प्राथम्यं विधेयं स्यात्तर्हि तद्वाचकयोर्द्वयोः पदयोरेकस्यां वृत्तौ प्रवेश एव न स्यात् । वषट्कर्तुः प्रथमभक्ष इति वाक्ये तु समासः कृत एवेति तदनुरोधेन विशिष्टार्थस्यैवात्र शाब्दमर्यादया विधेयत्वं विवक्षितमिति गम्यते । तत्र विशेषणविशिष्टार्थस्यान्यतोऽप्राप्तत्वे विशिष्टविधावेव पर्यवसानं भवति । तदेकदेशस्य कस्यचिदन्यतः सिद्धत्वे तु प्राप्ताप्राप्तविवेकन्यायेनाप्राप्तांशे विशिष्टविधेः पर्यवसानं स्यादित्यन्यत् । शाब्दमर्यादया तु विशिष्टविधिरेव तादृशस्थले स्वीकर्तव्यो भवति ।

तेषां वचनेति । अर्थादिपञ्चप्रमाणानि तु क्त्वाप्रत्ययप्रथमद्वितीयतृतीयादिशब्दं परिकल्प्य तद्द्वारा क्रमं बोधयन्ति । अर्थः प्रयोजनम् । तच्च द्विविधं दृष्टमदृष्टं च । द्विविधमपि प्रयोजनं प्रयोजननिष्पत्त्युत्तरकालभाव्येव भवति । प्रयोजनं हि कारणम् । नहि कारणं कार्यसहभावि कार्योत्तरभावि वा भवति । किं तु कार्यात्प्रागेव । अतस्तत्र कारणीभूतपदार्थनिष्पादकं कर्म प्रागेवानुष्ठेयं भवति। यथा यवागूं पचतीति । अत्र होमस्य कारणीभूता यवागूः पूर्वमेव निष्पाद्या । ततस्तया होमः । तथा च तदनुसारेण यवागूं पचतीत्यत्राश्रुतमपि प्रथमत इति शब्दं प्रकल्प्य प्रथमतो यवागूं पचति ततोऽग्निहोत्रहोम इत्येवं तया कल्पितश्रुत्याग्निहोत्रहोमयवागूपाकयोः क्रमोऽवसेयः । अदृष्टं प्रयोजनं तु पठनादिप्रमाणोदाहरणेषु पठनेन प्रकल्प्यते । तेन च श्रुतिरनुमेया । एवमेतेषु श्रुत्यर्थपठनस्थानमुख्यप्रवृत्त्याख्येषु षट्सु प्रमाणेषूत्तरोत्तरं प्रमाणं स्वाव्यवहितपूर्वप्रमाणकल्पनद्वारा क्रमबोधकं भवति । अतस्तेषु कयोश्चिद्विरोधे परस्य दौर्बल्यम् । परप्रमाणापेक्षया पूर्वेण शीघ्रं क्रमबोधनात् ।

अत एवाश्विनस्येति । ज्योतिष्टोम ऐन्द्रवायवादिग्रहेष्वैन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णाति आश्विनं गृह्णातीत्येवं तृतीयस्थाने आश्विनग्रह-

दशमो गृह्यते इति वचनाद्दशमस्थाने ग्रहणमित्युक्तम् ( जै. ५।४ अधि. १ )।

यत्र तु प्रयोजनवशेन निर्णयः स आर्थः क्रमः। यथाऽग्निहोत्र-होमयवागूपाकयोः। अत्र हि यवाग्वा होमार्थत्वेन तत्पाकः प्रयोजन-वशेन पूर्वमनुष्ठीयते। स चायं पाठक्रमाद्बलवान्। यथापाठं ह्यनुष्ठाने क्लृप्तप्रयोजनबाधोऽदृष्टार्थत्वं च स्यात्। नहि होमानन्तरं क्रियमाणस्य किंचिद्दृष्टं प्रयोजनमस्ति।

---

ग्रहणं विधीयते। तृतीयस्थान उक्तत्वाच्चास्याश्विनग्रहग्रहणस्य चतुर्थस्थानो-क्तग्रहग्रहणनिष्पादनसामर्थ्यं कल्प्यते। यद्यप्याश्विनग्रहग्रहणमन्तरापि चतुर्थ-स्थानोक्तग्रहग्रहणं संभवति तथापि तदपूर्वाधायकं न स्यात्। तथा चापूर्वाधायकचतुर्थस्थानोक्तग्रहग्रहणमाश्विनग्रहग्रहणस्य प्रयोजनमित्यर्थ-प्रमाणेन तदनुसारिणी चतुर्थस्थानोक्तग्रहग्रहणात्पूर्वमाश्विनग्रहोनुष्ठेय इत्येवं क्रमबोधिका श्रुतिर्यावत्कल्प्यते तावत्ततः प्रागेवाश्विनो दशमो गृह्यत इति क्रमबोधकप्रत्यक्षश्रुत्याश्विनग्रहस्य तृतीयस्थानादुत्कर्षो जात इत्येवं श्रुत्यपेक्षया पाठस्य दौर्बल्यं सिद्धम्। अत्र च प्रत्यक्षश्रुतिविरोधा-च्चाश्विनग्रहग्रहणस्यापूर्वाधायकचतुर्थस्थानोक्तग्रहग्रहणनिष्पादकत्वं परिक-ल्पनीयं भवतीति बोध्यम्। इत्युक्तमिति। पञ्चमाध्यायचतुर्थपादप्रथमाधि-करण इति शेषः। एतच्च श्रुतिप्रमाणपठनप्रमाणयोर्विरोधोदाहरणं प्रदर्शितम्। श्रुत्यर्थप्रमाणयोस्तु विरोधोदाहरणं नोदाहृतम्। असंभवात्। तथाहि। दृष्टादृष्टरूपेणार्थो द्विविध इति प्रागुक्तमेव। तत्र दृष्टार्थस्थले तद्विरुद्धक्रम-बोधिका प्रत्यक्षश्रुतिर्नास्त्येव। अदृष्टार्थस्थले त्वपूर्वाधायकपदार्थोत्पादन-सामर्थ्यं प्रमाणान्तरेणैव परिकल्पनीयं भवति। तादृशं च प्रमाणान्तरं प्रत्यक्षक्रमबोधिका श्रुतिरेव चेत्सा स्वोक्तक्रमानुसारेणैव पूर्वमनुष्ठितस्य तादृशं सामर्थ्यं परिकल्पयेदिति न तत्र श्रुत्यर्थयोर्विरोधः। पठनादिकं प्रमाणा-न्तरं तादृशसामर्थ्यकल्पकं चेत्तत्र तेनार्थकल्पकेन प्रमाणान्तरेणैव श्रुतिप्रमा-णस्य विरोधः संपद्यत इति न श्रुत्यर्थप्रमाणयोर्विरोधोदाहरणं किंचिदिति।

अथ क्रमबोधकं द्वितीयमर्थप्रमाणं निरूपयति–यत्रत्विति। होमार्थत्वेनेति। यवाग्वाग्निहोत्रं जुहोति इति वाक्येन यवाग्वा होमार्थत्वेन विधानादिति भावः।

यथापाठं हीति। श्रुतावग्निहोत्रं जुहोति इति वाक्यं पूर्वं पठ्यते पश्चाच्च यवागूं पचति इति। तथा च पाठक्रमेणाग्निहोत्रहोमः पूर्वमनुष्ठेयः।

पदार्थबोधकवाक्यानां यः क्रमः स पाठक्रमः। तस्माच्च पदार्थानां क्रम आश्रीयते। येन हि क्रमेण वाक्यानि पठितानि तेनैव क्रमेणाधीतान्यर्थप्रत्ययं जनयन्ति। यथार्थप्रत्ययं च पदार्थानामनुष्ठानात्।

स च पाठो द्विविधः मन्त्रपाठो ब्राह्मणपाठश्चेति। तत्राग्नेयाग्नीषोमीययोस्तत्तद्याज्यानुवाक्याक्रमाद्यः क्रम आश्रीयते स मन्त्रपाठात्।

---

तत्र च यवाग्वाग्निहोत्रं जुहोति। इत्येवं यवाग्वाः करणत्वेन विधानात्तदन्यथानुपपत्त्या यवागूपाकः पूर्वमनुष्ठेय एव यद्यपि भवति तथापि नासौ यवागूं पचति इति वाक्यविहितो यवागूपाकः। पाठक्रमेण तस्याग्निहोत्रहोमोत्तरं विधानात्। तथा च स तेन वाक्येन विहितो यवागूपाकोऽग्निहोत्रहोमोत्तरमनुष्ठेयः। तत्पाकसिद्धायाश्च यवाग्वा न दृष्टं किंचित् फलम्। अग्निहोत्रहोमस्य यवाग्वन्तरेण पूर्वमेव वृत्तत्वात्। अतो हविर्द्रव्यस्य दृष्टं यत्प्रयोजनं होमरूपं तस्य बाधः स्यात्। तादृशप्रयोजनार्थत्वं तस्या यवाग्वा न स्यात्। किं च तादृशपाकविधानान्यथानुपपत्त्या तस्यादृष्टं किंचिदपूर्वं फलं कल्पनीयं च स्यादिति भावः।

अथ क्रमबोधकं तृतीयं पठनप्रमाणं निरूपयति-पदार्थेति। यथार्थप्रत्ययमिति। स्मृतस्योपेक्षानर्हत्वात्स्मरणक्रमानुसारेणैवानुष्ठानक्रमस्योचितत्वात्। पाठं विभजते-स चेति। मन्त्रपाठ इति। कर्मानुष्ठानकाले समुच्चार्यमाणा मन्त्राः। ते च कर्माङ्गभूतदेवतादिपदार्थाभिधायकाः सन्तो देवतादिपदार्थान्स्मारयन्ति। एतद्देवतादिपदार्थस्मरणमेव मन्त्रोच्चारणस्य फलम्। एतच्च दृष्टं फलमिति न तस्यादृष्टं फलं किंचित्। दृष्टे फले संभवत्यदृष्टफलकल्पनाया अन्याय्यत्वात्। अपूर्वरूपमदृष्टं फलं तु मन्त्रोच्चारणपूर्वकदेवतादिपदार्थस्मरणस्य। मन्त्रोच्चारणपूर्वकदेवतादिपदार्थस्मरणस्य नियमविधिना बोधितत्वात्। येन क्रमेण च मन्त्राः पठ्यन्ते तेनैव क्रमेण तेनुष्ठानकाल उच्चार्यन्ते। तेनैव च क्रमेण पदार्थाः स्मृता भवन्ति। ततस्तेनैव क्रमेण तत्तत्पदार्थाङ्गकानि कर्माण्यनुष्ठीयन्ते। अयं मन्त्रपाठक्रमः। ब्राह्मणवाक्यानि तु नानुष्ठानकाल उच्चार्यन्ते। किंतु केवलमेवमेवं कर्माणि कर्तव्यानीत्येवं कर्माणि बोधयन्ति। येन क्रमेण च ब्राह्मणवाक्यानि पठ्यन्ते तेनैव च क्रमेण तद्विहितानि कर्माणि स्मर्यन्ते। ततस्तेनैव क्रमेण कर्माण्यनुष्ठीयन्ते। अयं ब्राह्मणपाठक्रमः। तत्राग्नेयेति। तैत्तिरीयसंहितायां द्वितीये काण्डे पञ्चमप्रपाठके द्वितीयेनुवाके ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत् (तै. सं. २।५।२।३) इत्यग्नीषोमीययाग उक्तः। तत्रैव च तदुत्तरं षष्ठप्रपाठके तृतीयानुवाके यदाग्नेयोष्टाकपालोमावास्यायां च पौर्णमास्यां चाच्युतो भवति (तै. सं. २।६।३।३)

स चायं मन्त्रपाठो ब्राह्मणपाठाद्बलवान् । अनुष्ठाने ब्राह्मणवाक्यापेक्षया मन्त्रवाक्यस्यान्तरङ्गत्वात् । ब्राह्मणवाक्यं हि प्रयोगाद्बहिरेवेदमेवं कर्तव्यमित्येवमवबोध्य कृतार्थमिति न पुनः प्रयोगकाले व्याप्रियते । मन्त्राः पुनरनन्यप्रयोजनाः प्रयोगसमवेतार्थस्मारका इति वक्ष्यामः । तेनानुष्ठानक्रमस्य स्मरणक्रमाधीनत्वात् तत्क्रमस्य च मन्त्रक्रमाधीनत्वादन्तरङ्गो मन्त्रपाठ इतरस्मादतिबलवान् । अत एवाग्नेयाग्नीषोमीययोर्ब्राह्मणपाठादादावग्नीषोमीयानुष्ठानं पश्चादाग्नेयानुष्ठानमित्येवं क्रमं बाधित्वा मन्त्रपाठादादावाग्नेयानुष्ठानं पश्चादग्नीषोमीयस्येत्येव क्रम इत्युक्तम् ।

प्रयाजानां समिधो यजति तनूनपातं यजति ( तै. सं. २।६।१ ) इत्येवं विधायकवाक्यक्रमाद्यः क्रमः स ब्राह्मणपाठक्रमः । अत्र च यद्यपि ब्राह्मणवाक्यान्यर्थं विधाय कृतार्थानि तथापि प्रयाजानां

---

इत्याग्नेययाग उक्तः । इमानि च वाक्यानि यद्यपि सांप्रतं संहितात्वेन प्रसिद्धे वेदभागे दृश्यन्ते तथापि विधायकत्वेन ब्राह्मणलक्षणाक्रान्तत्वाद्ब्राह्मणवाक्यानीत्यत्रोच्यते । एतादृशब्राह्मणपाठक्रमानुरोधेनाग्नेययागात्पूर्वमग्नीषोमीययागोऽनुष्ठेयो भवति । परंतु मन्त्रकाण्डे अग्निर्मूर्धा ( तै. ब्रा. ३।५।७।१ ) इत्येवमाग्नेया मन्त्राः पूर्वं पठिताः । ततोऽग्नीषोमा सवेदसा ( तै. ब्रा. ३।५।७।२ ) इत्येवमादयोऽग्नीषोमीया मन्त्राः पठिताः । मन्त्रा अप्येते सांप्रतं ब्राह्मणत्वेन प्रसिद्धे वेदभागे दृश्यन्ते । तत्र चानुष्ठानकाले समुच्चार्यमाणैर्मन्त्रैर्यत्तत्प्रतिपाद्यदेवतादिपदार्थस्मरणद्वारा तादृशपदार्थाङ्गककर्मस्मरणं तदनुष्ठानकालेऽनुच्चार्यमाणैर्दूरत एवावस्थाय कर्मविधायकैर्ब्राह्मणवाक्यैर्यत्कर्मस्मरणं तदपेक्षयान्तरङ्गमिति तदन्तरङ्गस्मरणं येन क्रमेण जायते तेनैव क्रमेणानुष्ठानं भवति । तथा चैतन्मन्त्रपाठस्योदाहरणम् । प्रयोगाद्बहिरिति । ब्राह्मणवाक्यं हि कर्मविधायकम् । तादृशवाक्यस्योच्चारणं तु कर्मानुष्ठानकाले नावश्यकम् । नह्यहरहः संध्यामुपासीतेति संध्योपासनविधायकं वाक्यं संध्योपासनकाले समुच्चार्यते । अनन्यप्रयोजना इति । कर्माङ्गभूतदेवतादिपदार्थस्मरणादन्यन्न किमपि मन्त्रोच्चारस्य फलं दृश्यते । वक्ष्याम इति । विधिनिरूपणानन्तरं मन्त्रनिरूपणावसरे इत्यर्थः ।

ब्राह्मणपाठक्रममुदाहरति-प्रयाजानामिति । समिधो यजति तनूनपातं यजति ( तै. सं. २।६।१ ) इत्यादीनि वाक्यानि तैत्तिरीयसंहितायां पठ्यन्ते । तानि च कर्मविधायकत्वेन ब्राह्मणलक्षणाक्रान्तत्वादत्र ब्राह्मणत्वेन गृहीतानि । कृतार्थानीति । ननु 'घटायोन्मीलितं चक्षुः पटं नहि न पश्यति' इति न्यायेन

स्मारकान्तरस्याभावात्तान्येव स्मारकत्वेन स्वीक्रियन्ते। तथा च येन क्रमेण तान्यधीतानि तेनैव क्रमेणार्थस्मरणं जनयन्तीति युक्तं तेनैव क्रमेण तेषामनुष्ठानमिति। तत्सिद्धं प्रयाजानां ब्राह्मणपाठक्रमात्क्रम इति।

ननु प्रयाजेषु प्रयोगसमवेतार्थस्मारकत्वं विधायकत्वेन कृतार्थानां ब्राह्मणवाक्यानां किमिति स्वीक्रियते। प्रयोगसमवेतार्थस्मारकाणां याज्या-मन्त्राणामाग्नेयादिष्विवात्रापि सत्त्वात्। न च तेषां देवतास्मारकत्वात्कर्म-

---

ब्राह्मणवाक्यानां कृतार्थत्वेपि स्मारकत्वं कुतो नेतिचेन्नैवेदेवं यद्यनुष्ठानकाले तेषामुच्चारणं विहितं स्यात्। अर्थविधानार्थं तु नानुष्ठानकाले उच्चारणम्। अर्थविधिज्ञानस्यानुष्ठानात्प्रागेवापेक्षितत्वात्। स्मारकान्तरस्याभावादिति। ब्राह्मणवाक्यव्यतिरिक्तस्य मन्त्रस्य स्मारकस्याभावादित्यर्थः। तदानीमुच्चार्य-माणा मन्त्रास्तु द्रव्यदेवतादिपदार्थप्रतिपादकत्वात्साक्षात्तत्तत्पदार्थस्मारका एव। यद्यपि तत्तत्पदार्थस्मरणद्वारा तत्तत्पदार्थाङ्गककर्मस्मरणमपि ते कर्तुं शक्नु-युस्तथापि परंपरया मन्त्राणामर्थस्मारकत्वकल्पनापेक्षया साक्षात्कर्मविधाय-कानां ब्राह्मणवाक्यानामेवात्र कर्मस्मारकत्वेन स्वीकार उचितः। न चानुष्ठान-काले ब्राह्मणवाक्यानां साक्षात्कर्मविधायकानामप्युच्चारणाभावेन कथं तेषां कर्मस्मारकत्वमिति वाच्यम्। कर्मानुष्ठानात्प्राक्कर्मविधिज्ञानार्थं कर्मविधा-यकब्राह्मणवाक्यपाठस्यावश्यकत्वेन तेषां स्वाध्ययनजन्यसंस्कारद्वारानुष्ठान-काले कर्मस्मारकत्वस्य वक्तुं शक्यत्वात्। न चैवं यथा मन्त्राणां देवतादि-पदार्थद्वारा परंपरया कर्मस्मारकत्वं तथैव ब्राह्मणवाक्यानामपि संस्कारद्वारा परंपरयैव कर्मस्मारकत्वमित्येवमुभयोः साम्ये किमिति ब्राह्मणवाक्यानामे-वात्र स्मारकत्वमाश्रीयत इति वाच्यम्। संस्कारद्वारा स्मारकाणीत्यस्य सूक्ष्मरूपेण विद्यमानानि ब्राह्मणवाक्यान्येव स्मारकाणीति तात्पर्यादित्याशयः। तत्सिद्धमिति। तथा च क्रमेण वा नियम्येत॰ (जै. ५।१।४) इति सूत्रे शास्त्रदीपिकायां समिधो यजति (तै. सं. २।६।१) इत्यादिविधिवाक्य-पाठक्रमेणानुष्ठानक्रम इत्युक्तम्। शक्यते च विधिवाक्येभ्योपि संबन्धनिमित्तं स्मरणं प्रयोगकाले पदार्थानां कर्तुमिति चोक्तम्। शाबरभाष्ये च ब्राह्मणवाक्यपाठक्रमोत्रानुष्ठानक्रमप्रयोजक इत्युक्तम्। अमुमाशयमसहमानः शङ्कते—ननु प्रयाजेष्विति। अत्रापि सत्त्वादिति। समिधो अग्न आज्यस्य व्यन्तु। तनूनपादग्न आज्यस्य वेतु (तै. ब्रा. ३।५।५) इत्येवं तैत्तिरीयब्राह्मणे प्रयाजयाज्यामन्त्राः पठ्यन्ते। तथा चेदं मन्त्रपाठस्यैवोदाहरणमिति भावः। देवतास्मारकत्वादिति। अनुष्ठानकाले हि कर्मस्मरणमावश्यकम्। तथाच

स्मारकत्वेन ब्राह्मणवाक्यं स्वीक्रियत इति वाच्यम् । आग्नेयादिष्वपि कर्मस्मारकत्वेन तत्स्वीकारापत्तेः । न चेष्टापत्तिः । तथा सति ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वं न स्यात् । तद्बलीयस्त्वे हि मन्त्राणां प्रयोगसमवेतार्थस्मारकत्वमितरस्य तदस्मारकत्वं हेतुः । यदि च कर्मस्मारकत्वं ब्राह्मणवाक्यस्य स्वीक्रियेत तदा प्रधानस्मारकत्वेन ब्राह्मणवाक्यस्यान्तरङ्गत्वादङ्गभूतदेवतास्मारकत्वेन च मन्त्राणां बहिरङ्गत्वान्मन्त्रपाठाद्ब्राह्मणपाठस्यैव बलीयस्त्वं स्यात् । तथा च मन्त्रतस्तु विरोधे स्यात् ( जै. सू. ५।१।१६ ) इति पाञ्चमिकाधिकरणविरोधः । तत्र हि ब्राह्मणपाठान्मन्त्रपाठस्य बलीयस्त्वादादावाग्नेयानुष्ठानं पश्चादग्नीषोमीयस्येत्युक्तम् ।

अथ—आग्नेयादिषु याज्यामन्त्रा एव देवताप्रकाशनद्वारा कर्मप्रकाशकाः

---

कर्मबोधकत्वेन साक्षात्कर्मस्मारकेषु ब्राह्मणवाक्येषु सत्सु कर्माबोधकानामत एव परंपरया कर्मस्मारकाणां मन्त्राणां स्मारकत्वेनाश्रयणमनुचितमित्याशयः । तत्स्वीकारापत्तेरिति । तथाचाग्नेयानुष्ठानात्पूर्वमग्नीषोमीयानुष्ठानं स्यात् । प्रयोगसमवेतेति । मन्त्रा हि देवताविशेषं हविर्द्रव्यविशेषं वा प्रतिपाद्य तद्द्वारैव कर्मस्मारका भवन्तीति सत्यमेव । किंतु तद्द्वारं प्रयोगघटकं भवति । ब्राह्मणवाक्यानि तु संस्कारद्वारा कर्मस्मारकाणि । संस्कारश्च कर्माघटकः । तथा च कर्मघटकेनार्थेन यथा कर्मस्मरणं नियतं भवेन्न तथा कर्माघटकेन संस्कारेण । किं च संस्कारोऽनुष्ठानपर्यन्तं नैव विनश्यतीत्यत्र न किंचित्प्रमाणम् । तथा च कदाचिद्विनाशे कथं कर्मस्मरणं स्यात् । अतो मन्त्रा एव कर्मस्मारकत्वेनास्थेया इति भावः । प्रधानस्मारकत्वेनेति । कर्मस्मरणद्वारीभूतदेवताविशेषहविर्द्रव्यविशेषस्मारका मन्त्राः । देवता हविर्द्रव्यं च कर्माङ्गत्वेन कर्मापेक्षया अप्रधानम् । तथा च तदपेक्षया प्रधानीभूतं यत्कर्म तत्स्मारकत्वाद्ब्राह्मणवाक्यमेव कर्मस्मारकत्वेन स्वीकार्यमित्याशयः । मन्त्रतस्त्विति । मन्त्रतस्तु विरोधे स्यात्प्रयोगरूपसामर्थ्यात्तस्मादुत्पत्तिदेशः सः ( जै. सू. ५।१।१६ ) इति सूत्रम् । अस्यार्थः । ब्राह्मणपाठक्रमस्य मन्त्रतो मन्त्रपाठक्रमेण विरोधे मन्त्रपाठक्रमेणानुष्ठानं स्यात् । प्रयोगरूपे प्रयोगरूपक्रियोत्पत्तौ मन्त्राणां सामर्थ्यात्कारणत्वात् । नह्यनुष्ठीयमानक्रियास्मरणमन्तरानुष्ठानं संभवति । तत्स्मरणं च मन्त्राधीनम् । अतो मन्त्रक्रमः प्रबलः । स ब्राह्मणपाठस्तूत्पत्तिदेशः । विधायकवाक्यत्वात् प्रयोगाद्बहिर्भूतः । तथा च स विधिमवबोध्य चरितार्थं इत्यतोऽनुष्ठानस्मरणायैवोत्पन्नान्मन्त्रान्बाधितुं न प्रभवतीति ।

अथाग्नेयादिष्विति । देवताप्रतिपादका मन्त्रा देवतास्मरणद्वारा कर्म-

त्यज्यमानद्रव्योद्देश्यत्वरूपत्वाद्देवतात्वस्येति चेत्तुल्यं प्रयाजेषु । तत्रापि हि याज्यामन्त्रा देवताप्रकाशकाः । प्रयाजेषु देवताया मान्त्रवर्णिकत्वात् । तथाच प्रयाजेषु याज्यामन्त्राणां देवताप्रकाशनद्वारा कर्मप्रकाशकत्वात्तत्क्रमो मन्त्रपाठादेव स्यान्न तु ब्राह्मणपाठक्रमात् ।

नच मन्त्रपाठस्यान्यादृशत्वात् प्रयाजक्रमो ब्राह्मणपाठक्रमादेवेति वाच्यम् । अन्यादृशत्वे तस्यैव क्रमस्यानुष्ठानं स्यात् । मन्त्रक्रमस्य बलीयस्त्वात् । अभ्यासाधिकरणे ( २।२।२ ) च वार्तिककृता क्रमविनियुक्तैवंलिङ्गकमन्त्रवर्णेत्यादिना प्रयाजेषु याज्यामन्त्राणां क्रमविनियोग उक्तः । नवमे तन्त्ररत्ने समिधः समिधोऽग्न आज्यस्य व्यन्त्वित्यादिभिः क्रम-

---

स्मारका इति तु सत्यमेव । तत्रापि मन्त्रा देवतां न केवलं स्वरूपतः प्रतिपादयन्ति । किं तु त्यज्यमानहविर्द्रव्योद्देश्यत्वरूपं यद्देवतात्वं तेन रूपेण प्रतिपादयन्ति । तथा च मन्त्रेभ्यो देवतानां त्यज्यमानद्रव्योद्देश्यत्वेनोपस्थितौ कर्मस्मरणमवश्यमेव भवेत् । किंच यथा कर्मविधायकत्वात्साक्षात्कर्मस्मारकत्वं ब्राह्मणवाक्यानां तथा मन्त्राणां कर्मस्वरूपप्रकाशकत्वात्साक्षादेव कर्मस्मारकत्वम् । हविर्द्रव्यं तत्त्यागोद्देश्यभूता देवता चेति कर्मणो रूपद्वयम् । तथाच देवताप्रतिपादकानां मन्त्राणां कर्मस्वरूपप्रतिपादकत्वमेवेति साक्षादेव कर्मस्मारकत्वम् । अतः समिधो यजति तनूनपातं यजति । इडो यजति । बर्हिर्यजति । स्वाहाकारं यजति । ( तै. सं. २।६।१ ) इत्येवं पञ्चसु वाक्येषु पृथक्पृथक् पञ्चकृत्वो यजतिशब्दप्रयोगेण तादृशयजतिपदाभ्यासाल्लिङ्गान्मिथोभिन्नानि पञ्च कर्माणीति सिद्धान्तितम् । तत्र प्रसङ्गतो वार्तिककारेणेदमुक्तं क्रमविनियुक्तैवंलिङ्गकमन्त्रवर्णेत्यादि । क्रमेण पाठक्रमेण विनियुक्ता एवंलिङ्गका देवतालिङ्गका ये मन्त्रवर्णाः समिधो अग्न आजस्य व्यन्तु ( तै. ब्रा. ३।५।५ ) इत्यादयस्तैर्मन्त्रैरेवात्र प्रयाजेषु समिदादिदेवता ज्ञायन्त इति तदर्थः । मन्त्रेषु समित्तनूनपादादिशब्दा देवतावाचिन इति प्रागुक्तमेव । अत्र वार्तिकोक्तौ मन्त्रवर्णस्य क्रमविनियुक्तेति विशेषणेन मन्त्रपाठादत्र क्रमो ज्ञायत इति सूचितम् । नवम इति । नवमाध्याये द्वितीयपादे विंशाधिकरण इदमुक्तम् । समिधो यजति ( तै. सं. २।६।१ ) इत्यादिषु समिदादियागविधायकेषु ब्राह्मणवाक्येषु समिदादयः शब्दाः कर्मनामधेयत्वेन निर्दिष्टा नतु तैस्तत्र यागीयदेवतावगमः । देवतात्वद्योतको नात्र देवतार्थकस्तद्धितप्रत्ययो दृश्यते । नापि चतुर्थीप्रत्ययो दृश्यते । नाप्ययं मन्त्रवर्णः । समिदादीनां देवतात्वं तु समिधः समिधोऽग्ने ( तै. ब्रा. ३।५।५ ) इत्यादिभिर्मन्त्रैरवगम्यत इत्युक्तम् । तत्र क्रम-

प्रकरणप्राप्तैर्मन्त्रैर्देवता गुणत्वेन समर्प्यन्त इत्युक्तम् । मन्त्राणामन्यादृशक्रमत्वे तदनुपपत्तिः स्यात् । तत्कथं प्रयाजेषु ब्राह्मणपाठक्रमात्क्रम इतिचेदुच्यते ।

सत्यमेतत् । तथापि यत्रार्थस्मारका मन्त्रा न सन्त्येव यथा तूष्णीं विहितेषु कर्मसु, तेषां क्रमो ब्राह्मणपाठक्रमात् । तत्र तेषामेव प्रयोगसमवेतार्थस्मारकत्वात् । प्रयाजोदाहरणं तु कृत्वाचिन्तया । तत्र ब्राह्मणवाक्यानां प्रयोगसमवेतार्थस्मारकत्वाभावात् । यथाहुरर्थवादचरणे वार्तिककाराः—

'प्रयाजादिवाक्यान्यर्थं समर्प्य चरितार्थानि
स्वरूपसंस्पर्शे सत्यपि प्रयोज्यतां न प्रतिपद्यन्ते' इति ।

तस्मात्समन्त्रककर्मणां मन्त्रपाठक्रमात्क्रमः । अमन्त्रककर्मणां क्रमस्तु ब्राह्मणपाठक्रमादेवेति दिक् ।

---

प्रकरणप्राप्तैरित्युक्त्वा मन्त्रपाठक्रम एव स्वीकृतः । किं च मन्त्रपाठस्य ब्राह्मणपाठापेक्षयान्यादृशत्वे समिधो यजति (तै. सं. २।६।१) इत्यादिब्राह्मणपाठक्रमेण यस्मिन्यागे या देवतावगन्तुं शक्यते सा देवता न तस्मिन्यागे मन्त्रपाठादवगता भवेत् । तथा च मन्त्रलिङ्गादेव तत्तद्यागे तत्तद्देवताया अवगमाद्ब्राह्मणवाक्यस्थसमिदादिशब्दानां तत्प्रख्यन्यायेन नामधेयत्वं सर्वसंमतं न सिध्येत् । तदाह–<u>मन्त्राणामन्यादृशेति</u> । <u>सत्यमेतदिति</u> । युक्तियुक्तत्वादेतत्सर्वं शङ्काकृदुक्तमङ्गीक्रियत एवेत्यर्थः । <u>यत्रार्थस्मारका इति</u> । ब्राह्मणपाठक्रमस्य उदाहरणमेव नास्तीति न मन्तव्यमित्यर्थः । <u>कृत्वा चिन्तयेति</u> । ब्राह्मणपाठक्रमाङ्गीकारस्यान्यार्थमावश्यकत्वे प्रयाजोदाहरणं तेनापि सिद्धं भवतीति कृत्वा तदभिप्रायेण तत्र चिन्ता कृता । प्रयोगाद्बहिरवस्थितानां ब्राह्मणवाक्यानां कथं प्रयोगकालिकक्रमबोधकत्वं संभवतीत्येतदुपपादनायेति भावः । <u>प्रयोगसमवेतेति</u> । प्रयोगसमवेता ये हविरादयः पदार्थास्तत्स्मारकत्वं ब्राह्मणवाक्यानां नास्ति । तानि च प्रयोगाद्बहिरेवावस्थितानि केवलं कर्म बोधयन्ति । यत्र च मन्त्रा न सन्ति तत्रागत्या कर्म विधाय चरितार्थानामपि ब्राह्मणवाक्यानां संस्कारद्वारा क्रमोद्बोधकत्वं स्वाकार्यं नतु तथा मन्त्रसत्त्व इति भावः । <u>अर्थवादचरण इति</u> । प्रथमाध्यायस्य द्वितीयः पादोऽर्थवादचरणः । तत्रान्तिमे मन्त्राधिकरण इत्थं वार्तिककारैरुक्तम् । <u>प्रयाजादिवाक्यानीति</u> । समिधो यजति (तै. सं. २।६।१) इत्यादीनि प्रयाजादिविधायकानि ब्राह्मणवाक्यानीत्थं कर्म कर्तव्यमित्यवबोध्य चरितार्थानि कर्मस्वरूपबोधकत्वात्स्वरूपस्पृष्टान्यप्यनुष्ठानकाले प्रयोगार्हाणि न भवन्तीत्यर्थः ।

प्रकृतौ नानादेशस्थानां पदार्थानां विकृतौ वचनादेकस्मिन्देशेऽनुष्ठाने कर्तव्ये यस्य देशेऽनुष्ठीयन्ते तस्य प्रथममनुष्ठानमितरयोश्च पश्चात्-अयं यः क्रमः स स्थानक्रमः।

स्थानं नामोपस्थितिः। यस्य हि देशेऽनुष्ठीयते तत्पूर्वतने पदार्थे कृते स एव प्रथममुपस्थितो भवतीति युक्तं तस्य प्रथममनुष्ठानम्। अत एव साद्यस्केऽग्नीषोमीयसवनीयानुबन्ध्यानां सवनीयदेशे सहानुष्ठाने कर्तव्य आदौ सवनीयपशोरनुष्ठानम्। तस्मिन्देशे आश्विनग्रहणानन्तरं सव-

---

अथ चतुर्थं स्थानक्रमं लक्षयति-प्रकृताविति। यथा लोके ग्रामाधिपतयः (पाटील-कुलकर्णी इति प्रसिद्धाः) स्वस्वग्रामीयायव्ययादिव्यवस्थां राजशासनानुरोधेन कुर्वन्ति एवमेवं कृतमिति च स्वे स्वे आयव्ययपुस्तके विलिखन्ति च। यदा च तत्कृता व्यवस्था योग्या न वेति परीक्षितुकामो राज्ञा नियुक्तस्तदधिकारी तामवलोकयितुं तत्तद्ग्रामे गच्छति तदालस्येन कश्चिदधिकारी कस्मिंश्चिदेकस्मिन्ग्रामे गत्वा तत्समीपग्रामाधिपतींस्तत्रैव तत्तल्लिखितपुस्तकैः सहाह्वयति। तदा च यस्मिन्ग्रामे स तिष्ठति तद्ग्रामीया तद्ग्रामाधिपतिकृता व्यवस्था पूर्वमवलोक्यते उपस्थितत्वात्। पश्चाद्ग्रामान्तरीयावलोक्यते तद्वदेवायं स्थानक्रमः। यदि च पूर्वं निर्दिष्टानि परीक्ष्यग्रामनामानि स्थानक्रमविपरीतक्रमेण निर्दिष्टानि स्युश्चेत्तादृशनिर्देशक्रमेणैव तत्तद्ग्रामपरीक्षा क्रियते नतु स्थानक्रमेण। स्थानक्रमापेक्षया पाठक्रमस्य बलीयस्त्वात्। यदि च क्वचिद्ग्रामनामनिर्देशानन्तरं ग्रामटिका-(त्या गांवाखालची वाडी) नाम निर्दिष्टं स्यात्तत्र च ग्रामटिकाव्यवस्थायास्तादृशग्रामाधिपत्यधीनत्वाद्ग्रामटिकापरीक्षणात्पूर्वं तादृशग्रामपरीक्षणं नैव कर्तुं शक्यते चेत्तत्र पाठक्रमं बाधित्वा ग्रामटिकाव्यवस्था पूर्वं निरीक्ष्यते पश्चाद्ग्रामव्यवस्था। पाठक्रमापेक्षयाप्यार्थक्रमस्य बलीयस्त्वात्। नानादेशस्थानामिति। देशपदेनात्र कर्माधिकरणीभूतः कालो गृह्यते। तस्य प्रथममिति। देशविशेषसंबन्धेन तद्देशीयस्य प्रथममुपस्थितत्वादुपस्थितस्य चानुष्ठानविलम्बे प्रमाणाभावोऽत्र प्रथमतोऽनुष्ठाने बीजम्।

साद्यस्क इति। सद्यः क्रीयते सोमोऽस्मिन्निति साद्यस्क्रो यागविशेष एकाहसाध्यः। क्रीधातोरधिकरणे डप्रत्ययः। ततः स्वार्थेऽण्प्रत्ययः। आदौ सवनीयेति। एतच्च स्थानाच्चोत्पत्तिसंयोगात् (जै. सू. ५।१।१३) इति सूत्र उक्तम्। साद्यस्के सह पशूनालभते इति श्रूयते। प्रकृतावग्नीषोमीयपशुरौपवसथ्ये पूर्वदिने आलभ्यते। सवनीयपशुस्तु सुत्यादिने प्रातःसवने

नीयस्यैव प्रथममुपस्थितेः । इतरयोस्तु पश्चात् ।

तथा हि ज्योतिष्टोमे त्रयः पशुयागाः, अग्नीषोमीयः सवनीयः आनुबन्ध्यश्चेति । ते च भिन्नदेशाः । अग्नीषोमीय औपवसथ्येऽह्नि । सवनीयः सुत्याकाले । आनुबन्ध्यस्त्वन्ते । साद्यस्को नाम सोमयागविशेषः । स चाव्यक्तत्वाज्ज्योतिष्टोमविकारः । अतस्ते त्रयोऽपि पशुयागाः साद्यस्के चोदकप्राप्ताः । तेषां च तत्र साहित्यं श्रुतं 'सह पशूनालभेत' इति । तच्च साहित्यं सवनीये देशे । तस्य प्रधानप्रत्यासत्तेः । स्थानातिक्रमसाम्याच्च ।

---

आश्विनग्रहानन्तरमालभ्यते । अनुबन्ध्यः पशुश्चावभृथानन्तरमालभ्यते । साद्यस्केतु ते त्रयोपि पशव उक्तवचनात्सहालब्धव्याः । तच्च साहित्यं त्रयाणां मध्ये कस्यचिदेकस्यालम्भनकाले इतरयोर्द्वयोर्योग्यमालम्भनकालं परित्यज्य तत्रैवालम्भनं क्रियते चेत्तदैव संभवति नान्यथा । सोयं सहालम्भः किमग्नीषोमीयपश्वालम्भनसमयेथवा सवनीयपश्वालम्भनसमये उतानुबन्ध्यपश्वालम्भनसमये इति संशये सवनीयपश्वालम्भनसमय एवेति निर्णीयते । प्रधानसोमप्रत्यासत्तिलाभात् । तथा च सुत्याकाल आश्विनग्रहानन्तरं सहालम्भः कार्यः । साहित्यं चात्राव्यवधानेनानुष्ठानं कृत्वा संपादनीयम् । यौगपद्यासंभवात् । क्रमेण चानुष्ठाने कर्तव्ये प्रथमतः कस्य पशोरालम्भनमिति संशये आश्विनग्रहानन्तरं सवनीयपश्वालम्भनस्योपस्थितत्वात्तदेव प्रकृतेन स्थानक्रमेणानुष्ठीयते । इतरयोरग्नीषोमीयानुबन्ध्ययोः स्थानभ्रष्टयोः प्रकृताविव क्रमो द्रष्टव्यः । सवनीयानन्तरमग्नीषोमीयस्ततं आनुबन्ध्य इति । अग्नीषोमीयः पशुरानुबन्ध्यात्पूर्वं प्रकृतौ पाठक्रमेणानुष्ठीयते । चोदकेन च ते तथैव विकृतौ प्राप्नुवन्ति । प्रथममुपस्थितेरिति । प्रथमं बुद्ध्यारूढत्वादित्यर्थः । अव्यक्तत्वादिति । अव्यक्तत्वं च स्वार्थचोदितदेवताराहित्यमिति प्रागुक्तम् (पृ. ६२ प. १)। साद्यस्कस्याव्यक्तत्वेन ज्योतिष्टोमसादृश्यमिति ज्योतिष्टोम एव साद्यस्कस्य प्रकृतिः । साद्यस्के चेतिकर्तव्यताकाङ्क्षायां चोदकेन ज्योतिष्टोमीयेतिकर्तव्यता तत्र संबध्यते । सादृश्यसंबन्धेन ज्योतिष्टोमस्योपस्थितत्वात् । प्रकृतिवद्विकृतिरित्यतिदेशश्चोदकशब्देन गृह्यते ।

स्थानातिक्रमेति । भिन्नस्थानानां त्रयाणामेकत्र सहानुष्ठानं कर्तव्यं चेत्तेषां त्रयाणां मध्ये काभ्यामपि द्वाभ्यां स्वस्थानातिक्रमदोषः सोढव्यो भवति । याभ्यां चायं दोषः सह्यते ताभ्यां साम्येनैवायं सह्यो भवति न तारतम्येन । अगत्या दोषः सह्यश्चेत्कस्तत्राधिकं दोषं स्वीकर्तुमुत्सहते । स्थानातिक्रमश्च स्वस्थानत्यागपूर्वकमन्यदीयस्थानसंबन्धः । अन्यदीयं स्थानं

सवनीयदेशे ह्यनुष्ठाने क्रियमाणे अग्नीषोमीयानुबन्ध्ययोः स्वस्वस्थानातिक्रममात्रं भवति। अग्नीषोमीयदेशे ह्यनुष्ठाने क्रियमाणे सवनीयस्य स्वस्थानातिक्रममात्रम्। आनुबन्ध्यस्य तु स्वस्थानातिक्रमः सवनीयस्थानातिक्रमश्च स्यात्। एवमानुबन्ध्यदेशेऽग्नीषोमीयस्य द्रष्टव्यः।

तथा च सवनीये देशे सर्वेषामनुष्ठाने कर्तव्ये सवनीयस्य प्रथममनुष्ठानम्। आश्विनग्रहणानन्तरं हि सवनीयदेशः। प्रकृतौ आश्विनं ग्रहं गृहीत्वा त्रिवृता यूपं परिवीयाग्नेयं सवनीयं पशुमुपाकरोति (शत. ब्रा. ४।२।४।१२, आप. श्रौ. १२।१८।१२) इत्याश्विनग्रहणानन्तरं तस्य विहितत्वात्। तथा च साद्यस्केप्याश्विनग्रहणे कृते सवनीय एवोपस्थितो भवतीति युक्तं तस्य स्थानात्प्रथममनुष्ठानमितरयोश्च पश्चादित्युक्तम्।

प्रधानक्रमेण योऽङ्गानां क्रम आश्रीयते स मुख्यक्रमः। येन हि क्रमेण

---

चाव्यवहितं व्यवहितं चेति द्विविधम्। तत्र व्यवहितस्थानसंबन्धे दोषाधिक्यं भवति। तच्च दोषाधिक्यमुभाभ्यामप्यवश्यं स्वीकर्तव्यं चेदस्तु नाम। एकस्यैव दोषाधिक्यं तु परिहरणीयमेव। तथा च यथा द्वयोः स्थानातिक्रमरूपो दोषः समो भवति तथा तेषां सहानुष्ठानस्य स्थानं निश्चेतव्यमित्यर्थः। तच्च मध्यमं सवनीयस्थानमेव। तदाह–सवनीयदेशे हीति। स्वस्थानातिक्रममात्रमिति। एवं चाग्नीषोमीयानुबन्ध्ययोर्द्वयोरपि सम एव दोष इति भावः। सवनीयस्थानातिक्रमश्चेति। एवं च सवनीयापेक्षयानुबन्ध्यस्य दोषाधिक्यं स्यात्। एवमानुबन्ध्यदेशे सहानुष्ठानं चेत्तत्र सवनीयापेक्षयाग्नीषोमीयस्य दोषाधिक्यं स्यात्। त्रिवृतेति। त्रिगुणया रज्ज्वा यूपपरिवेष्टनं कृत्वा ततः सवनीयपशोर्मन्त्रोच्चारणपूर्वकमुपस्पर्शनं कर्तव्यमित्यर्थः। अथ मुख्यक्रमं लक्षयति–प्रधानक्रमेणेति। येन हीति। यथा ग्रहयज्ञे मुख्यानामादित्यादीनां केत्वन्तानां नवानां ग्रहाणां क्रमेणावाहने कृते तत्तदधिदेवतानामपि तेनैव क्रमेणावाहनं क्रियते पूर्वमादित्याधिदेवतायास्ततः सोमाधिदेवताया इत्यादि। एवं क्रियमाणे आदित्यावाहनादित्याधिदेवतावाहनयोर्मध्ये सोमादिकेत्वन्तावाहनाष्टकेन व्यवधानं भवति। सोमावाहनसोमाधिदेवतावाहनयोर्मध्ये भौमादिकेत्वन्तावाहनसप्तकमादित्याधिदेवतावाहनमेकं चेत्येतावतावाहनाष्टकेनैव व्यवधानं भवति। तथा भौमवाहनभौमाधिदेवतावाहनयोर्मध्ये बुधादिकेत्वन्तावाहनषट्कमादित्याधिदेवतासोमाधिदेवतयोरावाहनद्वयं चेत्येतावतावाहनाष्टकेनैव व्यवधानं भवति। एवं सर्वत्रोह्यम्। यदि चात्र व्युत्क्रमेणावाहनं क्रियते यथा केतोरा-

प्रधानानि क्रियन्ते तेनैव चेत् क्रमेण तेषामङ्गान्यनुष्ठीयन्ते तदा सर्वेषामङ्गानां स्वैः प्रधानैस्तुल्यं व्यवधानं भवति । व्युत्क्रमेण त्वनुष्ठाने केषांचिदङ्गानां स्वैः प्रधानैरत्यन्तमव्यवधानमन्येषामत्यन्तं व्यवधानं स्यात् । तच्चायुक्तम् । प्रयोगविध्यवगतसाहित्यबाधापत्तेः । अतः प्रधानक्रमोऽप्यङ्गक्रमे हेतुः ।

अत एव प्रयाजशेषेणादावाग्नेयहविषोऽभिघारणं पश्चादैन्द्रस्य दध्नः । आग्नेययागैन्द्रयागयोः पौर्वापर्यात् । अत्र हि द्वयोरभिघारणयोः स्वेन स्वेन प्रधानेन तुल्यमेकान्तरितव्यवधानं भवति । आग्नेयहविरभिघारणाग्नेययागयोरैन्द्रहविरभिघारणेन व्यवधानात् । ऐन्द्रहविरभिघारणैन्द्रयागयोश्चाग्नेययागेन व्यवधानात् ।

---

वाहनोत्तरं केत्वधिदेवतावाहनं ततो राह्वधिदेवताया इत्यादि । ततः केत्वावाहनकेत्वधिदेवतावाहनयोरत्यन्तमव्यवधानं स्यात् । राह्वावाहनराह्वधिदेवतावाहनयोर्मध्ये केतुतदधिदेवतावाहनद्वयेन व्यवधानं स्यात् । शन्यावाहनतदधिदेवतावाहनयोर्मध्ये आवाहनचतुष्टयेन व्यवधानं स्यात् । एवं क्वचिदावाहनानां षट्केन क्वचिदष्टकेनेत्येवमादित्यतदधिदेवतावाहनयोर्मध्ये आवाहनषोडशकेन व्यवधानं स्यात् । एवमनुक्रमं व्युत्क्रमं च विहाय यथेच्छमावाहनेऽपि सर्वत्र मुख्यदेवतावाहनतदधिदेवतावाहनयोर्मध्ये व्यवधानसाम्यं न स्यात् । अगत्या व्यवधानं सोढव्यं चेत्सर्वैः साम्येन व्यवधानं सोढुं शक्यं भवति न तारतम्येन । कोह्यधिकं व्यवधानं सोढुमुत्सहते । <u>प्रयोगविधीति ।</u> प्रयोगविधिना ह्यङ्गेन सह प्रधानमनुष्ठेयतया बोध्यते । युगपदनुष्ठानमसंभावि चेदेकमनुष्ठायाव्यवधानेनापरमित्येवं साहित्यं संपादनीयम् । तावतापि लोके साहित्यव्यपदेशदर्शनात् । अव्यवधानेनापि न संभवति चेत्तत्र प्रयोगविधिबोधितस्य साहित्यस्य बाधो वक्तव्यः । सोऽपि च बाधो येन नाव्यवधानं तावतैव वचनप्रामाण्यान्नत्वधिकेनेति भावः । <u>अत एवेति ।</u> मुख्यक्रमादेवेत्यर्थः । दर्शपूर्णमासप्रकरणे प्रयाजानिष्ट्वा हवींष्यभिघारयति ( तै. सं. २।६।१।६ ) इति श्रूयते । प्रयाजानिष्ट्वा तच्छेषेणाज्येन वेद्यामासादितानां हविषामभिघारणमनेन विधीयते । अग्रे उपयोक्ष्यमाणानां यागीयहविषां पूर्वशेषेणाभिघारणे यज्ञः संततो भवति । विच्छिन्नो न भवतीति यावत् । आग्नेययाग ऐन्द्रयागआनुपूर्व्यौ । तत्राग्नेयो यागः पूर्वं पश्चादैन्द्रयागः । याज्यानुवाक्यापाठक्रमात् । अग्निर्मूर्धा दिवः ककुत् । पतिः पृथिव्या अयम् । अपाꣳ रेताꣳसि जिन्वति ( तै. ब्रा. ३।५।७।१ ) इत्याग्नेयी पुरोनुवाक्या । अत्र पूर्वार्धेऽग्निशब्दसत्त्वात् । तदुक्तं पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति ( तै. सं. २।६।२।३ ) इति । मन्त्र-

अतश्चादावाग्नेयहविरभिघारणं तत ऐन्द्रस्य हविषः तत आग्नेययागः ततश्चैन्द्रो याग इत्येवं क्रमो मुख्यक्रमात्सिद्धो भवति । यदि त्वादावैन्द्रहविषोऽभिघारणं तत आग्नेयस्य क्रियते तदा याज्यानुवाक्याक्रमवशादादावाग्नेयस्यानुष्ठानादाग्नेययागतदङ्गहविरभिघारणयोरत्यन्तमव्यवधानमैन्द्रयागतदङ्गहविरभिघारणयोरत्यन्तं व्यवधानं स्यात् । तच्च न युक्तम् । अतो युक्तः प्रयाजशेषेणाभिघारणस्य मुख्यक्रमात्क्रम इति ।

स चासौ मुख्यक्रमः पाठक्रमाद्दुर्बलः । मुख्यक्रमो हि प्रमाणान्तरसापेक्षप्रधानक्रमप्रतिपत्तिसापेक्षतया विलम्बितप्रतिपत्तिकः । पाठक्रमस्तु निरपेक्ष-

---

प्रतिपाद्याया देवताया नामधेयं लक्ष्म । तच्च लक्ष्म यस्यामृचि पूर्वार्धे विद्यते सा पुरोनुवाक्या ज्ञेयेति तदर्थः । अत्र मूर्धन्वती पुरोनुवाक्या भवति (तै. सं. २।६।२।२) इत्युच्यते । मूर्धशब्दो यस्यामृचि अस्ति सा मूर्धन्वती अग्निर्मूर्धेति ऋक् । तथा भुवो यज्ञस्य रजसश्च नेता । यत्रा नियुद्भिः सचसे शिवाभिः । दिवि मूर्धानं दधिषे सुवर्षाम् । जिह्वामग्ने चकृषे हव्यवाहम् (तै. ब्रा. ३।५।७।१) इत्याग्नेयी याज्या । अत्रोत्तरार्धे अग्निशब्दसत्त्वात् । तदुक्तमुपरिष्टाल्लक्ष्मा याज्या (तै. सं. २।६।२।३) इति । यस्यामृच्युत्तरार्धे देवतानाम दृश्यते सोपरिष्टाल्लक्ष्मा । नियुत्वत्या यजति (तै. सं. २।६।२।३) इति श्रुत्या नियुच्छब्दवत्या ऋचा याग उच्यत इति नियुच्छब्दवती भुवो यज्ञस्येति ऋगाग्नेयी याज्या भवति । तदनन्तरं च तत्रानुवाके प्राजापत्याग्नीषोमीयैन्द्राग्नयाज्यानुवाक्याः पठित्वा तदुत्तरमैन्द्रयागीयैन्द्रसानसिं रयिम् । सजित्वानं सदासहम् । वर्षिष्ठमूतये भर (तै. ब्रा. ३।५।७।१४) इति पुरोनुवाक्या, प्रससाहिषे पुरुहूतशत्रून् । ज्येष्ठस्ते शुष्म इह रातिरस्तु । इन्द्राभर दक्षिणेनावसूनि । पतिः सिन्धूनामसि रेवतीनाम् (तै. ब्रा. ३।५।७।४) इति याज्या च पठिता । पुरोनुवाक्यायाज्यामन्त्रार्थस्तु संहिताभाष्ये (२।६।२) उक्तस्तत्रैव (आनन्दाश्रममु. पृ० ११४५।११४६।११५१) द्रष्टव्यः । अनेन पुरोनुवाक्यायाज्यापाठक्रमेणाग्नेययागः पूर्वं पश्चादैन्द्र इत्यतस्तस्मात्पूर्वं तदीयहविषः प्रयाजशेषेण क्रियमाणमभिघारणमप्याग्नेयहविषः पूर्वं पश्चादैन्द्रहविषोऽभिघारणम् । तत आग्नेयो यागः पश्चादैन्द्रो याग इति बोध्यम् । अत्यन्तं व्यवधानमिति । आग्नेयहविरभिघारणेनाग्नेययागेन चेति द्वाभ्यां व्यवधानं स्यात् । तथा चैकत्राव्यवधानमन्यत्र द्वाभ्यां व्यवधानमित्येवं वैषम्यं न युक्तमिति भावः ।

स चासाविति । श्रुत्यर्थादिप्रमाणैर्निर्णीतो यो मुख्यानां क्रमस्तदनुरोधी यस्तदङ्गानां क्रमः स मुख्यक्रमः । तथा चायमीदृशोऽङ्गानां क्रमः परमुखप्रेक्षी ।

स्वाध्यायपाठक्रममात्रसापेक्षतया न तथेति बलवान्।

अत एवाग्नेयोपांशुयाजाग्नीषोमीयानां क्रमेणानुष्ठीयमानानामप्युपांशुयाजाज्यनिर्वापो मुख्यक्रमान्न पूर्वमनुष्ठीयते। तस्य दुर्बलत्वात्। पाठक्रमात्तु पश्चादनुष्ठीयते। तस्य प्रबलत्वादिति।

स चायं मुख्यक्रमः प्रवृत्तिक्रमाद्बलवान्। प्रवृत्तिक्रमे ह्याश्रीयमाणे बहूनामङ्गानां प्रधानविप्रकर्षो भवति। अस्मिंस्तु आश्रीयमाणे संनिकर्षः।

तद्यथा दर्शपूर्णमासयोरादावाग्नेयानुष्ठानं ततः सांनाय्यस्य। तद्धर्माश्च

---

यत्र च स्वस्यासामर्थ्यं तत्रागत्या परावलम्बित्वं स्वीक्रियते लोके। यत्र चाङ्गानि क्रमेण पठितानि तत्र पाठक्रमेणैव तान्युपतिष्ठन्त इति क्रमविषये निराकाङ्क्षाणि कथं प्रधानक्रममवलम्बेयुः। उक्तोदाहरणे तु सर्वेषां हविषामभिघारणं प्रयाजानिष्ट्वा हवींष्यभिघारयति (तै.सं. २।६।१।६) इत्येकेनैव वाक्येन प्राप्तमिति तत्र कः क्रम इत्यपेक्षायां प्रधानक्रमानुरोधित्वं युज्यत एवेति भावः।

<u>अत एवेति</u>। आग्नेयानन्तरमग्नीषोमीयोऽनुष्ठेयः। तैत्तिरीयब्राह्मणे तृतीयाष्टके पञ्चमप्रपाठके सप्तमेऽनुवाके याज्यानुवाक्यामन्त्राणां तथैव क्रमेण पाठात्। तथा च यद्यपि पाठक्रमानुरोधेनाग्नेयानन्तरमव्यवधानेनाग्नीषोमीयानुष्ठानं प्राप्तं तथाप्युपांशुयाजमन्तरा यजति (तै. सं. २।६।६।४) इति श्रुत्याग्नीषोमीययागात्पूर्वमुपांशुयागोऽनुष्ठीयते। तत्र पाठक्रमः सर्वथा बाधितो न भवति किंतु मध्ये व्यवधानमात्रम्। आग्नेयाग्नीषोमीययोः पौर्वापर्यं तु न परित्यक्तं भवति। पौर्णमास्यां चैते प्रधानभूतास्त्रयो यागा आग्नेयोपांशुयाजाग्नीषोमीयाः। ते च येन क्रमेणानुष्ठीयन्ते तेनैव क्रमेण तदङ्गभूतहविर्निर्वापः कार्यः। परंतु पाठक्रमादाग्नेयाग्नीषोमीयहविर्निर्वापानन्तरमुपांशुयाजीयहविषः। तत्रोपांशुयाजे हविर्द्रव्यमाज्यम्। तण्डुलनिर्वाप आग्नेयाग्नीषोमीयार्थ एव पुरोडाशार्थम्। तत्र हविर्धर्मा निर्वापावघातादयः। उपांशुयाजार्थ स्वाज्यनिर्वापः। तत्र हविर्धर्मा उत्पवनचतुर्गृहीतत्वादयः। तैत्तिरीयसंहितायां प्रथमाष्टके प्रथमप्रपाठके चतुर्थानुवाके अग्नये जुष्टं निर्वपाम्यग्नीषोमाभ्याम् (तै. सं. १।१।४) इत्युक्तम्। ततो दशमेऽनुवाके आज्यसंस्कार उक्तः। तथाचाग्नेयहविर्निर्वापानन्तरं प्रधानक्रमानुरोधिक्रमेणाज्यनिर्वापः प्राप्तोऽपि न क्रियते। किंतु पाठक्रमानुरोधेनाग्नेयहविर्निर्वापानन्तरमग्नीषोमीयहविर्निर्वापः पश्चादुपांशुयाजाज्यनिर्वापः। अङ्गैः स्वीयक्रमः स्वपाठक्रमेण स्वयमेव निश्चेतुं शक्योऽत्र भवतीति न क्रमार्थमङ्गानामत्र परमुखप्रेक्षित्वमिति।

<u>तद्यथेति</u>। दर्शे आग्नेयानन्तरं सांनाय्ययागोऽनुष्ठीयते। तत्राग्नेये पुरोडा-

केचित्पूर्वमनुष्ठीयन्ते । तत्र यदि प्रवृत्तिक्रममाश्रित्य तद्धर्माः सर्वे पूर्वमनुष्ठीयेरन् तत आग्नेयधर्माः तत आग्नेयानुष्ठानं ततः सांनाय्यानुष्ठानं तदा तद्धर्माणां स्वप्रधानेन सह द्वाभ्यामाग्नेयधर्मतदनुष्ठानाभ्यां विप्रकर्षः स्यात् ।

यदा तु सांनाय्यधर्माणां केषांचित्पूर्वमनुष्ठानेऽपि अन्ये सर्वे मुख्यक्रममाश्रित्याग्नेयधर्मानुष्ठानानन्तरमनुष्ठीयन्ते तदा सर्वेषामाग्नेयधर्मसांनाय्यधर्माणामेकैकेन विजातीयेन व्यवधानं भवति । आग्नेयधर्माणां स्वप्रधानेन सह सांनाय्यधर्मैर्व्यवधानात् सांनाय्यधर्माणां च स्वप्रधानेन सहाग्नेयानुष्ठानेन व्यवधानादिति न विप्रकर्षः । तस्मान्मुख्यक्रमः प्रवृत्तिक्रमाद्बलवान् ।

सहप्रयुज्यमानेषु प्रधानेषु संनिपातिनामङ्गानामावृत्त्यानुष्ठाने कर्तव्ये द्वितीयादिपदार्थानां प्रथमानुष्ठितपदार्थक्रमाद्यः क्रमः स प्रवृत्तिक्रमः ।

---

शद्रव्यम् । सांनाय्ये तु दधिपयसी । दध्यादिद्रव्यधर्मा वत्सापाकरणदोहनातञ्चनादयस्तैत्तिरीयसंहितायां प्रथमाष्टके प्रथमप्रपाठके प्रथमानुवाकमारभ्याम्नाताः । ततश्चतुर्थेनुवाके पुरोडाशधर्मास्तण्डुलनिर्वापादय आम्नाताः अनेनैव पाठक्रमेण धर्मानुष्ठानं प्रवर्तते । तथा ह्याग्नेययागानन्तरभाविनोपि सांनाय्ययागस्याङ्गभूता वत्सापाकरणदोहनातञ्चनादयः केचनधर्माः पाठक्रमादाग्नेययागाङ्गभूततण्डुलनिर्वापादिधर्मानुष्ठानात्पूर्वमनुष्ठीयन्ते । नतु मुख्यक्रमात्पश्चात् । ततः प्रवृत्ते यागे आग्नेययागाङ्गभूतास्तण्डुलनिर्वापादयः तत सांनाय्ययागाङ्गभूता हविरासादनादयः सर्वे धर्माः तत आग्नेययागः ततः सांनाय्ययाग इति क्रमः । एवं स्थिते सांनाय्यधर्मेषु वत्सापाकरणादिषु केषुचित्प्रथमतः प्रवृत्तिर्जातेत्येतावता प्रवृत्तिक्रममाश्रित्य सर्वे सांनाय्यहविर्धर्मास्तदानीमेवानुष्ठीयन्ते तत आग्नेयधर्मास्तत आग्नेयो यागस्ततः सांनाय्ययागस्तर्हि सांनाय्यधर्मानुष्ठानसांनाय्ययागयोर्मध्ये द्वाभ्यां व्यवधानं स्यात् । आग्नेयधर्मानुष्ठानाग्नेययागयोस्त्वत्यन्तमव्यवधानं स्यात् । एतच्च वैषम्यमयुक्तम् अतः पाठक्रमानुसारेण वत्सापाकरणादीनां केषांचित्सांनाय्यधर्माणां पूर्वमनुष्ठानेपि तदितरेषां सर्वेषां हविरासादनादिधर्माणां मुख्यक्रमानुसारेणाग्नेययागाङ्गभूतधर्मानुष्ठानानन्तरमेवानुष्ठानम् । तथा सति केषांचिद्वत्सापाकरणादीनां धर्माणां प्रधानविप्रकर्षेपि तदितरेषां सर्वेषां प्रधानसंनिकर्ष एवाग्नेयधर्माणामिव भवति । बहूनां प्रधानविप्रकर्षस्यान्याय्यत्वात् । संनिकर्षश्चात्रागत्यैवान्तरितो ग्राह्य इति भावः ।

अथ षष्ठं प्रवृत्त्याख्यं क्रमं लक्षयति-सहप्रयुज्यमानेष्विति । यौगपद्येनानुष्ठीयमानेषु प्रधानेषु युगपदनुष्ठेयतया प्राप्तानां तदङ्गानां यौगपद्यासंभवा-

यथा प्राजापत्याङ्गेषु । प्राजापत्या हि वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्तीति वाक्येन तृतीयानिर्देशात् सेतिकर्तव्यताका एककालत्वेन विहिताः । अतस्तेषां तदङ्गानां चोपाकरणनियोजनप्रभृतीनां साहित्यं संपादनीयम् ।

तत्र प्राजापत्यानां संप्रतिपन्नदेवताकत्वेनैकस्मिन्कालेऽनुष्ठानादुपपद्यते साहित्यम् । तदङ्गानां चैकस्मिन्कालेऽनुष्ठानमशक्यम् । नह्यनेकेषां पशूनामुपाकरणमेकस्मिन्काले कर्तुं शक्यम् । अतस्तेषां साहित्यमव्यवधानेनानुष्ठानात् संपाद्यम्— एकस्योपाकरणं कृत्वाऽपरस्योपाकरणमिति ।

अतः प्राजापत्येषु एकं पदार्थं सर्वत्रानुष्ठाय द्वितीयः पदार्थोऽनुष्ठेयः । तत्र प्रथमपदार्थानुष्ठानं कस्माच्चित्पशोरारभ्य कर्तव्यम् । द्वितीयस्तु पदार्थो

दावृत्त्यानुष्ठानं कर्तव्ये सति तत्र प्रथमाङ्गानुष्ठानसमये यदृच्छया येन क्रमेण प्रवृत्तिर्जाता स प्रवृत्तिक्रमः । द्वितीयतृतीयाद्यङ्गानुष्ठानं तेनैव क्रमेण कर्तव्यमित्यनेन प्रवृत्तिक्रमेण निर्णीयते । तथाहि- यत्रानेकप्रधानानां युगपदनुष्ठानं विधीयते युगपत्कर्तुं शक्यते च तत्र क्रमापेक्षैव नास्ति । एवं प्रधानाङ्गानामपि । येषां च प्रधानाङ्गानां युगपदनुष्ठानं विधीयते परंतु युगपत्कर्तुं न शक्यते तत्र कः क्रम इत्यपेक्षायां क्रमनियामकश्रुत्यर्थादिप्रमाणषट्कान्यतमस्य कस्याप्यप्राप्त्या यदृच्छैव तादृशस्थले क्रमनियामिका भवति । यदृच्छयैव प्रवृत्त्या तत्र क्रमो भवति । तत्र चाङ्गभूतकर्मणामनेकत्वे प्रथमाङ्गानुष्ठानसमये यादृच्छिकप्रवृत्त्या यत्र यः क्रमः संपन्नः स एव तत्र द्वितीयतृतीयाद्यङ्गानुष्ठानसमये ग्राह्यो न तु यदृच्छया पूर्वविपरीतः कश्चिदन्य इत्यनेन प्रवृत्तिक्रमेण बोध्यत इति भावः । प्राजापत्या इति । सप्तदश प्राजापत्यान् पशूनालभते ( तै. ब्रा. १।३।४।२ ) इति सप्तदश पशवो विहिताः । ते च सर्वे प्रजापतिरूपैकदेवताका इति सर्वेषां पुरोनुवाक्या क्रमेणैव तन्त्रेणोच्चार्यते । याज्यापि तथैव । त्यागश्चैकदैव कर्तुं शक्यः । अङ्गभूतकर्माणि तु पशूपाकरणनियोजनादीनि युगपत्सर्वेषु पशुषु कर्तुं न शक्यन्ते । अतस्तत्र क्रमोपेक्ष्यते । प्रजापतेर्जायमानाः ( तै. सं. ३।१।४।१ ) इत्यादिमन्त्रेण बर्हिर्भ्यां प्लक्षशाखया च पशोरुपस्पर्शनमुपाकरणम् । यूपे पशोर्बन्धनं नियोजनम् । एकं पदार्थमिति । उपाकरणरूपमित्यर्थः । द्वितीयः पदार्थ इति । नियोजनरूप इत्यर्थः । द्वितीयस्त्विति । इदमेव प्रवृत्तिक्रमस्योदाहरणं नतु प्रथमपदार्थानुष्ठानसमये । तत्र क्रमस्यैच्छिकत्वात् । ननु प्रथमपशूपाकरणानन्तरं सद्य एव पश्वन्तरोपाकरणं क्रियते चेत्यादिदमुदाहरणं प्रवृत्तिक्रमस्य । तदेव तु न संभवति । यतः प्रयोगविधिनोपाकरणनियोजनयोः सहानुष्ठानं विदधता तयोर्नैरन्तर्येणानुष्ठानं बोध्यते । तथा च प्रथमपशावुपाकरणनियोजनादीन्यङ्गानि सर्वाण्यनुष्ठाय

येन क्रमेण प्रथमोऽनुष्ठितः तेनैव क्रमेणानुष्ठेयः प्रयोगविध्यवगतस्य मिथोऽङ्ग-साहित्यस्योपपत्तये ।

प्रयोगविधिना हि दृष्टे तदङ्गानामुपाकरणनियोजनादीनां मिथः साहित्य-

---

यदृच्छया कंचन द्वितीयं पशुं गृहीत्वा तत्रोपाकरणादीन्यनुष्ठेयानि । एवमेवोत्तरोत्तरं यदृच्छया कंचित् कंचित्पशुं गृहीत्वा सर्वे धर्मा अनुष्ठेया यावत्सप्तदशस्वङ्गान्यनुष्ठितानि भवन्ति । तथा च नेदं प्रवृत्तिक्रमस्योदाहरणमिति चेन्न । सत्यं प्रयोगविधिनोपाकरणनियोजनयोः साहित्यमत्रावगम्यते । किंतु तदत्र न वाचनिकं किंत्वातिदेशिकम् । सप्तदशानामुपाकरणानां च यत्साहित्यमत्रावगम्यते तदत्र वाचनिकम् । तच्चानुपदं मूल एव प्राजापत्या हि वैश्वदेवीं कृत्वा प्राजापत्यैश्चरन्ति इति तृतीयानिर्देशात्सेतिकर्तव्यताका एककालत्वेन विहिताः ( पृ. १८९ प. १ ) इत्युक्त्या प्रदर्शितमेव । आतिदेशिकापेक्षया च वाचनिकस्य प्राबल्यात्प्रथमं सप्तदशपशूपाकरणमेव संपादनीयम् । ततस्तेषां सर्वेषां नियोजनम् । अत एव चात्र न काण्डानुसमयः । किंतु पदार्थानुसमय एव । यद्यप्येवमत्रोपाकरणनियोजनयोरङ्गयोर्मिथः साहित्यमातिदेशिकत्वाद्बाध्यं भवति तथापि न सर्वथा तद्बाधः । किंत्वगत्या षोडशभिः पदार्थैर्व्यवधानं सह्यते नाधिकेन । यथा प्रथमपशूपाकरणप्रथमपशुनियोजनयोर्मध्ये द्वितीयादिसप्तदशपर्यन्तानां षोडशपशूनां षोडशभिरुपाकरणैर्व्यवधानम् । द्वितीयपशूपाकरणाद्द्वितीयपशुनियोजनयोर्मध्ये तृतीयादिसप्तदशपशूपाकरणानि प्रथमपशुनियोजनमेकमिति मिलित्वा षोडशभिरेव व्यवधानं भवति । एवमेवेतरेष्वप्यूह्यम् । न च प्रवृत्तिक्रममनादृत्य सप्तदशस्य पशोरुपाकरणानन्तरं सद्यस्तस्यैव यदि नियोजनं क्रियते तर्हि तत्रैकेनापि न व्यवधानमिति कुतस्तथा नानुष्ठीयत इति वाच्यम् । अत्राव्यवधानेऽप्येवं यदि व्युत्क्रमेण नियोजनं क्रियते तर्हि प्रथमपशूपाकरणप्रथमपशुनियोजनयोर्मध्ये द्वात्रिंशता व्यवधानं स्यात् । यदि च नियोजने पशूनामैच्छिकः क्रमो गृह्यते तर्हि क्वचित्तत्पशूपाकरणनियोजनयोरव्यवधानं क्वचिदेकेन क्वचिद्द्वाभ्यामित्येवं क्वचिद्द्वात्रिंशता व्यवधानं स्यात् । एवं व्यवधानतारतम्ये सति तत्राधिकं व्यवधानं सोढुं न कोऽप्युत्सहत इति सर्वत्र व्यवधानसाम्यमेवापेक्ष्यते । तच्च प्रवृत्तिक्रमं विना न संभवति । एतदेव च प्रवृत्तिक्रमे बीजम् । तथा च तस्यानादरो न युक्त इति भावः । एतत्सर्वं हृदि निधायाह–<u>मिथोऽङ्गसाहित्यस्योपपत्तय इति</u> । उपाकरणनियोजनादीनामङ्गानां यन्मिथः साहित्यं तस्योक्तरीत्या व्यवधानसाम्येनोपपत्तय इत्यर्थः ।

अथात्राङ्गसाहित्यं प्रयोगविध्यवगतमातिदेशिकमिति दर्शयति-<u>प्रयोगविधिना हीति</u> । दृष्टेऽग्नीषोमीयः पशुः । अग्नीषोमीयः पशुर्हि दीक्षितेन प्रथमतोनु-

मानन्तर्यापरपर्यायं विहितम् । तच्च साहित्यं सवनीयपशौ चोदकेन प्राप्तम् । तस्य प्राणिद्रव्यकत्वेन, दैक्षविकृतित्वात् । सवनीयाच्चैकादशिनेषु प्राप्तम् । सुत्याकालत्वसामान्यात् । तेभ्यश्च प्राजापत्येषु प्राप्तम् । गणत्वसामान्यात् ।

---

प्रियो भवतीत्यतः स दैक्ष इत्युच्यते । तत्र च साङ्गः पशुप्रयोग उपदिश्यते । प्रयोगविधिना बोधितं च तत्राङ्गाङ्गिनोः साहित्यं युगपदनुष्ठानासंभवादेकं कृत्वा सद्योऽपरमित्येवमव्यवहितपौर्वापर्येणानुष्ठाने पर्यवस्यति । तथा युगपदसंभविनामुपाकरणनियोजनादीनामङ्गानामपि प्रयोगविधिबोधितं साहित्यं तथैव संपादनीयम् । एतदेव चानन्तर्यापरपर्यायं साहित्यमित्युच्यते । अग्नीषोमीयसवनीययोः प्राणिद्रव्यकत्वेन साजात्यात्तयोः प्रकृतिविकृतिभावावगमे प्रकृतिवद्विकृतिरित्यतिदेशेन प्रकृतिगतेतिकर्तव्यताया विकृतौ प्राप्तत्वादुपाकरणनियोजनादीनामङ्गानां साहित्यं प्रकृतिगतं सवनीये प्राप्नोति । तथा सवनीयपशुः सुत्याकाले विहित एकादशिनाः पशवोऽपि सुत्याकाले विहिता इत्येवं कालसादृश्यात्तयोः प्रकृतिविकृतिभावावगमेनैकादशिने तदङ्गानां साहित्यं प्राप्नोति । तथैकादशिनाः पशव एकादश प्राजापत्याश्च सप्तदशेति बहुत्वसंख्यासाम्येन तयोः प्रकृतिविकृतिभावावगमेन प्राजापत्येषु पशुषु तदङ्गानां साहित्यं प्राप्नोति । तथा च प्राजापत्येषु पशुष्वङ्गसाहित्यस्यातिदेशिकत्वं सिद्धं भवति । एकादशिनाः पशवश्चैवमाम्नायन्ते–आग्नेयः कृष्णग्रीवः (१) सारस्वती मेषी (२) बभ्रुः सौम्यः (३) पौष्णः श्यामः (४) शितिपृष्ठो बार्हस्पत्यः (५) शिल्पो वैश्वदेवः (६) ऐन्द्रोऽरुणः (७) मारुतः कल्माषः (८) ऐन्द्राग्नः संहितः (९) अधोरामः सावित्रः (१०) वारुणः पेत्वः (११) ( तै. सं. ५।५।२२ ) इति । बभ्रुः पिङ्गलवर्णः । शितिपृष्ठः श्वेतपृष्ठः । शिल्पो बहुरूपः । कल्माषः कृष्णबिन्दुलाञ्छितः । संहितः कृष्णशबलः । अधोरामः श्वेतकृष्णोदरः । पेत्वो गलितरेतस्को मेषः । नन्वग्नीषोमीयप्राजापत्ययोः प्राणिद्रव्यकत्वेन सादृश्यात्तयोः प्रकृतिविकृतिभावेनाङ्गसाहित्यं प्राप्यत इत्येव वक्तव्यं किमर्थमियती परंपराऽत्र प्रदर्शितेति चेत्सत्यम् । प्रकृतिविकृतिभावो हि न प्रकृतेराकाङ्क्षया व्यवस्थाप्यते । किंतु विकृतेः कथंभावाकाङ्क्षायां स्वसदृशत्वेनोपस्थितादेव सा पूर्यत इति यतः सा पूर्यते सा प्रकृतिरिति व्यवस्थाप्यते । यत्र चाकाङ्क्षायां सत्यां सादृश्यादनेकेषामुपस्थितिस्तत्राधिकसदृशस्य झटित्युपस्थितिरिति सैव तस्य प्रकृतिरित्यवधार्यते । तथा च प्राजापत्येषु पशुषु कथंभावाकाङ्क्षायां यद्यपि प्राणिद्रव्यकत्वेनाग्नीषोमीयः सदृशस्तथाप्यैकादशिनाः प्राणिद्रव्यकत्वबहुत्वरूपधर्मद्वयेन सदृशतरा झटित्युपस्थिता भवन्तीत्यतस्त एकादशिना एव प्राजापत्यानां प्रकृतिभूता भवन्ति । नत्वग्नीषोमीयः । तथा एकादशिनानां च कथंभावाकाङ्क्षायां प्राणिद्रव्यकत्वसुत्याकालविहितत्वरूपधर्मद्वयेन सदृशतरः

प्राजापत्येषु च प्रतिपशु यागभेदाच्चोदका भिद्यन्ते । अतश्चोदकात्तत्तत्पश्वङ्गभूतानामुपाकरणनियोजनादीनां साहित्यमानन्तर्यापरपर्यायं प्राप्तम् । अत एकस्य पशोरुपाकरणानन्तरमेव नियोजनं चोदकबलात्कर्तव्यत्वेन प्राप्तम् । तत्तु न क्रियते । प्रत्यक्षवचनावगतसर्वपश्वङ्गसाहित्यानुपपत्तेः ।

अत एकस्मिन् पशावुपाकरणे कृते तदनन्तरमेव कर्तव्यत्वेन प्राप्तमपि नियोजनं न क्रियते । प्रत्यक्षवचनबलात्तु पश्वन्तरेषु षोडशसु उपाकरणमेव

---

सवनीयपशुर्झटित्युपस्थितो भवतीत्यत एकादशिनानां सवनीय एव प्रकृतिर्न त्वग्नीषोमीयः । सवनीयस्य तु प्राणिद्रव्यकत्वेन सदृशोऽग्नीषोमीय एव प्रकृतिः । तदपेक्षया सदृशतरस्य कस्यचिदभावात् । तथा च प्रकृतिविकृतिभावपरंपराप्रदर्शनं युक्तमेव । तथाचोपाकरणनियोजनयोः साहित्यमातिदेशिकमिति तस्य वाचनिकं सप्तदशोपाकरणानां मिथः साहित्यं बाधकं भवतीति प्रथमपशूपाकरणानन्तरं न तस्य सद्यो नियोजनं किंतु द्वितीयादिसप्तदशपशूपाकरणं कृत्वा ततः प्रथमपशुमारभ्य सर्वेषां नियोजनमिति क्रमः सिध्यति ।

ननु सप्तदशपशुद्रव्यकः प्राजापत्ययाग एक एवेति तदङ्गभूतमुपाकरणमपि सप्तदशोपाकरणानि संभूय मिलित्वैकमेव कर्मेति तन्मध्ये प्रथमपशूपाकरणान्तरं द्वितीयपशूपाकरणात्प्राङ्नियोजनस्य प्राप्तिरेव न संभवति । यथा त्रिःपर्यग्निकरणमध्ये प्रथमपर्यग्निकरणानन्तरं द्वितीयपर्यग्निकरणात्प्राक्तदनन्तरविहितं कर्म कर्तुं न शक्यते तद्वत् । तथा चात्र प्राबल्यदौर्बल्यविचारो व्यर्थ इति चेत्तत्राह–प्राजापत्येषु चेति । अयं भावः । सप्तदशपशूनां संभूयैकरूपेण यदि प्रजापतिदेवतया संबन्धः स्यात्तर्हि भवेदत्र यागैक्यम् । परंतु तथासंबन्धोऽत्र वक्तुमशक्यः । प्राजापत्यानित्यत्र प्रजापतिशब्देन देवताभिधीयते । तदुत्तरमुत्पन्नेन तद्धितप्रत्ययेन पशुद्रव्यमभिधीयते । तद्धितप्रत्ययान्तात्प्राजापत्यशब्दादुत्पन्नेन सुप्प्रत्ययेन बहुत्वमभिधीयते । तथा च प्रजापतिदेवतासंबन्धविशिष्टः पशुः प्राजापत्यशब्दार्थः । तादृशप्राजापत्यानां बहुत्वं सुप्प्रत्ययेन प्रतिपाद्यत इति प्रत्येकं पशोर्देवतासंबन्धसत्त्वाद्यागभेदः सिद्ध एव । अतस्तदङ्गभूतान्युपाकरणान्यपि प्रतियागमेकैकमङ्गभूतमुपाकरणमित्येवं भिन्नान्येव सप्तदशोपाकरणानि । एवं नियोजनान्यपि बोध्यानि । तत्र प्रधानकर्म द्रव्योत्सर्गरूपं तन्त्रेण युगपत्कर्तुं शक्यं भवतीत्यन्यदेतत् । न तावता यागैक्यं कथमप्याशङ्कनीयम् । एवं यागभेदे सिद्धे उपाकरणनियोजनसाहित्यमपि प्रतिपशु चोदकेन प्राप्यत इति युक्त एवात्र वाचनिकस्योपाकरणानां मिथः साहित्यस्य प्राबल्यविचारः । तदेतद्दर्शयति–अतश्चोदकादिति । प्रत्यक्षवचनबलादिति । प्राजापत्यैश्चरन्तीति वाक्येन सर्वेषां साहित्यावगमा-

क्रियते । कृते तु तेषूपाकरणे प्रथमपशोर्नियोजनस्य तदीयोपाकरणेन व्यवधाने प्रमाणाभावात् प्रथमपशावेव नियोजनं कार्यम् ।

अतश्च येन क्रमेणोपाकरणं कृतं तेनैव क्रमेण नियोजनं कार्यम् । एवं च तत्तत्पशूपाकरणानां स्वस्वनियोजनैस्तुल्यं षोडशक्षणैर्व्यवधानं भवति । अन्यथा केषांचिदत्यन्तव्यवधानं केषांचिच्चाव्यवधानं स्यात् । तच्च न युक्तम् ।

तस्माद्येन क्रमेण प्रथमपदार्थोऽनुष्ठितस्तेनैव द्वितीयोऽनुष्ठेयः । तत्सिद्धं प्रथमानुष्ठितपदार्थक्रमाद्यो द्वितीयपदार्थक्रमः स प्रवृत्तिक्रम इति । तदेवं निरूपितः संक्षेपतः षड्विधक्रमनिरूपणेन प्रयोगविधिव्यापारः ।

फलस्वाम्यबोधको विधिरधिकारविधिः । फलस्वाम्यं च कर्मजन्यफलभोक्तृत्वम् । स च यजेत स्वर्गकाम इत्येवंरूपः । अनेन हि स्वर्गमुद्दिश्य यागं विदधता स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते । यस्याहिताग्नेरग्निर्गृहान् दहेत् सोऽग्नये क्षामवतेऽष्टाकपालं पुरोडाशं निर्वपेदित्यादिभिस्तु गृहदाहादौ निमित्ते कर्म विदधद्भिर्निमित्तवतः कर्मजन्यपापक्षयरूपफलस्वाम्यं प्रतिपाद्यते ।

तच्च फलस्वाम्यं तस्यैव योऽधिकारिविशेषणविशिष्टः । अधिकारिविशेषणं

---

दिति भावः । व्यवधाने प्रमाणाभावादिति । द्वितीयादिसप्तदशपर्यन्तषोडशोपाकरणैर्व्यवधानं स्वगत्या सह्यमेवेति तदधिकव्यवधाने प्रमाणं नास्तीत्यर्थः । एवं प्रयोगप्राशुभाव (पृ. १७१ पं.९) इत्यादिना प्रयोगविधिं सविस्तरं निरूप्याधिकारविधिं निरूपयति-फलस्वाम्येति । यजेतेति । इदं काम्यं कर्म । नैमित्तिके कर्मणि फलस्वाम्यं प्रदर्शयति-यस्याहिताग्नेरिति । यस्य गृहान्दहत्यग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत (तै. सं. २।२।२।५) इत्याम्नायते । तत्र भाष्यम्-युयुत्सुरपमृत्युभ्यो भीतश्च गृहदाहवांश्चैते त्रयोऽष्टाकपालं कुर्युः । क्षामवतेऽग्नये इति । क्षामवत इत्यस्य क्षामवत्त्वगुणविशिष्टायेत्यर्थः । अत्र गृहदाहनिमित्तवतः पुरुषस्य गृहदाहेष्टिरूपं कर्म विधीयते । तस्माच्च कर्मणस्तस्य पापक्षयरूपं फलं भवति । विधयः स्वप्रवर्तकत्वनिर्वाहार्थं विधेयस्येष्टसाधनत्वमाक्षिपन्त्येवेत्यत्रार्थवादावगतं पापक्षयरूपं फलमिष्टतया संबध्यत इति भावः । गृहदाहादाविति । आदिपदेन हिरण्यनाशनिमित्तेष्ट्यादिसंग्रहः ।

च तदेव यत्पुरुषविशेषणत्वेन श्रुतम् । अत एव ' राजा राजसूयेन स्वाराज्यकामो यजेत ' इत्यनेन स्वाराज्यमुद्दिश्य राजसूयं विदधतापि न स्वाराज्यकाममात्रस्य तत्फलभोक्तृत्वं प्रतिपाद्यते किं तु राज्ञः सतस्तत्कामस्य ।

किंचित्तु पुरुषविशेषणत्वेनाश्रुतमप्यधिकारिविशेषणं भवति । यथाध्ययनविधिसिद्धा विद्या, अग्निसाध्येषु च कर्मसु आधानसिद्धाग्निमत्ता, सामर्थ्यं च । एतेषां पुरुषविशेषणत्वेनाश्रवणेप्यधिकारिविशेषणत्वमस्त्येव । उत्तरक्रतुविधीनां ज्ञानाक्षेपशक्तेरभावेनाध्ययनविधिसिद्धज्ञानवन्तं प्रत्येव प्रवृत्तेः । अग्निसाध्यकर्मणां चाग्न्यपेक्षत्वेन तद्विधीनामाधानसिद्धाग्निमन्तं प्रत्येव प्रवृत्तेः ।

अत एव च शूद्रस्य न यागादावधिकारः । तस्याध्ययनविधिसिद्धज्ञानाभावात् । आधानसिद्धाग्न्यभावाच्च । अध्ययनस्योपनीताधिकारत्वादुप-

---

अत एव राजेति । राजा क्षत्रियः । विप्रस्य स्वाराज्यकामनायां सत्यामपि न राजसूयेधिकारः । तस्य क्षत्रियत्वाभावात् । राज्ञः सत इति । क्षत्रियस्य सत इत्यर्थः । अध्ययनविधिसिद्धा विद्येति । विद्या वेदवाक्यार्थज्ञानम् । मन्त्राणां च प्रयोगसमवेतार्थस्मारकतयार्थवत्त्वमित्यग्रे (पृ.२०१पं.२) वक्ष्यते । यस्य च वेदार्थज्ञानं नास्ति तेन समुच्चार्यमाणा अपि मन्त्राः कथमर्थस्मृतिं जनयेयुरित्यतो विद्यापेक्ष्यते । सा चाध्ययनविधिनैव सिद्धा भवति । स्वाध्यायोध्येतव्य इत्यध्ययनविधेर्हि इदं फलमर्थज्ञानमुद्दिश्य प्रवृत्तत्वात् । आधानसिद्धाग्निमत्तेति । अन्यथाहवनीये जुहोतीत्यादिविधेरसंगतिः स्यात् । सामर्थ्यमिति । द्रव्यादिसामर्थ्यमित्यर्थः । उत्तरक्रतुविधीनामिति । अग्न्याधानोत्तरं ये क्रतवोनुष्ठीयन्ते त उत्तरक्रतवो दर्शपूर्णमासादयः । तेषां ज्ञानाक्षेपशक्तिर्नास्ति । न च यथा वर्षासु रथकारोग्नीनादधीतेत्याधानविधी रथकारस्य त्रैवर्णिकेतरत्वेनाधिकाराभावेपि आधानोपयुक्तं रथकारस्य ज्ञानमाक्षिपति तथा दर्शपूर्णमासादिविधिभिः स्वस्वमात्रौपयिकज्ञानस्याक्षेपे शूद्रा अपि दर्शपूर्णमासादीननुष्ठेयुरिति वाच्यम् । वैषम्यात् । यथाक्षेपाभावे वर्षासु रथकार इत्यग्न्याधानविधिरचरितार्थ एव भवति । तस्य रथकारमात्रोद्देशेन प्रवृत्तत्वात् । न तथा दर्शपूर्णमासादिविधय आक्षेपमन्तरेणाचरितार्था भवन्ति । त्रैवर्णिकानामध्ययनविधिसिद्धज्ञानसत्त्वेन तत्र चारितार्थ्यात् । तथा च दर्शपूर्णमासादिविधयोध्ययनविधिसिद्धज्ञानवत्सु त्रैवर्णिकेष्वेव प्रवर्तन्ते । एवं चाध्ययनविधिसिद्धविद्याया अधिकारिविशेषणत्वं सिद्धम् । अथाधानसिद्धाग्निमत्ताया अधिकारिविशेषणत्वं साधयति–अग्निसाध्येति । ज्ञानाभावादिति ।

नयनस्य चाष्टवर्षं ब्राह्मणमुपनयीतेत्यादिना त्रैवर्णिकाधिकारत्वात् । आधानस्यापि 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिना त्रैवर्णिकाधिकारित्वात् ।

यद्यपि च वर्षासु रथकारोऽग्नीनादधीतेत्यनेन रथकारस्य सौधन्वनापरपर्यायस्याधानं विहितम् । योगाद्रूढेर्बलीयस्त्वात् । तथापि नास्योत्तरकर्मस्वधिकारः । अध्ययनविधिसिद्धज्ञानाभावात् ।

न च तदभावे आधानेऽपि कथमधिकारः । तदनुष्ठानस्य तत्साध्यत्वादिति वाच्यम् । तस्याध्ययनविधिसिद्धज्ञानाभावेऽपि 'वर्षासु रथकारोऽग्नीनादधीत' इत्यनेनैव विधिनाऽऽधानमात्रौपयिकज्ञानाक्षेपणात् । अन्यथा एतस्यैव विधेरनुपपत्तेः । अतश्च रथकारस्याधानमात्रेऽधिकारेऽपि नोत्तरकर्मस्वधिकारो विद्याभावात् ।

---

न च स्वाच्छन्द्येन विद्यामर्जयतः कस्यचिच्छूद्रस्याध्ययनविधिसिद्धज्ञानाभावेपि कर्मौपयिकज्ञानं स्यादिति वाच्यम् । अध्ययनविधिर्हि नार्थज्ञानमात्रे पर्यवस्यति । किंतु तादृशार्थज्ञानद्वारा याज्ञे कर्मणि मन्त्रैरनुष्ठानौपयिकार्थस्मरणे पर्यवस्यति । अन्यथार्थज्ञानस्यानुपयोगात् । तथा च यागप्रकरणापठितस्याप्यध्ययनविधेर्यागाङ्गत्वमवश्यं कल्पनीयं भवतीति प्रकारान्तरेण प्राप्तापि विद्या नाधिकारिविशेषणं भवतीति भावः ।

<u>यद्यपि चेति</u> । क्षत्रियाद्वैश्यायां जातो माहिष्यः । वैश्याच्छूद्रायामुत्पन्ना करणी । माहिष्यात्करण्यां जातो रथकारः । अयमेव सौधन्वन इत्युच्यते । वर्षासु रथकारोऽग्नीनादधीतेत्यत्र रथकारशब्देन योगशक्त्या रथनिर्माता गृह्यते चेत्त्रैवर्णिकस्य कस्यचिद्रथनिर्मातृत्वनिमित्तेन वर्षाकालमात्रं विधीयत इति लाघवम् । परंत्ववयवार्थोपस्थितिसापेक्षयोगार्थापेक्षया तन्निरपेक्षरूढ्यर्थस्य शीघ्रोपस्थितिकत्वेन बलीयस्त्वादुक्तसौधन्वनजातीयस्यैवेदमाधानं विधीयते । रथनिर्मातृत्वरूपस्य योगार्थस्यात्र रूढ्यर्थेनापहाराच्च कालमात्रविधानं संभवति । एतच्च जैमिनीये षष्ठेऽध्याये प्रथमे पादे द्वादशाधिकरणे स्थितम् । <u>नास्योत्तरेति</u> । आधानविधिबलादाधानमात्रमस्तु नत्वाधानोत्तरेषु दर्शपूर्णमासादिकर्मस्वधिकार इत्यर्थः । <u>ज्ञानाभावादिति</u> । रथकारजातीयस्य त्रैवर्णिकेतरत्वेन वेदाध्ययनानधिकारादिति भावः । <u>तदनुष्ठानस्येति</u> । आधानानुष्ठानस्याधानोपयोगिवेदार्थज्ञानसाध्यत्वादित्याशयः । <u>अनुपपत्तेरिति</u> । तथा च यावता विना वर्षासु रथकार इति विधेरनुपपत्तिस्तावानेवार्थ आक्षिप्यते नतु ततोऽधिकः । अल्पार्थाक्षेपेण विधेश्चारितार्थ्यसंभवे बह्वर्थाक्षेपस्य गौरवदोषग्रस्तत्वेनायुक्तत्वात् । एतेन वर्षासु रथकार इति विधिबलात्सामान्यतो

एवं च तदाधानं नाग्निसंस्कारार्थम् । संस्कृतानामग्नीनामुत्तरत्रोपयोगाभावात् । किं तु तदाधानं लौकिकाग्निगुणकं विश्वजिन्न्यायेन स्वर्गफलकं च स्वतन्त्रमेव प्रधानकर्म विधीयते । अग्नीनिति च द्वितीया सक्तून् जुहोतीतिवत्तृतीयार्था इति ।

प्रकृतमनुसरामः । तत्सिद्धं शूद्रस्याध्ययनविधिसिद्धज्ञानाभावादाधानसिद्धाग्न्यभावाच्च नोत्तरकर्मस्वधिकार इति ।

नन्वेवं स्त्रिया अधिकारो न स्यात् । तस्या अध्ययनप्रतिषेधेन तद्विधिसिद्धज्ञानाभावात् । न च नास्त्येवेति वाच्यम् । यजेत स्वर्गकाम इत्यादौ स्वर्गकामपदस्योद्देश्यसमर्पकत्वेन पुंस्त्वस्योद्देश्यविशेषणत्वाद्ग्रहैकत्ववदविवक्षितत्वेन स्त्रिया अधिकारस्य साधितत्वादिति चेत्सत्यम् ।

अधिकारः साधितो न तु स्वातन्त्र्येण । न स्त्री स्वातन्त्र्यमर्हतीत्यादिना

---

वेदार्थज्ञानाक्षेपेणोत्तरक्रतवोऽपि रथकारेणानुष्ठेया भवेयुरित्यपास्तम् । नन्वेवमुत्तरक्रत्वनुष्ठानाभावे वर्षासु रथकार इतिविधिवैयर्थ्यं तदवस्थमेव । आधानौपयिकज्ञानाक्षेपेणाग्न्याधानाधिकारसिद्धावपि तेनाधानेन संस्कार्यस्याग्नेरुत्तरत्रोपयोगाभावेन संस्कारस्यानर्थक्यात् । अग्नीनादधीतेति द्वितीया ह्यग्नेः संस्कार्यकर्मत्वं बोधयतीति चेत्तत्राह–एवं चेति । आधानेनाग्निं संस्कुर्यादिति न तेन विधिना बोध्यते । किंत्वग्निसाधनकेनाधानेनेष्टं भावयेदिति । किंतदिष्टमित्याकाङ्क्षायां स स्वर्गः स्यादिति न्यायेन स्वर्गः फलं कल्प्यते । अग्निश्च तत्रत्योऽसंस्कृतत्वाल्लौकिकाग्निवदेव भवति । अग्न्याधानमपि च तत्त्रैवर्णिककृताग्निसंस्कारकाधानापेक्षया विजातीयं स्वतन्त्रमेव स्वर्गसाधनीभूतं कर्मेति भावः ।

नन्वेवमिति । शूद्रस्याध्ययनविधिसिद्धज्ञानाभावेनाधिकाराभावे न स्त्रीशूद्रौ वेदमधीयाताम्, स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरा, इत्यादिवचनैः शूद्रस्येव स्त्रिया अप्यध्ययनाधिकाराभावेनाध्ययनविधिसिद्धज्ञानाभावादधिकारो न स्यादित्याशयः । नचेति । स्त्रिया अधिकारो नास्ति इति सिद्धान्त एवेति तु न वाच्यमित्यर्थः । ग्रहैकत्ववदिति । प्राङ्निरूपितमेतत् ( पृ. ३१ प. ६ ) । साधितत्वादिति । जैमिनिना षष्ठाध्याये प्रथमपादे तृतीयाधिकरणे स्त्रिया अधिकारविषये विचारः कृतः । न स्त्रीति ।

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥ ( मनु. ९।३ )

तस्य निषिद्धत्वात्। स्वातन्त्र्येण कर्तृत्वे प्रयोगद्वयस्यापि वैगुण्यापत्तेश्च। यजमानप्रयोगे पत्नीकर्तृकाज्यावेक्षणादिलोपात्। पत्नीप्रयोगे च यजमानकर्तृकाज्यावेक्षणादिलोपात्। अतो दंपत्योः सहाधिकारः। सहाधिकारत्वेन यजमानविद्ययैव पत्न्या अपि कार्यसिद्धेर्न ज्ञानं विना तस्या अधिकारेऽनुपपत्तिः। 'पाणिग्रहणात्तु सहत्वं कर्मसु तथा पुण्यफलेषु' इति वचनेन स्त्रिया अधिकारनिर्णयाच्च। निषादस्थपतेरिवाध्ययनविधिसिद्धज्ञानविरहिणोऽपि 'एतया निषादस्थपतिं याजयेत्' इति वचनान्निषादेष्टिवत्।

निषादस्थपतिशब्दे हि निषादं स्थपतिं चेति कर्मधारयो न तु निषादानां स्थपतिरिति षष्ठीतत्पुरुषः। तदपेक्षया कर्मधारयस्य बलीयस्त्वात्। षष्ठ्यर्थे लक्षणापत्तेः। एतावांस्तु विशेषः—निषादस्याध्ययनविधिसिद्धज्ञानाभावेन एतस्यैव विधेस्तत्कर्मौपयिकज्ञानाक्षेपकत्वम्। पत्न्यास्तु तादृशज्ञानाभावेऽपि यजमानेन

---

इति मनुना स्त्रियाः कर्मसु स्वातन्त्र्यं निषिध्यते। जैमिनिनापि तदुत्तरं चतुर्थेऽधिकरणे दंपत्योः सहाधिकारः सिद्धान्तितः। यथाग्नीषोमयोः संभूयैकदेवतात्वं तथा दंपत्योः संभूयैकमेव कर्तृत्वमिति तद्भावः। नत्वत्र दंपत्योस्तन्त्रेणैकमिदमनुष्ठानमिति भ्रमितव्यम्। <u>यजमानविद्ययैवेति</u>। पत्न्याश्च यजमानद्वारैव कर्मकर्तृत्वं न साक्षात्। यस्य च साक्षात्कर्तृत्वं तस्याध्ययनविधिसिद्धज्ञानमस्त्येवेति नानुपपत्तिः। न च यजमानस्याध्ययनविधिसिद्धं ज्ञानं पत्नीकर्तृकाज्यावेक्षणे कथमुपयुज्येतेति वाच्यम्। तत्र तदवेक्षणान्यथानुपपत्त्या पत्न्यास्तत्कर्मौपयिकज्ञानस्याक्षेपात्। एवं चाध्ययनविधिसिद्धा विद्या अधिकारिविशेषणमिति यदुक्तं तत्स्वातन्त्र्येणाधिकार एव प्रयोजकमिति सिद्धम्।

अथ स्त्रिया अधिकारे हेत्वन्तरमाह–<u>पाणिग्रहणादिति</u>। अयं भावः। फलस्वाम्यबोधको विधिरधिकारविधिः। फलस्वाम्यं च फलभोक्तृत्वमिति प्रागुक्तम् (पृ. १९३ प. १०)। स्त्रियास्तु पाणिग्रहणबलाद्यजमानकृतकर्मजन्यफलेष्वपि साहित्यप्राप्त्या फलभोक्तृत्वावश्यंभावादधिकारोऽवर्जनीय एव भवति। यथैतया निषादस्थपतिं याजयेत् (मैत्रा. सं. २।२।४) इति विधिबलान्निषादस्य निषादेष्टिजन्यफलभोक्तृत्वेन तत्र तस्याधिकारोऽवश्यमङ्गीकर्तव्यो भवति तद्वत्। तदाह–<u>निषादस्थपतेरिवेति</u>। वास्तुमयं रौद्रं चरुं निर्वपेदिति प्रकृत्यैतया निषादस्थपतिं याजयेत् (मैत्रा. सं. २।२।४) इति श्रूयते। वास्तुशब्देन प्रकृतिभूतद्रव्यविशेषो गृह्यते। अत्र निषादस्थपतिशब्दे निषादश्चासौ स्थपतिश्चेति कर्मधारयसमासे निषादस्य स्थपतावभेदेनान्वयो

सहाधिकारात्तस्य च तादृशज्ञानवत्त्वात्तेनैव च तस्याः कार्यसिद्धेर्नोत्तरक्रतुविधीनां ज्ञानाक्षेपकत्वम् ।

ये तु पत्नीमात्रकर्तृकाः पदार्थाः आज्यावेक्षणादयस्ते ज्ञानं विनाऽशक्यानुष्ठाना इति तद्विधीनां तदाक्षेपकत्वं स्वीक्रियते इति । तत्सिद्धमध्ययनविधिसिद्धज्ञानस्याधानसिद्धाग्निमत्तायाश्चोत्तरकर्मसु अधिकारिविशेषणत्वमिति ।

एवं सामर्थ्यस्यापि अधिकारिविशेषणत्वम् । असमर्थं प्रति विध्यप्रवृत्तेः । आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणीति न्यायात् । तत्र सामर्थ्यं काम्ये कर्मणि अङ्गप्रधानविषयम् । न त्वङ्गासमर्थः प्रधानमात्रसमर्थश्च काम्ये कर्मण्यधिकारी । प्रधानविधेरङ्गविध्येकवाक्यतापन्नस्य साङ्गकर्मसमर्थं प्रत्येव प्रवृत्तेः । यथाविनियोगमधिकारात् । यदि हि समर्थं प्रत्येव प्रवृत्तौ कयाचित् श्रुत्या विरोधः स्यात् तदाऽसमर्थस्याप्यधिकारः स्यात् । न च विरोधोऽस्ति । स्वर्ग-

---

भवति । निषादानां स्थपतिरिति षष्ठीतत्पुरुषसमासे तु निषादशब्दस्य निषादसंबन्धिन्यर्थे लक्षणां स्वीकृत्य पश्चाद्भेदेनान्वयः स्यात् । अथवा वैयाकरणमतेन समासे लुप्तस्य षष्ठीप्रत्ययस्य स्मरणेन निषादस्य स्थपतौ भेदेनान्वयः स्यात् । कर्मधारयसमासाश्रयणे तु न भेदेनान्वयो नवा लक्षणेति लाघवम् । विधिबलाच्च तावन्मात्रौपयिकज्ञानस्याक्षेपो भवतु नाम ननु लक्षणादिकं गौरवं सोढव्यं भवति । एतच्च षष्ठाध्यायप्रथमपादान्ते जैमिनिना सिद्धान्तितम् । एवं च यत्रानुपपत्तिस्तत्र तावन्मात्रौपयिकज्ञानस्याक्षेपेण निर्वाहः स्यादिति न सामान्यतो विहितानां दर्शपूर्णमासादीनां ज्ञानाक्षेपकत्वम् । तेषां सामान्यतो विधानेन त्रैवर्णिकेषु चारितार्थ्येनान्यथानुपपत्त्यभावात् ।

सामर्थ्यस्यापीति । सामर्थ्यं च द्विविधं शरीरेन्द्रियसामर्थ्यं द्रव्यसामर्थ्यं चेत्यर्थः । आख्यातानामिति । यथा कटे भुङ्क्ते कांस्यपात्र्यां भुङ्क्ते इत्युक्ते लौकिकास्तत्तद्वस्तुशक्त्यनुसारेण व्यवस्थां कल्पयन्ति कटे आसीनः कांस्यपात्र्यामोदनं निधायेति । एवं प्रासादे पर्यङ्के शय्यायां शेते इत्युक्ते त्रयाणामधिकरणकारकत्वाविशेषेऽपि प्रासादस्य पर्यङ्कधारणशक्तिसत्त्वात्पर्यङ्कस्य च शय्याधारणशक्तिसत्त्वात्तत्तद्योग्यतानुसारेणाधिकरणत्वं प्रतीयते । तथा च शक्तेः सहकारित्वं लोकसिद्धमेवेति भावः । अङ्गप्रधानविषयमिति । अङ्गप्रधानेतदुभयविषयमित्यर्थः । अङ्गासमर्थ इति । यथान्धस्याज्यावेक्षणासामर्थ्यम् । अन्धादिपुरुषविशेषानुसारेण तत्र तावत्कर्मसंकोचस्तु न कल्पनीयः । प्रमाणाभावात् ।

कामश्रुतेः समर्थं प्रत्येव प्रवृत्तौ विरोधाभावात्। प्रत्युतासमर्थं प्रति प्रवृत्तौ प्रधानविधेरङ्गवाक्यैकवाक्यतया प्रतिपन्नस्याङ्गसाहित्यस्य बाधापत्तेः। नित्यवत् श्रुतानामङ्गानां पाक्षिकत्वप्रसङ्गाच्च। अतः साङ्गे प्रयोगे समर्थस्यैव काम्ये कर्मण्यधिकारः।

नित्यकर्मणां त्वङ्गेषु यथाशक्तिन्यायः। तानि हि यावज्जीवश्रुत्या यावज्जीवं कर्तव्यत्वेन चोदितानि। न च यावज्जीवं केनापि साङ्गः प्रयोगः कर्तुं शक्यते। अतो नित्यकर्मसु प्रधानमात्रसमर्थोऽधिकारी। अङ्गानि तु

---

यावज्जीवश्रुत्येति। अत्रेदं बोध्यम्। यावज्जीवशब्दस्यार्थः कृत्स्नजीवनम्। स च पुरुषधर्मः। तं निमित्तीकृत्य यावज्जीवमग्निहोत्रं जुहोतीत्यनेन बह्वृचब्राह्मणस्थवाक्येनाग्निहोत्रप्रयोगो विधीयते। जीवनरूपनिमित्तस्य च मरणपर्यन्तं सद्भावात्प्रतिदिनं निमित्ते सति नैमित्तिकस्य च त्यागायोगादग्निहोत्रकर्मणोऽर्थसिद्धमेव नित्यत्वम्। न च जीवनस्य दिवा रात्रौ च सदैव सद्भावात्षष्टिघण्डात्मके काले सर्वदैवाग्निहोत्रप्रयोगः कर्तव्यः स्यादिति वाच्यम्। सायंप्रातःकालयोर्विहितत्वादिति। अङ्गानि त्विति। न च सर्वाण्यङ्गानि कर्तुं न शक्यन्ते चेन्नैव कर्तव्यं काम्यकर्मवदिति भ्रमितव्यम्। जीवननिमित्तेन तस्य विधानाज्जीवतस्तदकरणे विध्युल्लङ्घनेन प्रत्यवायापातात्। काम्यकर्मविषये तु कामनाया असत्त्वे निमित्ताभावात्तस्य कर्मणः प्राप्तिरेव नास्तीति न तत्र विध्युल्लङ्घनं भवति। न च कामनायाः सत्त्वे सहायाभावेन काम्यकर्माननुष्ठाने विध्युल्लङ्घनं स्यादिति शङ्क्यम्। सहायाभावेन कामनायास्तत्र शैथिल्यात्। कामनौत्कट्यमेव च काम्यकर्मणो निमित्तं नतु कामनासामान्यमात्रमिति केचित्। अन्येत्वध्ययनविधिसिद्धा विद्याधानसिद्धाग्निमत्ता सामर्थ्यं चेति त्रयमश्रुतमप्यधिकारिविशेषणमिति पूर्वमुक्तम् (पृ. १९४ प. ५)। तथा च कामनौत्कट्येऽपि उक्तविशेषणत्रयमध्ये एकस्य द्वयोस्त्रयाणां वा विरहेऽधिकाराभावेन विधेः प्राप्त्यभावान्न विध्युल्लङ्घनकृतो दोष इत्याहुः। नन्वेवं नित्यकर्मविषयेऽप्यसामर्थ्ये सति अनधिकारान्न विध्युल्लङ्घनमिति न तदकरणे प्रत्यवाय इतिचेन्नित्यकर्मणि प्रधानासमर्थश्चेदस्तु तथा असामर्थ्यात् प्रधानेनधिकारः। अङ्गविषये तु सत्यपि सामर्थ्ये प्रधानानुसरणेनाङ्गानां विधानात्प्रधानाभावेऽङ्गाप्राप्त्या न विध्युल्लङ्घनम्। वैपरीत्ये तु न तथा। न प्रधानेनाङ्गान्यनुवर्त्यानि अङ्गैर्हि नाम प्रधानमनुवर्त्यं भवति। अतोऽङ्गासामर्थ्येऽपि प्रधानानुष्ठाने सामर्थ्यं चेत्तत्प्राप्तिसत्त्वात्तत्र तदकरणे विध्युल्लङ्घनेन प्रत्यवायः स्यादेव। काम्यकर्मणि तु नैवम्। तत्राङ्गानि स्वानुष्ठानाय प्रधानमपेक्षन्ते। प्रधानमपि च तत्र फलापूर्वोत्पादनायाङ्गान्यपेक्षत एव। अत एवोक्त

यावन्ति कर्तुं शक्यन्ते तावन्ति कार्याणीत्यास्तां बहूक्त्या । सूरिभिः पराक्रान्तत्वात् ।

तत्सिद्धं फलस्वाम्यबोधको विधिरधिकारविधिरिति । तदेवं निरूपितं चतुर्विधभेदनिरूपणेन विधेः प्रयोजनवदर्थपर्यवसानम् ।

इति श्रीमीमांसान्यायप्रकाशे पूर्वार्धं समाप्तम् ॥

---

साङ्गे प्रयोगे समर्थस्यैव काम्ये कर्मण्यधिकारः ( पृ. १९९ पं. ३ ) इति । ननु यथा प्रतितिष्ठन्ति ह वा एते य एता रात्रीरुपयन्ति इत्यार्थवादिकफलस्य रात्रिसत्रविधौ संबन्धस्तथा

संध्यामुपासते ये तु सततं संशितव्रताः ।

विधूतपापास्ते यान्ति ब्रह्मलोकमनामयम् ॥

इति स्मृतिप्रोक्तस्यार्थवादिकफलस्य संध्योपासनाविधौ संबन्धे फलापूर्वोत्पादनार्थं प्रधानस्याङ्गापेक्षा स्यादितिचेन्न । स्मृतिप्रोक्तस्यार्थस्य श्रुतिवाक्येन्वयायोगात् । अनादिसिद्धश्रुतिवाक्यार्थं बुद्ध्वा तदनुसारेण पश्चात्प्रवृत्तपुरुषवचसां श्रुत्यर्थे शाब्दान्वयस्य सुतरामसंभवात् । श्रुतिस्मृत्योरेकवाक्यतेति प्रवादस्य श्रुत्यविरुद्धमेवार्थं स्मृतिः प्रतिपादयतीति तात्पर्यं नतु मिथोन्वयेन वाक्यैकवाक्यतेति । तथा च श्रुतिप्रोक्तोर्थवादः श्रौतविधौ प्रवर्तयति । स्मृतिप्रोक्तोर्थवादस्तु न प्रवर्तयति । किंतु श्रौतं विधिमालक्ष्य स्वयं प्रवृत्तं पुरुषं पश्चात्प्ररोचयति । प्रवृत्तिस्तु तत्राहरहः संध्यामुपासीत यावज्जीवमग्निहोत्रं जुहुयादित्याद्यावहरहर्यावज्जीवमित्यादिशब्दं श्रुतवतो मतिरीदृशी भवति यदेवं प्रसह्य श्रुतिः कथयति ततो मातृवद्वत्सला सा किमपि मदिष्टमभिध्यायैवेति संभावनामात्रेण जायत इति सुधियो विभावयन्तु । सूरिभिरिति । पार्थसारथिमिश्रादिभिः स्पष्टतरमुपपादितत्वादित्यर्थः । उपसंहरति–तत्सिद्धमिति ॥

इति श्रीमीमांसान्यायप्रकाशव्याख्यायां प्रभाख्यायां

पूर्वार्धं समाप्तम् ॥

---

## अथोत्तरार्धमारभ्यते–

मन्त्राणां च प्रयोगसमवेतार्थस्मारकतयार्थवत्त्वम्। न तु तदुच्चारणमदृष्टार्थम्। दृष्टे संभवति अदृष्टस्यान्याय्यत्वात्। न च दृष्टस्य प्रकारान्तरेणापि संभवान्मन्त्राम्नानमनर्थकम्। मन्त्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणात्।

साधनद्वयस्य पक्षप्राप्तौ अन्यतरस्य साधनस्याप्राप्ततादशायां यो विधिः स नियमविधिः। यथाहुः—

---

### अथोत्तरार्धम्।

प्रथारम्भे धर्मप्रतिपादकयजेतेत्यत्रत्यप्रत्ययार्थभावनायाः शाब्दी भावनार्थी भावना चेति द्वैविध्यं दर्शयित्वा शाब्दभावनानिरूपणप्रसङ्गेन वेदस्य विधिमन्त्रनामधेयनिषेधार्थवादरूपेण पञ्चविधत्वमुक्तम्। तत्र प्रथमो विधिभागः सप्रयोजनः सावान्तरभेदः सोदाहरणस्तत्र तत्रानुषङ्गिकविषयविचारसहितश्च सप्रपञ्चं पूर्वार्धे निरूपितः। इदानीं मन्त्रादिवेदभागाः शाब्दी भावनार्थी भावना चेति भावनाद्वयस्वरूपं च निरूपणीयम्। तत्र क्रमप्राप्तं मन्त्रभागं निरूपयति— मन्त्राणां चेति। प्रयोगसमवेतः प्रयोगकाले ज्ञायमानोऽर्थः कर्तव्यविशेषरूपः। मन्त्राश्चोच्चार्यमाणाः स्वार्थं प्रतिपादयन्तः कर्तव्यविशेषं स्मारयन्ति। प्रकारान्तरेण। मन्त्राननुच्चार्यैव केवलमेवमेवं कर्तव्यमिति बोधनेन। नियमविधीति। मन्त्रपाठोऽनर्थकः सन्स्वसार्थक्याय नियमविधिं ज्ञापयतीति भावः। तथा च तत्र मन्त्रोच्चारणान्नादृष्टोत्पत्तिः। किंतु मन्त्रोच्चारणपूर्वकार्थस्मरणादेवेति बोध्यम्।

नियमविधिस्वरूपं दर्शयति–साधनद्वयस्येति। द्वयशब्दउपलक्षणमनेकस्य अनेकसाधनमध्ये एकैकस्य प्राप्तौ सत्यां तादृशानेकसाधनमध्ये यदेकं किंचिदिष्टं तस्य साधनस्य यो विधिः स नियमविधिः। तत्र च यदिष्टं तदेव यदि कदाचित्स्वभावत एव कर्ता गृह्णाति तदा नियमविधेर्न किंचित्कृत्यम्। किंतु स तदानीमुदास्ते। यदा तु तादृशेष्टसाधनव्यतिरिक्तं किंचित्साधनं ग्रहीतुं प्रवर्तते तदा अयं नियमविधिरुपस्थितो भूत्वेष्टं साधनं तदानीमप्राप्तं ग्राहयति। तदा चानिष्टस्य साधनस्यार्थिकी निवृत्तिर्भवति। एवं चानिष्टं साधनं नियमयन्नयं नियमविधिरित्युच्यते। यथाहुरिति। प्रथमाध्यायद्वितीयपादे तन्त्रवार्तिककारा इति शेषः।

विधिरत्यन्तमप्राप्ते नियमः पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते ॥

( त. वा. १।२।४ इति )

अस्यायमर्थः । यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं तस्य तदर्थत्वेन यो विधिः सोऽपूर्वविधिः । यथा 'यजेत स्वर्गकामः' इत्यादिः । यागस्य हि स्वर्गार्थत्वं न प्रमाणान्तरेण प्राप्तं किंत्वनेनैव विधिनेति भवत्ययमपूर्वविधिः ।

पक्षेऽप्राप्तस्य तु यो विधिः स नियमविधिः । यथा 'व्रीहीनवहन्ति' इत्यादिः । अनेन हि विधिनाऽवघातस्य न वैतुष्यार्थत्वं बोध्यते । अन्वयव्यतिरेकसिद्धत्वात् । किंतु नियमः । स चाप्राप्तांशपूरणम् । वैतुष्यस्य हि नानोपायसाध्यत्वाद्यस्यां दशायामवघातं परिहृत्योपायान्तरं ग्रहीतुमारभते तस्यां दशायामवघातस्याप्राप्तत्वेन तद्विधानात्मकमप्राप्तांशपूरणमेवानेन विधिना क्रियते । अतश्च नियमविधावप्राप्तांशपूरणात्मको नियम एव वाक्यार्थः । पक्षेऽप्राप्तता-दशायामवघातविधानमिति यावत् । न त्वपूर्वविधाविवात्यन्ताप्राप्तयागविधानमिति ।

---

<u>प्रमाणान्तरेणेति</u> । त्विलक्षयिषितविधिवाक्यव्यतिरिक्तेन वाक्यान्तरेण प्रत्यक्षादिप्रमाणान्तरेण चेत्यर्थः ।

<u>यागस्य हीति</u> । यथा दण्डसत्त्वे घटसत्त्वं दण्डाभावे घटाभाव इत्येवमन्वयव्यतिरेकाभ्यां घटस्य दण्डस्य च कार्यकारणभावो लोकत एव सिद्धो भवति न तथा स्वर्गयागयोः कार्यकारणभावो लोकतोऽवगन्तुं शक्यते । नापि यजेत स्वर्गकाम इत्येतद्वाक्यव्यतिरिक्तेन वाक्यान्तरेण ज्ञायत इति भावः ।

<u>अन्वयव्यतिरेकेति</u> । अवघाते सति वैतुष्यं भवत्यवघाताभावे वैतुष्याभाव इत्येवमन्वयव्यतिरेकाभ्यां वैतुष्यावघातयोः कार्यकारणभावस्य लोकतः सिद्धत्वान्न तद्बोधनार्थोऽयं विधिरित्यर्थः । वैतुष्यं तुषराहित्यम् । नियमविधेरुदाहरणान्तरं यथा समे यजेतेति । दर्शपूर्णमासाभ्यां यजेतेति यागः कर्तव्यतया विहितः । स च देशमन्तरा कर्तुमशक्य इत्यर्थादेव देशविशेषः कश्चित् प्राप्नोत्येव । स च देशविशेषः समो विषमश्चेति द्विविधः । तत्र यदा यजमानः साहजिकतया सम एव देशे यष्टुमिच्छति तदा समे यजेतेति वचनमुदासीनमेवावतिष्ठते । वचनबोधितस्यार्थस्य वचनमन्तरेणैव प्राप्तत्वात् । यदा तु

उभयस्य युगपत् प्राप्तौ इतरव्यावृत्तिपरो विधिः परिसंख्याविधिः। यथा 'पञ्च पञ्चनखा भक्ष्याः' इति। इदं हि वाक्यं न भक्षणविधिपरम्। तस्य रागतः प्राप्तत्वात्। नापि नियमपरम्। पञ्चनखापञ्चनखभक्षणस्य युगपत्प्राप्तेः पक्षेऽप्राप्त्यभावात्। अत इदमपञ्चनखभक्षणनिवृत्तिपरमिति भवति परिसंख्याविधिः।

सा च परिसंख्या द्विविधा श्रौती लाक्षणिकी चेति।

---

कदाचिद्विषमे देशे यष्टुमारभते तदा वचनबोधितस्य समदेशस्याग्रहणात्तद्बोधनार्थं समे यजेतेति वचनं प्रवर्तते। एवं च विषमदेशनिवृत्तिरार्थिकी सिद्धा भवति। अत्रेदं बोध्यम्। नियमविध्यतिक्रमेण विषमदेशे यागः कृतश्चेत्स यागो यथाशास्त्रं नानुष्ठितो भवति। यदि चात्र विषमे न यजेतेति निषेधविधिरेव श्रुतौ निर्दिष्टः स्यात्तदा तमुल्लङ्घ्य विषमदेशे यागः कृतश्चेत्पातकोत्पत्तिः स्यादित्याहुः।

परिसंख्यां लक्षयति–<u>उभयस्येति</u>। <u>पञ्च पञ्चेति</u>।

पञ्च पञ्चनखा भक्ष्या ब्रह्मक्षत्रेण राघव।
शल्यकः श्वाविधो गोधा शशः कूर्मश्च पञ्चमः॥

इति रामायणे श्रीरामचन्द्रं प्रति वालिन उक्तिः। याज्ञवल्क्यस्मृतिरपि–भक्ष्याः पञ्चनखाः सेधागोधाकच्छपशल्यकाः। शशश्च (याज्ञ. १-१७७) इति। सेधा श्वावित्। अत्र शशश्चेति चकारात्खड्गग्रहणम्। पञ्चनखाः शशशल्यकश्वाविद्गोधाखड्गकच्छपा इति गौतमोक्तौ षण्णामुक्तेः।

श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा।

भक्ष्यान्पञ्चनखेष्वाहुः (मनु. ५-१८) इति मनुरपि। शल्यको हिंस्रः प्राणिविशेषः (साळर इति प्रसिद्धः)। श्वाविधोऽपि तत्सदृश एव भूयसा भागेन। शल्यकः स्थूलरोमा श्वाविधः सूक्ष्मरोमेति भेदः। अत्र पञ्चनखापञ्चनखभक्षणस्य युगपदपि प्राप्तिसंभवोऽस्ति। न तु सदैव युगपत्प्राप्तिः परिसंख्याया-मपेक्षिता। प्रागुक्तोदाहरणे समविषमदेशयोस्तु न कदापि युगपत्प्राप्तिसंभवः। यागविशेषः कश्चित्सम एव स्यात्कश्चिद्विषम एव स्यात्। तथा केषुचिद्व्रीहिषु नखविदलनं यत्केषुचिदवहननमेव। नखविदलनोत्तरं तेषामेवावघातश्चेत्सोऽवघातो न वितुषीकरणार्थो भवतीति नैकत्रैककार्यसंपादनार्थं युगपत्प्राप्तिसंभव इत्यतो न तत्र परिसंख्या भवतीति बोध्यम्।

<u>श्रौतीति</u>। श्रुतिः शब्दः। तेन प्रतिपादिता श्रौती। अर्थतः प्रतीय-

तत्र 'अत्र ह्येवावपन्ति' इत्यत्र श्रौती परिसंख्या। एवकारेण पवमानातिरिक्तस्तोत्रव्यावृत्तेरभिधानात्। पञ्च पञ्चनखा भक्ष्या इत्यत्र तु लाक्षणिकी। इतरनिवृत्तिवाचकस्य पदस्याभावात्। अत एवैषा त्रिदोषग्रस्ता। दोषत्रयं च श्रुतहानिरश्रुतकल्पना प्राप्तबाधश्चेति। श्रुतस्य पञ्चनखभक्षणस्य हानादश्रुतापञ्चनखभक्षणनिवृत्तिकल्पनात्प्राप्तस्य चापञ्चनखभक्षणस्य बाधनादिति। अस्मिंश्च दोषत्रये दोषद्वयं शब्दनिष्ठम्। प्राप्तबाधस्तु दोषोऽर्थनिष्ठ इति दिक्।

---

मानार्थी। एवशब्दसत्त्वे श्रौती। तदभावे आर्थी। पञ्च पञ्चनखा भक्ष्या इत्यत्रार्थी परिसंख्या। तथाहि। पञ्चनखा भक्ष्या इत्यस्य वाक्यस्य पञ्चनखभक्षणमर्थः। स चात्र न विधातुं शक्यते। तस्य रागत एव प्राप्तत्वात्। पक्षे प्राप्त्यभावाच्च न नियमः। अतस्तद्वाक्यं व्यर्थम्। किंचात्रापञ्चनखभक्षणनिवृत्तौ वक्तुस्तात्पर्यम्। तच्चात्र न तस्माद्वाक्यादवबुध्यते। तथाच तात्पर्यान्यथानुपपत्त्या लक्षणा स्वीकार्या भवति। पञ्चनखपदस्य पञ्चनखभिन्नेऽर्थे लक्षणा। भक्ष्या इत्यस्य चाभक्ष्या इत्यर्थे। एवं च पञ्चनखभिन्ना अभक्ष्या इत्यर्थे सति वक्तुस्तात्पर्यार्थः सिद्धो भवति। वाक्यवैयर्थ्यं च परिहृतं भवति। लक्षणायां च पञ्चनखपदे भक्ष्यपदे च स्वार्थस्य हानिरिति श्रुतहानिरूप एको दोषः। अपञ्चनखरूपस्याभक्ष्यरूपस्य चान्यार्थस्य परिकल्पनमित्यश्रुतकल्पनारूपो द्वितीयो दोषः। रागतः प्राप्तस्यापञ्चनखभक्षणस्यानेन वाक्येन बाधश्चेति तृतीयो दोषः। अत्र च पदद्वयलक्षणायां प्रतिपदमाद्यं दोषद्वयम्। वाक्यस्य लक्षणायां तु वाक्ये तद्दोषद्वयम्। अत्र पञ्चनखा एव भक्ष्या इत्येवशब्दोक्तौ त्वियमेव श्रौती परिसंख्या भवेत्। तदात्रेतरव्यावृत्तिरूपोऽर्थ एवशब्दादेवावगम्यत इति पञ्चनखेतरभक्षणव्यावृत्तिरूपस्य तात्पर्यार्थस्य शब्दत एवोपपत्तौ न क्वापि लक्षणाश्रयणीया। न च लक्षणाया अभावे स्वार्थस्य रागतः प्राप्तत्वात्पञ्चनखा भक्ष्या इत्यस्य वाक्यस्य वैयर्थ्यं दोषस्तदवस्थ एवेति वाच्यम्। इतरव्यावृत्तिरूपे एवशब्दार्थे इतरत्वस्यावधिबोधनार्थं व्यावृत्तेर्विषयप्रदर्शनार्थं च तस्यावश्यं निर्देष्टव्यत्वात्। एवं श्रौत्यां परिसंख्यायामाद्यं दोषद्वयं न भवति। प्राप्तबाधरूपो दोषस्तु तत्रापि वर्तत एवेति बोध्यम्।

अत्र ह्येवेति। त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्। अत्र ह्येवावपन्ति, अत एवोद्वपन्तीति श्रूयते। आवापः संग्रहः। उद्वापस्त्यागः। सोमयागेषु ज्योतिष्टोमः प्रकृतिभूतो यागः। तत्रत्यस्तोमसंख्यापेक्षया क्वचिद्विकृति-

तत्सिद्धं मन्त्रैरेव स्मर्तव्यमिति नियमविध्याश्रयणान्न मन्त्राम्नानमनर्थकम् । अतश्च युक्तं मन्त्राणां प्रयोगसमवेतार्थस्मारकतयार्थवत्त्वम् ।

तत्र ये मन्त्रा यत्र पठितास्तेषां तत्र यद्यर्थप्रकाशनं प्रयोजनं संभवति तदा तत्रैव विनियोगः । येषां तु न संभवति तेषां यत्र संभवति तत्रोत्कर्षः । यथा पूषानुमन्त्रणमन्त्राणामित्युक्तम् । येषां क्वापि न संभवति तदुच्चारणस्य

---

ष्वाधिका स्तोमसंख्या दृश्यते यथैकविंशेनातिरात्रेण प्रजाकामं याजयेयुरिति । क्वचिच्च विकृतिषु न्यूना स्तोमसंख्या दृश्यते । यथा त्रिवृदग्निष्टुदग्निष्टोम इति । तत्र प्रकृतौ द्वादश स्तोत्राणि बहिष्पवमानमेकं चत्वार्याज्यानि चत्वारि पृष्ठ्यानि माध्यंदिनपवमानमेकमार्भवपवमानमेकं यज्ञायज्ञियमेकमिति । विकृतौ चाधिकसंख्यासंपत्तये प्रकृतितः प्राप्तेष्वेषु स्तोत्रेषु अविशेषात् साम्नामावापः सर्वत्र प्राप्तः । तथा न्यूनसंख्यासंपत्तयेऽविशेषात्सर्वेभ्य एव तेभ्यः साम्नामुद्वापः प्राप्तः । तत्र चैषा परिसंख्या–अत्र ह्येवावपन्ति, अत एवोद्वपन्तीति । अत्रेत्यनेनात इत्यनेन च यज्ञोदरस्थानापन्नपूर्ववाक्योक्तगायत्र्यादित्रयं परामृश्यते । तत्रैवावापस्तत एव चोद्वापः । गायत्र्यादीनां च पवमानेष्वेव सत्त्वात्तद्विषय एवायमावाप उद्वापश्च नान्यस्तोत्रेषु । जैमिनीयन्यायमालायां ( अ. १० पा. ५ अधि. ६ ) चेत्थमुक्तम्–स्तोमस्य विवृद्धये साम्नामावापः क्रियते । ह्रासाय चोद्वापः । तावुभावावापोद्वापौ गायत्र्यादिष्वेव नान्यत्रेत्यत्र ह्येवावपन्तीत्यादिना नियम्यत इति । सोमयागेषु च्छन्दोगैः क्रियमाणा पृष्ठ्यादिसंज्ञिका स्तुतिः स्तोमः ( सि. कौ. तद्धि. ५।१।३८ सू. ) साम्ना स्तुवीत एकं साम तृचे क्रियत इति श्रुतिः । तत्र तृचस्य पञ्चकृत्व आवृत्त्या पञ्चदश मन्त्राः । सप्तदशे स्तोमे अन्त्याया ऋचः सप्तकृत्व आवृत्तिः । प्रथममध्यमयोस्तु पञ्चकृत्व एव । एकविंशे स्तोमे तु तृचस्य सप्तकृत्व आवृत्तिरिति तत्त्वबोधिन्यामुक्तम् । सामाधारमन्त्रसमूहे स्तोमशब्दस्य शक्तिरिति कैयट आह । मीमांसकमते तु पृष्ठ्यरथंतरादिशब्दवाच्या प्रगीतमन्त्रसाध्या गुणवत्त्वेन वर्णनात्मिका स्तुतिरेव स्तोमः । प्रगीतपञ्चदशमन्त्रपरिमाणकः स्तोम इत्यर्थः । स्तुतौ पञ्चदशत्वसंख्या तु मन्त्रद्वारा बोध्या । तथा च पञ्चदशेन स्तुवते इत्यादौ स्तुधात्वर्थसामानाधिकरण्यं पञ्चदशादिशब्दानामुपपद्यत इति । अत्रेतरव्यावृत्तिरूपार्थस्यैवशब्देनैवाभिधानाच्छ्रौती परिसंख्या । एवं पञ्च पञ्चनखा भक्ष्या नेतरे इत्येवं नञेतरव्यावृत्तिर्बोध्यते चेत्तत्रापि श्रौती स्यादेवेति बोध्यम् ।

यथा पूषानुमन्त्रणेति । इदं लिङ्गप्रमाणनिरूपणावसरे प्रागुक्तम् ( पृ. ११० प ८) ।

येषां क्वापीति । प्रयोगसमवेतार्थबोधकत्वं येषां क्वापि न संभवति तथा

त्वगत्याऽदृष्टार्थत्वम् । सर्वथापि तु तेषां नानर्थक्यमिति ।

नामधेयानां विधेयार्थपरिच्छेदकतयार्थवत्त्वम् । तथाहि 'उद्भिदा यजेत पशुकामः' इत्यत्र उद्भिच्छब्दो यागनामधेयम् । तेन च विधेयार्थपरिच्छेदः क्रियते । अनेन हि वाक्येनाप्राप्तत्वात्फलोद्देशेन यागो विधीयते । यागसामान्यस्य चाविधेयत्वाद्यागविशेष एव विधीयते । तत्र कोऽसौ विशेष इत्यपेक्षायामुद्भिच्छब्दादुद्भिद्रूपो याग इति ज्ञायते । उद्भिदा यागेनेति सामानाधिकरण्येन नामधेयान्वयात् ।

तस्य च यजिना सामानाधिकरण्यं न नीलोत्पलादिशब्दवत् । तत्र हि

---

येषां हुंफडादिमन्त्राणामर्थ एव न प्रतीयते तेषामदृष्टार्थमुच्चारणम् । जपसमयेऽप्येवमेव । यद्यपि तदा किंचिदनुष्ठानं नास्ति तथापि यां देवतामुद्दिश्य जपः क्रियते तादृशदेवतासंबन्ध्यर्थप्रतिपादकमन्त्रजपश्चेत्तत्र मन्त्रोच्चारणपूर्वकतदर्थस्मरणमावश्यकम् । तादृशदेवतासंबन्ध्यर्थाप्रतिपादकानां हुंफडादीनां वा जपकाले तदुच्चारणं केवलादृष्टार्थमिति भावः ।

एवं मन्त्ररूपं वेदभागं निरूप्येदानीं नामधेयरूपं वेदभागं निरूपयति—नामधेयानामिति । विधेयार्थस्य परिच्छेदकत्वं चेयत्तया मर्यादाकरणम् । यागसामान्यस्येति । यथा गच्छ पचेत्युक्ते गमनक्रिया पचनक्रिया च विधातुं शक्यते नतु सामान्यतः कुरु इत्युक्ते क्रियासामान्यं विधातुं शक्यते । यदि च कश्चित्कुरु इत्येव केवलं ब्रूयात्तर्हि बोद्धा प्रकरणादिना तदभिप्रायं संभाव्य कंचित्क्रियाविशेषमेव कर्तुमारभते । तथा च सामान्यशब्दादपि क्रियाविशेष एव विधेयो भवति । स च क्रियाविशेषोऽमुक इति परं सामान्यशब्दान्नावगम्यते । तदर्थं च विशेषार्थावबोधकपदापेक्षा । एवं च सामान्यशब्दादपि विशेषस्यैव विधानं विशेषशब्दादपि विशेषस्यैव विधानमिति सममेव । आद्यादनियतविशेषविधानं द्वितीयान्नियतविशेषविधानमिति भेदः । न तु सामान्यशब्दाद्विशेषविधानं न भवतीति मन्तव्यम् । निर्विशेषस्य सामान्यस्याभावात् । निर्विशेषं न सामान्यमिति न्यायात् ।

नन्वेवं नियतानियतकृतभेदेऽपि यजधातुरुद्भिच्छब्दश्चेत्यनयोर्द्वयोर्यागविशेषवाचित्वसाम्यादर्थभेदाभावेन कथं तयोः सामानाधिकरण्यम् । भिन्नप्रवृत्तिनिमित्तानां शब्दानामेकस्मिन्नर्थे प्रवृत्तिः सामानाधिकरण्यमित्येवं सामानाधिकरण्यस्य शाब्दिकैर्निर्वचनादिति चेत्तत्राह— तस्य च यजिनेति ।

उत्पलशब्दस्यार्थादुत्पलादन्यो नीलशब्दस्य वाच्यार्थोऽस्ति नीलगुणः। लक्षणया तु नीलशब्दस्य द्रव्यपरत्वेन सामानाधिकरण्यम्। उद्भिच्छब्दस्य तु यज्यवगतयागविशेषान्नाऽन्यो वाच्योऽर्थोऽस्ति। विशेषवाचित्वात्तस्य।

अतश्चार्थान्तरवाचित्वाभावेन न नामधेयस्य नीलशब्दवत्सामानाधिकरण्यम्। किं तर्हि वैश्वदेव्यामिक्षेत्यत्रामिक्षाशब्दवत्। वैश्वदेवीशब्दस्य हि देवतातद्धितान्तत्वात्तद्धितस्य च 'सास्य देवता' (पा. सू. ४।२।२४) इति सर्वनामार्थे स्मरणात्। सर्वनाम्नां चोपस्थितविशेषवाचित्वेन विशेषपरत्वम्। तत्र कोऽसौ वैश्वदेवीशब्दोपात्तो विशेष इत्यपेक्षायामामिक्षापदसांनिध्यादामिक्षारूपो विशेष इत्यवगम्यते। यथाहुः--

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः।

---

<u>उत्पलादन्य इति</u>। यथा चोत्पले नीलो गुणो नीलं वस्त्रमित्यादयः प्रयोगाश्च दृश्यन्ते नैवमत्र यागवृत्तिः कश्चिद्धर्म उद्भिच्छब्देनोच्यते। नापि च यागादन्यत्र कचिदप्युद्भिच्छब्दस्य प्रयोगो दृश्यते। एवं च न नीलोत्पलादिवदत्र सामानाधिकरण्यं वक्तुं शक्यत इति भावः।

<u>किं तर्हीति</u>। न सर्वत्र सामानाधिकरण्ये नीलोत्पलादिशब्दवदर्थभेदस्तन्त्रम्। नियतानियतमात्रकृतविशेषेपि सामानाधिकरण्यदर्शनात्। किं तर्हि तत्र नियामकमिति चेदेकत्रार्थे प्रयुक्तयोः शब्दयोः सर्वथार्थैक्याभावः। घटकुम्भशब्दयोः सर्वथार्थैक्यान्न सामानाधिकरण्येन प्रयोगः। घटः पट इत्येकत्रार्थे प्रयुक्तत्वाभावान्न सामानाधिकरण्यम्। एकत्रार्थे प्रयुक्तयोरित्यस्यैकार्थतात्पर्यकत्वेन प्रयुक्तयोरित्यर्थः। तेन सिंहो माणवक इत्यत्र सामानाधिकरण्यं सिध्यति। <u>आमिक्षेति</u>। तप्ते पयसि दध्नि मिश्रिते तत्र यो घनीभूतोऽर्थः सामिक्षा। द्रवीभूतोऽर्थश्च वाजिनमित्युच्यते।

<u>देवतातद्धितान्तत्वादिति</u>। देवतावाचकशब्दप्रकृतिकतद्धितप्रत्ययान्तत्वादित्यर्थः। विश्वदेवशब्दाद्विश्वदेवा देवता अस्येत्यर्थे सास्य देवता (पा. सू. ४।२।२४) इति सूत्रेणाण्प्रत्यये टिड्ढाणञ् (पा. सू. ४।१।१५) इति सूत्रेण ङीपि वैश्वदेवीशब्दः सिध्यति। <u>सर्वनामार्थे इति</u>। यद्यपि सा देवतास्येति विशिष्टः प्रत्ययार्थस्तथापि तत्र देवताया अस्येत्येतत्सर्वनामार्थोपसर्जनत्वेन प्रतीतिरिति तद्धितप्रत्ययार्थे प्राधान्यं सर्वनामार्थस्यैव। यद्वा सास्य देवतेति सूत्रे देवताशब्दश्च प्रकृतिनिर्देशार्थः। प्रत्ययार्थस्त्वस्येत्येवेति प्राचीनशाब्दिकमतानुसारेणेदम्। <u>यथाहुरिति</u>। तन्त्रवार्तिककारा इति शेषः। <u>आमिक्षामिति</u>।

आमिक्षापदसांनिध्यात्तस्यैव विषयार्पणम् ॥

( त. वा. २।२।२३ ) इति

तथा— श्रुत्यैवोपपदस्यार्थः सर्वनाम्ना प्रतीयते ।
तदर्थस्ताद्धितेनैवं त्रयाणामेकवाच्यता ॥

( त. वा. २।२।२३ ) इति ।

तस्माद्यथा वैश्वदेवीशब्दोपात्तविशेषसमर्पकत्वेनामिक्षापदस्य वैश्वदेवीशब्देन सामानाधिकरण्यमेवं सामान्यस्याविधेयत्वाद्यज्यवगतयागविशेषसमर्पकत्वेन नामधेयस्य यजिना सामानाधिकरण्यम् । तत्सिद्धं नामधेयानां विधेयार्थपरिच्छेदकतयाऽर्थवत्त्वम् । यथाहुः

' तदधीनत्वाद्यागविशेषसिद्धेः ' (त. वा. १।४।१) इति ।

नामधेयत्वं च निमित्तचतुष्टयात् । मत्वर्थलक्षणाभयात्, वाक्यभेद-

---

वदत्येवेत्यत्र क्रियासंगत एवकारोत्यन्तायोगव्यवच्छेदमर्थं प्रतिपादयति । एव तद्धितप्रत्ययो देवतायुक्तामिक्षारूपं विशेषमप्यर्थं प्रतिपादयत्येवेत्यर्थः । परं स विशेषोऽमुक इति न नियतः । नियतविशेषार्थप्रतिपत्तिस्तु तस्मात्प्रत्ययादेव जायते । तत्र सहकारितयामिक्षापदसंनिधानमुपयोगि भवति । तथा च प्रत्ययात्सामान्यार्थस्यैवावगतिः । विशेषावगतिस्तु केवलमामिक्षापदादेवेति न भ्रमितव्यम् । आमिक्षापदं हि स्वयं विशेषमर्थं बोधयदपि प्रत्ययार्थेऽनियतविशेषरूपे नैयत्यं संपादयतीति भावः ।

श्रुत्यैवेति । उपपदस्यामिक्षेत्यस्य योर्थः पदार्थविशेषः सोस्येति सर्वनाम्ना श्रुत्यैव प्रतीयते । श्रुत्यैवेत्यनेन विशेषार्थस्यापि सर्वनामशब्दवाच्यत्वमेवेति द्योतयति । तद्धितप्रत्ययस्यापि च सर्वनामार्थ एव विधानात्तद्धितप्रत्ययोपि विशेषार्थमेव बोधयति । एवं त्रयाणामुपपदसर्वनामतद्धितानामेक एव वाच्योर्थ इत्यर्थः । तस्मात्सर्वनाम्नः सकाशात्तदर्थे विहितात्तद्धितप्रत्ययाच्च विशेषावगतिर्भवत्येव । स विशेषोऽनियत इत्यन्यत् । तदाह– वैश्वदेवीशब्दोपात्तविशेषेति ।

तदधीनत्वादिति । वार्तिककारोक्तिरियं प्रथमाध्यायचतुर्थपादप्रथमाधिकरणे । यागविशेषस्य यज्–धातुतः प्रतीतस्यापि या सिद्धिरमुक इत्येवं नियतरूपेणावबोधः स उद्भिदादियागनामधेयाधीनः । अतो नामधेयरूपस्य वेदभागस्य सार्थकत्वमित्यर्थः ।

अथेदं यागविशेषनामधेयमिति कथमवगम्यत इत्यत्राह–नामधेयत्वं चेति ।

भयात्, तत्प्रख्यशास्त्रात्, तद्व्यपदेशाच्चेति। तत्रोद्भिदा यजेत पशुकाम इत्यत्र उद्भिच्छब्दस्य यागनामधेयत्वं मत्वर्थलक्षणाभयात्। तथाहि उद्भिच्छब्दस्य गुणसमर्पकत्वे यागानुवादेन तावन्न गुणविधानं युज्यते। फलपदानर्थक्यापत्तेः। न चानेन वाक्येन फलं प्रति यागविधानं तस्मिंश्च गुणविधानं युज्यते।

---

तत्रोद्भिदेति। इदं प्रथमाध्याये चतुर्थपादे द्वितीयेऽधिकरणे स्थितम्। तत्र ह्येवमुक्तम्—उद्भिदा यजेत पशुकाम इत्यत्र तृतीयान्तेनोद्भिच्छब्देन योऽर्थो विवक्षितः सोऽयं यागे कश्चिद्गुणः स्यात्। दध्ना जुहोतीत्यनेन गुणविधिना समानत्वात्। न च दधिशब्दार्थो लोकप्रसिद्धः, उद्भिच्छब्दार्थस्त्वप्रसिद्ध इति वाच्यम्। रूढ्यभावेऽप्यवयवार्थनिर्वचनेनार्थावगमसंभवात्। उद्भिद्यते भूमिरनेनेति करणव्युत्पत्त्या खनित्रवाच्यसौ शब्दः। तथाच ज्योतिष्टोमेन यजेत (ता. ब्रा. १९।७) इति प्रकृते ज्योतिष्टोमे खनित्ररूपो गुणोऽनेन विधीयतामिति पूर्वपक्षसङ्क्षेपेत्यमुक्तम्। अस्य वाक्यस्य गुणविधायकत्वे उद्भिदा यागं भावयेदिति वाक्यार्थः। तत्र पशुकामपदस्य नान्वयः संभवति। यदा तु यागेन पशुं भावयेदित्येवं पशुकामपदस्यान्वयः क्रियते तदोद्भिदेत्यस्य नान्वयः संभवति। एकेन वाक्येनोभयविधाने विरुद्धत्रिकद्वयापत्तिः। वाक्यार्थद्वयेनोभयविधाने वाक्यभेददोषः। उद्भिच्छब्दस्य कर्मविशेषनामधेयत्वाङ्गीकारे तु तस्य यजधात्वर्थे सामानाधिकरण्येनान्वयादुद्भिन्नाम्ना यागेन पशुं भावयेदित्येक एवोद्देश्यविधेयभावः। तथा च न विरुद्धत्रिकद्वयापत्तिर्नापि वाक्यभेदः। नचात्र मत्वर्थलक्षणाभयान्नामधेयत्वमिति यथोच्यते तथा विरुद्धत्रिकद्वयापत्तिरूपदोषभयाद्वाक्यभेदभयाद्वा नामधेयत्वमिति कुतो नोक्तमिति वाच्यम्। यत्रागत्या कश्चिद्दोषः स्वीकार्यो भवति तत्र यो दोषो लघीयान्स एव स्वीकार्य इत्युद्भिच्छब्दस्य नामधेयत्वाभावे विरुद्धत्रिकद्वयापत्तिरूपगुरुदोषापेक्षया वाक्यभेददोष एवापाद्यो भवेत्। तदपेक्षया च लघीयान्मत्वर्थलक्षणारूपो दोषः। तेन च सत्यां गतौ न वाक्यभेदः स्वीकार्यो भवति न वा विरुद्धत्रिकद्वयापत्तिः। तथाहि—अत्र यागेन पशुं भावयेदित्युक्ते केन यागेनेत्याकाङ्क्षायामुद्भिदेति तृतीयान्तपदं यागनामत्वेनान्वेति। उद्भिद्यते पशुरूपफलमनेनेति व्युत्पत्त्या यागनामत्वमुद्भिच्छब्दस्योपपद्यते। न चैवं खनित्ररूपोऽर्थोऽपि यागेनैवावगम्यत इति यागनामत्वमेवोद्भिच्छब्दस्येत्यत्र किं नियामकमिति वाच्यम्। सामानाधिकरण्यस्य नियामकत्वात्। उद्भिन्नामकेन यागेन पशुं भावयेदित्युक्ते सामानाधिकरण्यं भवति। उद्भिच्छब्दस्य खनित्रवाचित्वे तूद्भिदा साध्यो यो यागस्तेन पशुं भावयेदित्येवमुद्भिद्यजधात्वोर्वैयधिकरण्यं स्यात्। अथ यद्युद्भिच्छब्दस्य मत्वर्थलक्षणया खनित्रवता यागेन पशुं भावयेदित्येवं सामानाधिकरण्योपपत्तिः क्रियेत तदा मत्वर्थलक्षणादोषोपरिहार्यो

वाक्यभेदापत्तेः । नापि गुणफलसंबन्धविधानं संभवति । परपदार्थविधानेन विप्रकृष्टार्थविधानापत्तेः । धात्वर्थस्य स्वरूपेणाविधानात्तदुद्देशेन वान्यस्य कस्य-

---

भवति । तस्मान्मत्वर्थलक्षणाभयादुद्भित्पदं यागनामधेयम् । वैयधिकरण्यान्वयदोषापेक्षया च मत्वर्थलक्षणादोषो लघीयान् । लक्षणा हि शब्ददोषः । वैयधिकरण्यं चान्वयदोषः । अतोत्र वैयधिकरण्यान्वयभयान्नामधेयत्वमिति नोक्तम् । दध्ना जुहोति व्रीहिभिर्यजेतेत्यादौ दध्यादिशब्दानां द्रव्यविशेषेऽत्यन्तं रूढतया यागनामत्वासंभवादगत्या गुणत्वमाश्रीयते । सोमेन यजेतेत्यत्राप्यप्रसिद्धार्थनामधेयत्वकल्पनापेक्षया वरं प्रसिद्धार्थद्वारेण लक्षणाश्रयणम् । प्रकृते तूद्भिच्छब्दस्य लोकप्रसिद्धार्थाभावाद्यागनामधेयत्वाङ्गीकारो युक्तः । नाम्नः प्रयोजनं तु सर्वत्र व्यवहारलाघवमेव । नहि ऋत्विग्वरणादिषु अनेनाहं यक्ष्ये इत्याख्यानोपायो नामधेयमन्तरेण लघुः कश्चिदस्ति ।

नापीति । उद्भिच्छब्दवाच्यः खनित्ररूपो गुणस्तेन पशुं भावयेदित्येवं खनित्रस्य पशोश्च यः कार्यकारणभावः संबन्धः स यजेतेत्यत्रत्येनाख्यातप्रत्ययेन विधीयत इत्याशयः ।

परपदार्थेति । विधिबोधकप्रत्ययेन हि स्वप्रकृत्यर्थस्य विधानं संनिकृष्टत्वाद्यद्यपि योग्यम् । प्रकृत्यर्थस्य वाक्यान्तरेण प्राप्तौ तु तं प्रकृत्यर्थमुद्दिश्यान्यस्य कस्यचिद्विधानं ग्राह्यं भवति । विधिर्हि नियमेनोद्देश्यसापेक्षः । तथाच विधिबोधकः प्रत्यय उद्देश्यविधेयभावसंबन्धं बोधयति । स च संबन्धः प्रकृत्यर्थस्य विधेयतयोद्देश्यतया वा भवतु । तत्रापि प्रकृत्यर्थस्य विधेयत्वं वरम् । तदसंभवे तूद्देश्यत्वम् । तथा च प्रकृत्यर्थस्य विधेयतयोद्देश्यतया वान्वये सति न तदुत्तरप्रत्ययेन परपदार्थविधानं भवति । प्रकृते तु पशुमुद्दिश्योद्भिद्रूपस्य गुणस्य विधानमिति न तत्र प्रकृत्यर्थो यागो विधेयो नाप्युद्देश्य इति परपदार्थविधानमवर्जनीयम् । आख्यातघटितपदापेक्षया परमन्यद्यत्पदमुद्भिदेति तस्य विधाने विप्रकृष्टविधानं स्यादित्यर्थः । धातुर्हि तत्प्रकृतिकेन विधिबोधकप्रत्ययेन तदर्थस्य विधाने बोधिते स्वार्थायैव निर्दिष्टो भवति न परार्थः । यथा सोमेन यजेतेत्यादौ । यत्र च तत्प्रकृतिकेन विधिबोधकेन प्रत्ययेन तादृशधात्वर्थमुद्दिश्यान्यस्य विधानं बोध्यते तत्र स धातुः परार्थं निर्दिष्टो भवति । यत्र च तत्प्रकृतिकेन विधिबोधकप्रत्ययेनान्यदेव किंचिदुद्दिश्यान्यस्यैव कस्यचिदर्थस्य विधानं बोध्यते तत्र धातुरत्यन्तं परार्थतया निर्दिष्टो भवति । प्रकृतिं विना केवलस्य प्रत्ययस्य प्रयोगासंभवेन प्रत्ययप्रयोगस्य साधुत्वार्थमेव केवलं तत्र धातोरुच्चारणात् । किं चैवं प्रत्ययप्रयोगस्य साधुत्वार्थमेव तत्प्रकृतितया धातोरुच्चारणं चेत्सामान्यतः कृभ्वस्-

चिदविधानाद्धातोरत्यन्तपारार्थ्यापत्तेश्च । यज्यानर्थक्यापत्तेश्च । नहि तदानेन करणं समर्प्यते । गुणस्य करणत्वेनान्वयात् । नापि फलम् । पशोर्भाव्यत्वेनान्वयात् । अथ गुणफलसंबन्धविधाने यागस्याश्रयत्वेन संबन्ध इति चेन्न । यजेतेत्यत्र आश्रयत्ववाचकपदाभावात् । अथ सिद्धान्ते करणत्वमिवाश्रयत्वमपि लक्ष्यमिति चेन्न । आश्रयत्वापेक्षया करणत्वस्य लघुत्वेन तल्लक्षणाया

---

धातुष्वन्यतमो निर्दिष्टव्यो न विशेषार्थको यजादिरित्याह--यज्यानर्थक्येति । नहि तदेति । तदा गुणफलसंबन्धविधाने विवक्षिते सत्यनेन यजधातुना स्वार्थो यागः करणतया न प्रतिपाद्यते । तस्याविधेयत्वात् । पशोरिति । पशोः साध्यत्वेन तस्यैवोद्देश्यत्वात् ।

अथ यथा दध्नेन्द्रियकामस्य जुहुयात् ( तै. ब्रा. २।१।५।६) इत्यत्र होमस्य धात्वर्थस्याश्रयतया दधिकरणत्वेऽन्वयमङ्गीकृत्य तेन होमयेन दधिकरणत्वेनेन्द्रियं भावयेदिति वाक्यार्थः पूर्वमुक्तः (पृ. ४२।६) तथात्र कुतो न स्वीक्रियत इत्याह-अथ गुणफलेति । यागीयेनोद्भित्करणत्वेन पशुं भावयेदिति वाक्यार्थः । एवं वाक्यार्थे स्वीक्रियमाणे न यजधातोरानर्थक्यम् । नाप्यत्यन्तपारार्थ्यम् । दध्ना जुहोतीत्यत्रेव धात्वर्थस्य विधेयेन सह संबन्धात् । दध्ना जुहोतीत्यत्र होमस्य धात्वर्थस्योद्देश्यतया विधेयेन दध्ना सह संबन्धः । अत्र च यागस्य धात्वर्थस्याश्रयतया विधेयेनोद्भित्करणत्वेन सह संबन्ध इति विशेष इत्यन्यत्। धात्वर्थस्य विधेयेन सह संबन्धस्तूभयत्र तुल्य एवेति नात्यन्तपारार्थ्यमित्यभिमानः । परपदार्थविधानं तु दध्नेन्द्रियकामस्येत्यत्रैव सह्यमित्याशयः ।

पदाभावादिति । नहि यजधातूत्तरं सप्तमीप्रत्ययादिराश्रयत्वप्रतिपादकः कश्चन शब्दो दृश्यते ।

सिद्धान्त इति । उद्भिच्छब्दस्य नामधेयत्वाङ्गीकारेऽपि यथा यागस्य धात्वर्थस्य करणरूपार्थप्रतिपादकशब्दमन्तरेणैव प्रत्ययार्थभावनायां करणत्वेनान्वयः स्वीक्रियते तथेदानीं पूर्वपक्षिणा यागस्याश्रयरूपार्थप्रतिपादकशब्दमन्तरेणैवोद्भिदेति तृतीयान्तार्थे आश्रयत्वेनान्वयः स्वीकर्तुं शक्यः । सिद्धान्ते यजधातोर्यागकरणकत्वरूपेऽर्थे लक्षणेति चेदिदानीमपि यागाश्रयकत्वरूपेऽर्थे लक्षणास्त्विति समानमेवेत्याशयः ।

आश्रयत्वापेक्षयेति । कर्तृत्वाद्या आधारेतराः कारकशक्तयः स्वातन्त्र्येण क्रियान्वयप्रयोजिका भवन्तीत्यतस्ताः स्वतन्त्रा इत्युच्यन्ते । आधारशक्तिस्तु कारकशक्तित्वेन शाब्दिकैः स्वीकृतापि न स्वातन्त्र्येण क्रियान्वयप्रयोजिका । आधारस्य कर्त्रादिद्वारैव क्रियासंबन्धात् । अत आधारशक्तेः कर्त्रादिशक्तिपार-

एव युक्तत्वात् । फलाय विधीयमानो गुणो यत्र कारकतामापद्यते स आश्रयः । तत्त्वं चाश्रयत्वम् । करणत्वं च निष्कृष्टा शक्तिरिति लाघवम् ।

किंच गुणफलसंबन्धविधाने करणीभूतो गुणस्तन्निष्ठं वा करणत्वं फलोद्देशेन विधेयम् । तत्राद्ये पक्षे करणत्वस्य गुणोपसर्जनत्वेन प्रतीतिर्लक्षणयैव वाच्या । तस्य तृतीयाप्रत्ययार्थत्वात् प्राधान्येनोपस्थितेः ।

---

तन्त्र्यमेव । तथा च यत्राश्रयत्वे तदितरकारकशक्तौ वा कस्मिन्नर्थे लक्षणा कार्येति संशयस्तत्र लाघवात्स्वतन्त्रशक्तावेव लक्षणा स्वीकार्या भवति । प्रकृते च पशुरूपं फलमुद्दिश्य विधीयमानो य उद्भिद्रूपो गुणः स यस्यां क्रियायां करणकारकतां प्राप्नोति स यागः क्रियारूपस्तस्योद्भित्करणत्वस्याश्रयः । तथाचाश्रयत्वार्थे लक्षणायां गौरवं स्पष्टमेव । निष्कृष्टेति । स्वतन्त्रेत्यर्थः । किंचोद्देश्यविधेयभावो हि वाक्यार्थः । तथाच वाक्यार्थे प्रथमत उद्देश्यविधेयभावस्य प्रतीतिः । तदैव विधेयतयान्वयः करणत्वेनेति करणत्वस्य शीघ्रमुपस्थितिः । उद्देश्यविधेयेतरार्थानां तु पश्चादुद्देश्ये विधेये वान्वय इति तादृशान्वयप्रयोजकीभूतस्याश्रयत्वादेः पश्चादुपस्थितिः । तथा च शीघ्रोपस्थितिके करणत्वार्थ एव लक्षणा समुचिता भवति ।

किंचेति । उद्भिच्छब्दार्थः खनित्रम् । तत्पशुरूपं फलमुद्दिश्य विधीयते । परंतु केवलेन खनित्रेण न पशुप्राप्तिः । किंतु यागक्रियानिरूपितकरणत्वविशिष्टेन । तथा च पशुभावनायां साधनत्वेन किं विधीयते यागीयकरणत्वविशिष्टं खनित्रमुत खनित्रनिष्ठं यागीयं करणत्वमिति संशयः । तत्रोद्भिदेति तृतीया यागीयकरणत्वबोधिका न तु पशुभावनाकरणत्वबोधिकेति बोध्यम् । तत्राद्य इति । यागीयकरणत्वविशिष्टं खनित्रं पशुभावनायां करणत्वेन विधीयत इति पक्षे इत्यर्थः । करणत्वस्येति । उद्भिदेत्यत्रत्यतृतीयाप्रत्ययार्थस्य यागीयकरणत्वस्येत्यर्थः । गुणोपसर्जनत्वेन । खनित्ररूपगुणनिरूपितविशेषणत्वेन । लक्षणयैवेति । प्रत्ययार्थस्य प्रत्ययतः शक्त्या योपस्थितिः सा प्रकृत्यर्थनिरूपितप्रधानत्वेनैव भवति । शब्दशक्तिस्वाभाव्यात् । एतन्मूलक एव प्रकृतिप्रत्ययार्थयोर्मध्ये प्रत्ययार्थस्य प्राधान्यमित्युत्सर्गः । तथा च यागीयकरणत्वविशिष्टं यत्खनित्रं तदत्र पशुभावनायां करणत्वेन विधीयत इतिपक्षे तृतीयाप्रत्ययार्थस्य यागीयकरणत्वस्य प्रकृत्यर्थखनित्रनिरूपिताप्रधानत्वेन प्रतीतिरपेक्षिता सा शक्त्या दुर्लभा । अतोत्र लक्षणाप्यावश्यकीति भावः । यस्माच्छब्दाद्योऽर्थः शक्त्या येन रूपेण प्रतीयते तस्यैवार्थस्य रूपान्तरेण प्रतीतेरपेक्षितत्वे लक्षणैव स्वीकार्या भवति । अत एवापत्यार्थे विधीयमानस्याप्यणादिप्रत्ययस्य नापत्य-

यद्यपि गुणनिष्ठं करणत्वं फलोद्देशेन विधेयं तदापि फलभावनायां करणत्वेनान्वययोग्यगुणनिष्ठकरणत्वोपस्थितिर्लक्षणयैव वाच्या। तृतीयाभिहितस्य करणकारकस्य क्रियान्वययोग्यस्य करणत्वेनान्वयायोग्यत्वात्। करणशब्देनाभिहितं हि करणकारकं तत्त्वेनान्वययोग्यं न तृतीयाभिहितम्। करणशब्दादिव तृतीयातस्तृतीयोत्पत्तिप्रसङ्गात्।

अतश्च करणत्वेनान्वययोग्यगुणनिष्ठकरणत्वोपस्थितिर्लक्षणयैव वाच्या। लक्षणया चोपस्थितकरणत्वस्य करणीभूतस्य वा गुणस्य फलभावनायां यत् करणत्वं तदपि लक्षणयैव वाच्यम्। श्रूयमाणया तृतीयया गुणमात्रस्य यागं प्रति करणत्वाभिधानात्।

---

शब्दपर्यायत्वम्। शक्तिभेदात्। अपत्यशब्दाद्धि अपत्यरूपस्यार्थस्यापत्यत्वेनैव केवलं प्रतीतिः शक्त्या जायते। न तु किंचिन्निरूपितविशेष्यत्वेन तादृशविशेषणत्वेन वा। औपगवादिशब्देष्वणप्रत्ययाद्धि तादृशार्थप्रतीतिः प्रकृत्यर्थनिरूपितविशेष्यत्वेनैव। नहि दशरथस्यापत्यमितिवद्दशरथस्याणिति प्रयोगो भवति। एवमेवात्र तृतीयाप्रत्ययस्य करणशब्दस्य च क्रियासाधनरूपेऽर्थे समत्वेपि शक्तिभेदो बोध्यः।

द्वितीयपक्षं दूषयति-यद्यपीति। कारकविभक्तिर्हि स्वार्थं कर्तृत्वकरणत्वादिरूपं प्रकृत्यर्थप्रतियोगिकक्रियानुयोगिकसंसर्गत्वेनैव शक्त्योपस्थापयति। न तु विभक्तिप्रत्ययाच्छक्त्योपस्थितस्यार्थस्य किंचिन्निरूपितविशेष्यत्वं तादृशविशेषणत्वं वा भवति। कर्तृकर्मादिशब्दात्तु या कर्तृत्वाद्यर्थस्य प्रतीतिः सा किंचिन्निरूपितविशेष्यत्वेन तादृशविशेषणत्वेन वा। न तु संसर्गत्वेन। अत एव घटः कर्म आनयनमित्येवं पदत्रयात्र घटानयनरूपार्थस्य बोधः। प्रकृते चोद्भिदेति तृतीयाप्रत्ययाद्यो यागीयकरणरूपोऽर्थ उपस्थितः स पशुभावनायां करणत्वेन विशेषणं क्रियते। सा च विशेषणत्वेनोपस्थितिर्लक्षणां विना दुर्लभेति भावः। आद्यपक्षेप्ययं दोषः। तदा तृतीयाप्रत्ययार्थस्य करणत्वस्य विशेषणत्वेन प्रतीतिर्लक्षणाधीनैव। शब्दशक्तिस्वाभाव्येन विभक्तिप्रत्ययाच्छक्त्योपस्थितस्यार्थस्य संसर्गत्वेनैव भानमिति सिद्धान्तात्।

दूषणान्तरमाह-लक्षणया चेति। तृतीयाप्रत्ययादुद्भिदो यागीयकरणत्वमवबुध्यते। तादृशोद्भिन्निष्ठयागीयकरणत्वस्य यत्पशुभावनायां करणत्वं तद्बोधिका विभक्तिरत्र नास्तीति कथं तस्य शाब्दबोधे भानं स्यात्। तथाचोद्भिन्निष्ठकरणत्वरूपार्थबोधकस्योद्भिदेति तृतीयान्तपदस्योद्भिन्निष्ठकरणत्वकरणत्वरूपेऽर्थे लक्षणा स्वीकार्या स्यादिति भावः। एवं गुणफलसंबन्धविधाने

अत एव तन्त्ररत्ने चतुर्थे करणीभूतगोदोहनादेः पश्वर्थत्वं समभिव्याहारादित्युक्तम् । अतश्च गुणफलसंबन्धविधाने धातोरत्यन्तपारार्थ्यादिबहुदोषवत्त्वादुद्भिच्छब्दस्य गुणसमर्पकत्वे गुणविशिष्टकर्मविधानमेव स्वीकार्यम् ।

तथा सति हि यजिना लघुभूतं करणत्वमात्रं लक्ष्यते । उद्भिच्छब्देन च प्रकृत्यंशेन मत्वर्थमात्रं लक्ष्यमिति गुणफलसंबन्धविधानाल्लाघवं भवति । धातोरत्यन्तपारार्थ्यादिकं तु न भवत्येव । धात्वर्थस्यैव फलोद्देशेन विधानात् ।

अतश्चोद्भिच्छब्दस्य गुणसमर्पकत्वे तेन मत्वर्थं लक्षयित्वा गुणविशिष्टकर्मविधानं स्वीकार्यमुद्भिद्वता यागेन पशुं भावयेदिति । कर्मनामधेयत्वे

विप्रकृष्टार्थविधानं (१) यजधातोर्यागाश्रयत्वे लक्षणा (२) तृतीयाप्रत्ययस्य करणत्वमात्रेऽर्थे लक्षणा (३) तृतीयान्तस्योद्भिदेत्यस्य चोद्भित्करणत्वकरणत्वेऽर्थे लक्षणा (४) इत्येवं बहुदोषसद्भावाद्योद्भिदेत्यत्र गुणफलसंबन्धविधानं युक्तम् । दध्नेन्द्रियकामस्येत्यत्र त्वगत्यैते दोषाः सह्या भवन्ति । दधिशब्दस्य प्रसिद्धार्थकत्वेन तत्र यागनामधेयत्वस्य वक्तुमशक्यत्वात् । शक्त्यन्तरकल्पनं तु अनेकलक्षणाश्रयणापेक्षयापि गुरुभूतम् । उद्भिच्छब्दस्य यागनामधेयत्वे तु न शक्त्यन्तरकल्पनम् । किन्त्वेकैव यागविशेषेऽर्थे शक्तिरिति ।

अत एवेति । गुणफलसंबन्धविधाने विप्रकृष्टार्थविधानादिबहुदोषसत्त्वादेवेत्यर्थः । तन्त्ररत्नं पार्थसारथिमिश्रकृतो ग्रन्थविशेषो वार्तिकव्याख्यानरूपः । गौर्दुह्यतेऽत्रेति गोदोहनं दोहनाधारपात्रम् । दर्शपूर्णमासप्रकरणे चमसेनापः प्रणयेत् गोदोहनेन पशुकामस्य इत्युच्यते । तत्र गोदोहनाभावेऽपि चमसेन जलानयने क्रतुसिद्धिर्भवत्येवेति न गोदोहनस्य क्रत्वर्थत्वं संभवति । किंतु पशुरूपफलप्राप्तिद्वारा पुरुषार्थत्वमेव । तथा च गोदोहनस्य गुणस्य पशुरूपफलार्थत्वमवश्यं वाच्यम् । परंतु गुणफलसंबन्धविधाने बहुदोषसद्भावान्न तथाविधः संबन्धस्तत्रोक्तः । किंतु केवलं गोदोहनेन पशुकामस्येत्येवं गोदोहनस्य पशोश्च समभिव्याहारात्तेन प्रमाणेन लिङ्गश्रुती कल्पयित्वा गोदोहनस्य पश्वर्थत्वमुक्तम् । इदं चतुर्थेऽध्याये प्रथमपादे द्वितीयाधिकरणे स्थितम् ।

गुणसमर्पकत्व इति । कर्मनामधेयत्वमस्वीकृत्य खनित्ररूपगुणप्रतिपादकत्वे इत्यर्थः । गुणविशिष्टकर्मविधानमेवेति । यावच्छक्यं गौरवपरिहारेणैव वाक्यार्थस्य कर्तव्यत्वात् । लघुभूतमिति । आश्रयत्वापेक्षयेति शेषः । मत्वर्थमात्रमिति । सोमेन यजेतेत्यत्रेवेति भावः । एवं मत्वर्थलक्षणाश्रयणे धातोरत्यन्तपारार्थ्यादीन्बहून्दोषान्परिहृत्य यद्यपि वाक्यार्थः कर्तुं शक्यते तथापि यागनामधेयत्वे ततोऽपि लाघवेन वाक्यार्थः कर्तुं शक्यत इत्याह—कर्मनामधेयत्वे

तूद्भिच्छब्दस्य न मत्वर्थलक्षणा । मुख्ययैव वृत्त्या यजिसामानाधिकरण्येन तस्यान्वयसंभवात् । उद्भिदा यागेन पशुं भावयेदिति ।

संभवति च मुख्येऽर्थे लक्षणा आश्रयितुं न युक्ता । संनिकृष्टविधानं तु समानमेव । न चैवं सोमेन यजेतेत्यत्रापि सोमपदस्य यागनामधेयत्वापातो गुणसमर्पकत्वे मत्वर्थलक्षणापत्तेरिति वाच्यम् । सोमपदस्य लतायां रूढत्वेन यागनामधेयत्वानुपपत्तेरगत्या लक्षणाश्रयणात् । उद्भिच्छब्दस्य तु नैवं वाच्योऽर्थः कश्चित्प्रसिद्धः । उद्भिद्यतेऽनेनेति योगस्य तु गुण इव यागेऽपि फलोद्भेदनकारिण्युपपत्तेः । तत्सिद्धमुद्भिच्छब्दस्य मत्वर्थलक्षणाभयाद्यागनामधेयत्वमिति ।

'चित्रया यजेत पशुकामः' (तै. सं. २।४।६) इत्यत्र चित्राशब्दस्य वाक्यभेदभयात्कर्मनामधेयत्वम् । तथा हि—न तावदत्र गुणविशिष्टयागविधानं

---

त्विति । समानमेवेति । कर्मनामधेयत्वाभावे मत्वर्थलक्षणायां याग एव विधेयः। कर्मनामधेयत्वेऽपि च याग एव विधेय इति विप्रकृष्टार्थविधानरूपो दोषो नास्तीति सममेव । केवलं लक्षणापरिहारायैव नामधेयत्वाङ्गीकार इति भावः । लतायां रूढत्वेनेति । तथा च तत्र कर्मनामधेयत्वाङ्गीकारे सोमपदस्य लताविशेष एका शक्तिरपरा च कर्मविशेष इति शक्तिद्वयकल्पनं स्यात् । तच्च लक्षणापेक्षयापि गुरुभूतं भवतीति भावः ।

अथ कर्मनामधेयत्वाङ्गीकारस्य वाक्यभेदभयरूपं द्वितीयं कारणमुदाहरति—चित्रयेति । यथा सोमशब्दस्य लताविशेषरूपो रूढ्यर्थस्तथा चित्राशब्दस्य न कश्चिद्विशेषोऽर्थः सिद्धः । किंतु भिन्नभिन्नानेकधर्मयुक्तं वस्तु चित्राशब्देनोच्यते । दधि मध्वित्यनेनोत्पत्तिवाक्येन विहितस्य यागस्य भिन्नभिन्नदध्याद्यनेकद्रव्ययुक्तत्वात्तस्य चित्रेति नामधेयं युज्यते । तथा च सोमशब्दस्य शक्त्यन्तरकल्पनारूपगौरवभिया न कर्मनामधेयत्वं स्वीकृतं तथात्र गौरवं नास्ति । तथा च प्रकृतो दध्यादिद्रव्यको याग एव चित्राशब्देनोच्यत इति फलसाकाङ्क्षस्य तस्योत्पत्तिवाक्यस्य पशुरूपं फलमनेन चित्रया यजेत पशुकाम इति वाक्येन बोध्यत इति नात्र वाक्यभेदः । यदि च चित्रेति यागनामधेयं न स्वीक्रियते तर्हि वाक्यभेदो दुरुद्धरः स्यात् । तथाहि । चित्रविचित्रं कंचित्पदार्थविशेषं चित्राशब्दार्थं गृहीत्वा प्रकृते यागे स पदार्थविशेषो गुणत्वेन विधीयते चेत्पशुकामपदमनन्वितं स्यात् । फलबोधने चित्रापदमनन्वितं स्यात् । उभयविधाने वाक्यभेदः स्पष्ट एव ।

संभवति । 'दधि मधु पयो घृतं धाना उदकं तण्डुलास्तत्संसृष्टं प्राजापत्यम्' इत्यनेन विहितत्वाद्यागस्य विशिष्टविधानानुपपत्तेः । प्राप्तस्य च यागस्य फलसंबन्धे गुणसंबन्धे च विधीयमाने वाक्यभेदः । अथ चित्राशब्दात् चित्रत्वस्त्रीत्वयोः प्रतिपत्तेः स्त्रीत्वस्य च स्वभावतः प्राणिधर्मत्वात्प्रकृते दध्यादिद्रव्यके

---

दधि मध्विति । धाना भ्रष्टा यवास्तण्डुला वा । एतद्दध्यादिकं संसृष्टं मिथो मिश्रितं सद्यदेकं किंचिद्द्रव्यं भवति तत्प्रजापतिदेवताकमित्यर्थः । अत्र वाक्ये द्रव्यदेवतयोर्द्वयोरपि निर्देशादियं यागोत्पत्तिविधिः । अतो यागस्य प्राप्तत्वाच्चित्रयेति वाक्येन पुनस्तस्य विधानं न संभवतीति न विशिष्टविधानमत्र वक्तुं शक्यते । सोमेन यजेतेत्यत्र यागस्य वचनान्तरेणाप्राप्तत्वाद्विशिष्टविधानं वक्तुं शक्यते । तच्च मत्वर्थलक्षणया साधितम् । अत्र तु यागस्य वचनान्तरेण प्राप्तत्वान्मत्वर्थलक्षणयापि न विशिष्टविधानं संभवतीति मत्वर्थलक्षणाभयं यागनामधेयकारणत्वेनात्र नोक्तम् । किंतु वाक्यभेदभयादत्र चित्रेत्यस्य यागनामधेयत्वं स्वीकार्यं भवति । ननु नात्र गुणो विधेयः । किंत्वेकः पशुरूपफलसंबन्ध एवात्र विधेयः । चित्रयेति तु दध्यादिसंसृष्टद्रव्यस्योत्पत्तिशिष्टस्यानुवादः । तस्य च दध्याद्यनेकपदार्थमिश्रितत्वाच्चित्रत्वं संभवतीति तस्यानुवादः कर्तुं शक्यते । तथा च नात्र वाक्यभेद इति चेद्धन्त वृश्चिकभिया पलायितः सर्पमुखे पतितोसि । अत्रानुवादे प्रयोजनाभावेन चित्रयेत्यस्य नैरर्थक्यप्रसङ्गात् । नैरर्थक्यदोषश्च वाक्यभेददोषापेक्षयापि गरीयान् । नैरर्थक्यदोषो हि वक्तुर्बुद्धिमान्द्यविशेषं स्फोरयति ।

ननु दधि मध्वित्यत्र प्रकृतोपि यागो नोत्तरत्र संबध्यते । किंतु चित्रयेत्यनेनापूर्व एव यागो विधीयते । तदा वाक्यभेदमन्तरेणैव सोमेन यजेतेत्यत्रेव मत्वर्थलक्षणया वाक्यार्थोपपत्तिः स्यात् । तथा च मत्वर्थलक्षणाभयान्नामधेयत्वमत्रेति वक्तव्यं न तु वाक्यभेदभयादिति चेत् प्रकृतहानाप्रकृतप्रक्रियारूपं दोषद्वयमधिकमापतति । तच्च दोषद्वयं वाक्यभेददोषादपि गरीयो भवति । ननु चित्राशब्दस्य नामधेयत्वाङ्गीकारे यद्यपि वाक्यभेदो न भवति तथापि चित्राशब्दे स्त्रीत्वं न कथंचिदप्युपपद्यते । तथा च तस्योपपत्तये प्रकृतहानमप्रकृतप्रक्रिया चेति दोषद्वयं नान्तरीयकतया सह्यमेव भवतीति चेत्तर्हि प्रकृतयागसंबन्धाभावे कीदृशी स्त्रीत्वस्योपपत्तिर्भवतीति वक्तव्यमित्याशयेनाह—अथ चित्राशब्दादिति । स्त्रीत्वोपपत्तावभिनिवेशश्चेत्त चित्रयेत्यत्र दधि मध्विति विहितयागसंबन्धेन कस्यचिद्विधिः । नाप्यपूर्वविधिरयम् । मत्वर्थलक्षणया विशिष्टविधानेपि स्त्रीत्वस्यानुपपत्तेः । अतः प्राणिद्रव्यका ये विहिता यागास्तदन्यतमसंबन्धेन चित्रयेति वाक्यस्य प्रवृत्तिः स्वीकार्या भवति । तदाह—

कर्मणि निवेशायोगान्नानेन वाक्येन प्रकृते कर्मणि गुणविधानम्। किंतु प्राणिद्रव्यके कर्मणि। तत्रास्य वाक्यस्यानारभ्याधीतत्वात्, अनारभ्याधीतानां च 'प्रकृतौ वाऽद्विरुक्तत्वात्' (जै.सू. ३।६।२) इति न्यायेन प्रकृतिगामित्वात् प्राणिद्रव्यकाणां च यागानां 'दैक्षस्य चेतरेषु' (जै. सू. ८।१।१३) इति न्यायेनाग्नीषोमीयप्रकृतिकत्वात्तदनुवादेनानेन वाक्येन गुणो विधीयते।

दैक्षस्य च ज्योतिष्टोमाङ्गत्वेन स्वतन्त्रफलाकाङ्क्षाया अभावात्पशुकामपदं न फलसमर्पकम्। किंतु अग्नीषोमीयपश्वर्जनाङ्गतया प्राप्तकामनानुवादः। तथा च न वाक्यभेद इति चेत् तथापि दैक्षानुवादेन चित्रत्वस्त्रीत्वविधाने

---

किंतु प्राणिद्रव्यके इति। प्राणिद्रव्यकेषु कर्मसु ये विकृतिभूता यागास्तेषु चित्रयेत्यस्य न संबन्धः। अनारभ्याधीतस्य प्रकृतावेव संबन्धात्। तथा च सूत्रं प्रकृतौ वाऽद्विरुक्तत्वात् (जै. सू. ३।६।२) इति। अद्विरुक्तत्वादिति पदच्छेदः। अनारभ्याधीतस्य सर्वार्थत्वे प्रकृतिविकृत्योः संबन्धे प्रकृतिसंबद्धस्य तस्य विकृतावतिदेशेन प्राप्तिरेका। स्वातन्त्र्येण तस्य विकृतौ संबन्धेन तत्प्राप्तिर्द्वितीयेति पुनरुक्तत्वं स्यात्। तथा च द्विरुक्तत्वाभावायानारभ्याधीतस्य प्रकृतावेव संबन्ध इति तदर्थः। वाशब्द एवार्थे। द्विरुक्तत्वादितिच्छेदे तु विकृताविति पदमध्याहृत्य विकृतौ द्विरुक्तत्वापत्त्या प्रकृतावेव संबन्ध इत्यर्थः। चित्रयेति वाक्यस्य दधिमध्वित्यनेनासंबन्धे किंचित्कर्मविशेषं प्रकृत्यास्योक्तत्वाभावेनानारभ्याधीतत्वात्प्रकृतावेव संबन्धः स्यात्। प्राणिद्रव्यकाश्च यागा अग्नीषोमीयप्रकृतिकाः। आलभतिचोदनाचोदितत्वसाम्यात्। तथा च सूत्रम्- दैक्षस्य चेतरेषु (जै. सू. ८।१।१३) इति। दैक्षोऽग्नीषोमीयः। दीक्षितेनानुष्ठेयेषु पशुयागेष्वग्नीषोमीयस्य प्रथमभावित्वात्। तथाचाग्नीषोमीयपशुधर्मा इतरेषु प्राणिद्रव्यकयागेष्वतिदेश्या इति सूत्रार्थः। न चाग्नीषोमीयस्येष्टिविकृतित्वात्कथं प्रकृतित्वमिति वाच्यम्। ऐष्टिकरूपेण विकृतित्वेपि पाशुकरूपेण तस्य प्रकृतित्वाङ्गीकारे बाधकाभावात्। नन्वेवं चित्रयेतिवाक्यस्याग्नीषोमीयं पशुमालभेतेत्यनेन संबन्धे तत्र चित्रत्वं गुणः पशुरूपं फलं चेति द्वयं तत्र निवेश्यं भवतीति वाक्यभेदोऽस्त्येवेति चेत्तत्राह-- दैक्षस्य चेति। किंत्वग्नीषोमीयेति। नात्र पशुकाम इत्यनेन हस्त्यश्वादिपशुप्राप्तिर्यागीयफलतया बोध्यते। किंतु यज्ञसामग्रीसाधनवेलायामालम्भनीयपश्वानयनार्थं यज्ञात्पूर्वमेव तादृशपशुकामोऽभूत्। सोऽत्र पशुकाम इत्यनेन केवलमनूद्यते। तथा च केवलं गुणविधिरेवायमिति न वाक्यभेद इत्याशयः। चित्रत्वस्त्रीत्वेति। केवलगुणविध्यङ्गीकारेपि चित्रत्वस्त्रीत्वरूपगुणद्वयविधानेन वाक्यभेदो दुर्वार इति भावः।

वाक्यभेदात् । विशिष्टकारकविधानेऽपि गौरवलक्षणो वाक्यभेद एव । कारकस्यापि प्राप्तत्वेन विशिष्टविधानानुपपत्तेश्च ।

पशुकामपदस्यापि स्वरसतः फलपरस्य कामनानुवादत्वे आनर्थक्यापत्तेश्च । नच नियमतः पश्वर्जनकामना भवति । कामनातः प्रागेव केनचिद्दत्ते पशौ तदभावात् । तथा च पशुकामपदस्य नित्यवच्छ्रवणबाधः ।

दैक्षस्योत्पत्तिशिष्टपुंस्त्वावरुद्धत्वेन तत्र स्त्रीत्वविधानानुपपत्तेश्च ।

---

विशिष्टेति । चित्रत्वस्त्रीत्वरूपधर्मद्वयविशिष्टः पशुरत्रैक एव गुणत्वेन विधेय इत्याशयः । गौरवलक्षण इति । यद्यप्येवं विशिष्टविधाने शाब्दमर्यादयोद्देश्यविधेयभाव एक एव भवति तथापि विधेरर्थतः पर्यवसानं चित्रत्वे स्त्रीत्वे च भवत्येवेत्येवं प्रतिपत्तिगौरवं भवत्येव । वाक्यभेदश्च द्विविधः शाब्द आर्थश्च । उद्देश्यविधेयभावद्वये द्विविधोऽप्ययं वाक्यभेदो भवति । उद्देश्यविधेयभावस्यैकत्वे तु विशिष्टविधौ केवलमार्थो वाक्यभेदः । आर्थिकवाक्यभेदसत्त्वादयं गौरवलक्षणो वाक्यभेद इत्युच्यते । किंचात्र शाब्दोऽपि वाक्यभेदोऽस्त्येवेत्याह-कारकस्यापीति । पशुना यजेतेत्यत्र पशोः करणत्वेन विधानात् । तथा चात्र वाक्यभेदसत्त्वान्न चित्रत्वं स्त्रीत्वं चेति धर्मद्वयं गुणत्वेन विधातुं शक्यते । तदुक्तं प्राप्ते कर्मणि नानेको विधातुं शक्यते गुण इति । कामपदस्यापीति । हस्त्यश्वादिपशुरूपं फलं प्राप्तुं य इच्छति स पशुकामपदस्य स्वारसिकोऽर्थः । तेनैवार्थेन च प्रकृतवाक्येऽधिकारिविशेषबोधनेन पशुकामपदं सार्थकं भवति । आलम्भनीयपशुसंपादकरूपोऽर्थस्तु न पशुकामपदात्स्वरसतः प्रतीयते । नापि च तेनार्थेन प्रकृतवाक्ये पशुकामपदस्य कश्चनोपयोग इति तस्य नैरर्थक्यं दोषः । तथा च वाक्यभेददोषपरिहाराय प्रवृत्तो मार्गभ्रंशात्तदपेक्षयापि गरीयसानर्थक्यदोषेण ग्रस्तो भवतीति भावः । अनुवादमभ्युपेत्यैतदुक्तम् । वस्तुतोऽनुवाद एव न संभवतीत्याह— न च नियमत इति । नित्यवदिति । अग्नीषोमीयपशुयागं कर्तुं प्रवृत्तस्य नियतावस्थाविशेषद्योतकं पशुकामपदमत्र श्रूयत इति वक्तव्यम् । तादृशावस्थायाश्च तादृशयज्ञकर्तरि कादाचित्कत्वे पशुकामपदं बाधितं स्यात् । यतोऽनुवादरूपेणापि पशुकामपदमन्वेतुं नार्हति । अनित्यस्य नित्यवदनुवादासंभवात् ।

पुंस्त्वावरुद्धत्वेनेति । पशुना यजेतेत्यत्र 'आङो नाऽस्त्रियाम्' (पा सू. ७।३।१२०) इति सूत्रेण नादेशो विहितः । स च तत्रास्त्रियामित्युक्तत्वात्स्त्रियां प्रतिषिद्धः । तथा प्रकृतेऽजोऽग्नीषोमीय इत्यत्राज इति पुंस्त्वेन निर्देशो दृश्यते । तथा चोत्पत्तिवाक्ये पुंस्त्वविशिष्ट एव पशुर्निर्दिष्ट इति तत्र यागे

आमिक्षायागानुवादेन वाजिनविधानवत् ( जै. सू. २।२।२३ )।

'कृष्णसारङ्गोऽग्नीषोमीयः' इति विशेषविहितेन स्वसंनिधिपठितेन च कृष्णसारङ्गवर्णेनावरुद्धे चित्रत्वस्यानारभ्याधीतेन सामान्यशास्त्रेण विधानानुपपत्तेश्च। पात्रद्रव्यावरुद्ध इव साम्रद्रव्यविधानम् ( जै. ३।६।९ )।

अथ मा भूदग्नीषोमीयपश्वनुवादेन चित्रत्वस्त्रीत्वविधानम्। 'सारस्वती मेषी' ( मै. सं. ४।७।८ ) इति वाक्यविहितयागाङ्गमेष्यनुवादेन तु गुण-

---

तद्विरुद्धं स्त्रीत्वं विधातुं न शक्यते। सामान्ये हि विशेषस्य प्रवेशः सुवचो न तु विशेषस्य विशेषान्तरे।

आमिक्षेति। इदं जैमिनीये द्वितीयाध्याये द्वितीयपादे नवमाधिकरणे चिन्तितम्। तप्ते पयसि दध्यानयति सा वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनम् ( तै. ब्रा. १।६।२ ) इति श्रूयते। घनीभूतः पयःपिण्ड आमिक्षा। जलं वाजिनम्। तत्र वैश्वदेव्यामिक्षेति वाक्येनामिक्षारूपद्रव्यविशेषं पुरस्कृत्य वैश्वदेवयाग उक्तः। तत्र च वाजिनस्य द्रव्यान्तरस्य प्रवेशासंभवाद्वाजिभ्यो वाजिनमिति भिन्नं वाक्यं सत्कर्मान्तरविधायकमिति तत्र सिद्धान्तितम्। स्त्रीत्वमिव चित्रत्वमप्यत्र विधातुं न शक्यत इत्याह- कृष्णसारङ्ग इति। यद्यपि विरुद्धः कश्चन रूपविशेषो नोत्पत्तिशिष्टस्तथापि तत्संनिहितेन कृष्णसारङ्ग इति वाक्येन विहितः कृष्णसारङ्गत्वरूपो विशेषधर्मस्तत्र संबद्ध इति अनारभ्याधीतेनात एव दूरस्थेनानेन चित्रयेति वाक्येन तत्र चित्रत्वरूपो धर्मः कृष्णसारङ्गत्वविरुद्धो विधातुं न शक्यत इति भावः।

पात्रद्रव्येति। एतच्च पूर्वं ( पृ. ११९ प. ४ ) निरूपितम्। एवंच चित्रयेति वाक्येन चित्रत्वस्त्रीत्वयोरेकमप्यग्नीषोमीयपशुसंबन्धेन विधातुं न शक्यत इत्यतस्तदधिमाध्वित्यादिवाक्यविहितप्रकृतयागसंबद्धमित्येव स्वीकार्यं भवति।

सारस्वतीति। अत्र सरस्वतीदेवतोद्देशेन मेषीरूपः पशुर्विधीयते। अयं च विकृतिभूतो यागविशेषोऽग्नीषोमीययागप्रकृतिकः। सारस्वती मेषीति विधिश्च न स्त्रीत्वविरुद्धेन पुंस्त्वेनावरुद्धः। नापि चित्रत्वविरुद्धरूपविशेषेणाभिसंबद्धः। तथा च तत्र चित्रयेति वाक्यस्य संबन्धः स्यात्। नापि च वाक्यभेदः। चित्रत्वस्यैकस्यैवात्र विधेयत्वात्। स्त्रीत्वस्य मेषीति स्त्रीलिङ्गनिर्देशेनैव प्राप्तत्वात्। तथा च चित्रयेति स्त्रीलिङ्गनिर्देशो मेषीत्यनेन प्राप्तस्य स्त्रीत्वस्य केवलमनुवादः। अनुवादोऽपि चायं न निरर्थकः। सारस्वती मेषीत्यनेनैवास्य चित्रयेत्यस्य संबन्धो नान्येनेत्येतद्बोधनार्थत्वात्। चित्रयेत्यत्रत्यस्त्रीप्रत्ययेन मेषीरूपं

विधानं स्यात्। चित्रयेति स्त्रीकारकानुवादेन चित्रत्वमात्रविधानात्। नच प्राकृतेन कृष्णसारङ्गवर्णेन नैराकाङ्क्ष्यान्न चित्रत्वविधानं युक्तमिति वाच्यम्। उपदिष्टेन चित्रत्वेनातिदिष्टस्य वर्णान्तरस्य बाधोपपत्तेरिति चेन्मैवम्।

नहि चित्रयेत्येकेन पदेन स्त्रीकारकस्योद्देशः चित्रत्वस्य च विधानं संभवति। एकप्रसरताभङ्गलक्षणवाक्यभेदापत्तेः। उद्देश्यविधेयभावस्यानेकपद-

---

स्त्रीकारकमुद्दिश्य चित्रत्वं विधीयते। नचानारभ्याधीतस्य प्रकृतावेव संबन्धो भवति न विकृताविति कथं सारस्वती मेषीति विहिते विकृतियागे संबन्ध इति वाच्यम्। अनारभ्याधीतस्य विकृतावप्रवृत्तौ यद्बीजं तस्यात्राभावात्। अनारभ्याधीतस्य प्रकृतौ प्रवृत्तौ सत्यां तादृशप्रकृतेर्विकृतिभूतो यो यागस्तत्र प्रकृत्यन्तर्गतानां सर्वेषां धर्माणां तत्र संबद्धानामनारभ्याधीतानां च चोदकेन प्राप्तिरिति पुनः स्वातन्त्र्येणानारभ्याधीतस्य तत्र प्रवृत्तौ क्रियमाणायां द्विरुक्तत्वापत्तिस्तत्र तदप्रवृत्तौ बीजम्। यदुक्तं प्रकृतौ वाऽद्विरुक्तत्वात् ( जै. सू. ३।६।२ ) इति। चित्रयेत्यस्य त्वनारभ्याधीतस्य प्रकृतौ पुंस्त्वाद्यवरोधान्न प्रवृत्तिरिति सारस्वती मेषीति विहिते विकृतियागेतिदेशेन चित्रत्वस्याप्राप्त्या चित्रयेत्यस्य स्वातन्त्र्येण प्रवृत्त्यैव चित्रत्वप्राप्तिरिति द्विरुक्तत्वाभावः। तथा च चित्रत्वस्यानारभ्याधीतस्यापि विकृतौ प्रवृत्तौ बाधकाभाव इति बोध्यम्।

न च प्राकृतेनेति। कृष्णसारङ्गोऽग्नीषोमीय इत्येवं प्रकृतिस्थस्य कृष्णसारङ्गवर्णस्य तद्विकृतिभूते सारस्वतयागेतिदेशेन प्राप्तौ मेष्याः कीदृशो वर्ण इत्याकाङ्क्षाया अभावान्न चित्रत्वस्य तत्र संबन्धः स्यादित्याशयः।

उपदिष्टेनेति। मेषीमुद्दिश्य चित्रत्वविधानमौपदेशिकम्। कृष्णसारङ्गवर्णस्य च मेष्यां प्राप्तिरातिदेशिकी। तथा चातिदिष्टादुपदिष्टं बलीय इति न्यायेनोपदिष्टस्य चित्रत्वस्यैव मेष्यां संबन्धः स्यान्नातिदिष्टस्य कृष्णसारङ्गत्वस्येति भावः। समाधत्ते-मैवमिति।

एकप्रसरतेति। अयं भावः। एकस्यां वृत्तौ प्रसरः प्रवेशो ययोरर्थयोस्तावेकप्रसरौ। तयोर्भाव एकप्रसरता-एकवृत्तिप्रविष्टता। तस्या यो भङ्गः स वाक्यभेदविशेष एव। वृत्तिश्च पदपदार्थयोः संबन्धः शक्तिलक्षणान्यतररूपः। प्रकृते च चित्रत्वस्त्रीत्वरूपधर्मद्वयविशिष्टेर्थे चित्राशब्दस्य शक्तिः। तादृशशक्तिरूपायामेकस्यां वृत्तौ चित्रत्वस्त्रीत्वयोः प्रवेशः। तस्यात्र भङ्गः स्याद्यदि स्त्रीकारकानुवादेन चित्रत्वमत्र विहितं स्यात्। उद्देश्यविधेययोर्हि पृथक् पृथक् शक्त्योपस्थितिरावश्यकी। अत्र चैकस्यां शक्तौ स्त्रीत्वचित्रत्वयोः प्रवेशान्न तयोरुद्देश्यविधेयभावः संभवति। तथा च यथाचोद्देश्यविधेयभावो

साध्यत्वात् । अत एव वषट्कर्तुः प्रथमभक्ष इत्यत्र विशिष्टभक्षविधिर्न तु भक्षानुवादेन प्राथम्यविधिरित्युक्तं तृतीये ( ३।५ अधि. १० ) ।

मेष्यनुवादेन चित्रत्वविधाने फलपदानर्थक्यापत्तेश्च । उभयविधाने वाक्यभेदात् । प्रकृतस्य च यागस्य फलाकाङ्क्षाया अनिवृत्तेः । विश्वजिन्न्यायेन फलकल्पने गौरवम् । दधिमध्वित्याद्युत्पत्तिवाक्येनैतस्याधिकारवाक्यस्य प्रतिपन्नैकवाक्यताबाधेन वाक्यभेदप्रसङ्गाच्च । चित्राशब्दस्य तु कर्मनामधेयत्वे प्रकृतस्य कर्मणः फलाकाङ्क्षस्य फलसंबन्धमात्रकरणान्न वाक्यभेदः । प्रकृताया इष्टेरनेकद्रव्यकत्वेन चित्राशब्दस्य तत्रोपपत्तेः । तत्सिद्धं वाक्यभेदभयाच्चित्राशब्दः कर्मनामधेयमिति ।

---

भवेत्तथा शब्दाः पृथक् पृथक् शक्त्यार्थबोधकाः परिकल्पनीया भवन्तीति वाक्यं भिद्यते । एवं चायं वाक्यभेदविशेष एवेति बोध्यम् । वषट्कर्तुरिति । प्रागुपपादितमेतत् ( पृ. १७५-प. १ ) । तृतीय इति । तृतीयाध्यायस्य पञ्चमे पादे दशमाधिकरण इदं चिन्तितम् ।

दूषणान्तराण्याह—मेष्यनुवादेनेत्यादिना । प्रकृतस्य च यागस्येति । दधिमध्वितिवाक्यविहिते यागे चित्रेत्यस्यासंबन्धे तस्य फले किंचित्कल्पनीयं स्यात् ।

विश्वजिन्न्यायेनेति । स स्वर्गः स्यात्सर्वान् प्रत्यविशिष्टत्वात् ( जै. सू. ४।३।१३ ) इति न्यायेनेत्यर्थः । यत्र किंचित्फलं न निर्दिश्यते तत्र स्वर्गः कल्पनीयः । स्वर्गस्य सर्वैरभिलषितत्वात् । विश्वजिता यजेतेत्यत्रैवमेव स्वर्गरूपं फलं कल्पितम् । दधिमध्वित्यादीति । संनिहितयोर्वाक्ययोः परस्परसंबन्धेन वाक्यैकवाक्यताप्रतिपत्तिः स्वाभाविकी । तत्र च तयोरसंबन्धे वाक्यद्वयं मिथोऽसंबद्धमेवावतिष्ठते न तु महावाक्यरूपेणैकवाक्यता तत्र भवति । अयं च वाक्यभेदविशेष एव । अत्र वाक्यस्य महावाक्यस्य भेदो महावाक्यघटकयोरर्थयोर्भेदः पार्थक्यमित्यर्थः । प्रकृताया इष्टेरिति । दधिमध्वित्यादिवाक्यविहिताया इत्यर्थः । एतेन चित्राशब्दस्य कर्मनामधेयत्वाङ्गीकारे शक्त्यन्तरकल्पनारूपं गौरवं स्यादिति परास्तम् । चित्राशब्दप्रवृत्तिनिमित्तस्य चित्रत्वस्य मिथोविभिन्नदधिमध्वाद्यनेकद्रव्यसाधनके कर्मविशेषे सत्त्वात् । एवं च चित्राशब्दस्य वाक्यभेदभयात्कर्मनामधेयत्वं सिद्धम् । यद्यपि कर्मनामधेयत्वे चित्राशब्दे स्त्रीत्वं नोपपद्यते तथापि न तत्राभिनिवेष्टव्यम् । जलनामकदारशब्दस्येव स्वभावादेव स्त्रीत्वोपपत्तेरिति बोध्यम् ।

अग्निहोत्रं जुहोति ( तै. सं. १।५।९।१ ) इत्यत्राग्निहोत्रशब्दस्य कर्मनामधेयत्वं तत्प्रख्यशास्त्रात् । तस्य गुणस्य प्रख्यापकस्य प्रापकस्य शास्त्रस्य विद्यमानत्वेनाग्निहोत्रशब्दः कर्मनामधेयमिति यावत् । तथाहि-विधिना तावत्तदेव विधेयं यत्प्रकारान्तरेणाप्राप्तम् । अप्राप्ते शास्त्रमर्थवदिति न्यायात् । अग्निहोत्रशब्दस्य च गुणविधित्वे यो गुणस्तेन विधेयः स शास्त्रान्तरेण प्राप्तः । कथमिति चेत् शृणु । यदि तावदग्नौ होत्रमस्मिन्निति सप्तमीसमासमाश्रित्य होमाधारत्वेनाग्निर्विधेय इत्युच्येत तदा यदाहवनीये जुहोतीत्यनेनैव प्राप्तत्वाद्विध्यानर्थक्यम् ।

---

अथ कर्मनामधेयत्वहेतुभूतं तत्प्रख्यशास्त्रमुदाहरति-अग्निहोत्रमिति । कर्मनामधेयत्वेनाभिमतो यः शब्दस्तस्य कर्मनामधेयत्वानङ्गीकारे यस्तदर्थो गुणत्वेन विधातुं शक्यः स्यात्स शास्त्रान्तरेण प्राप्त एव चेत्तस्य पुनर्विधानमनर्थकं स्यात् । तथा च तद्वैयर्थ्यान्यथानुपपत्त्या तस्य कर्मनामधेयत्वं स्वीकार्यमिति भावः । तदुक्तं सूत्रकारैः-तत्प्रख्यं चान्यशास्त्रम् ( जै. सू. १।४।४ ) इति । तस्य गुणस्य प्रख्यं प्रापकमन्यशास्त्रं यत्र भवति तत्र तादृशगुणबोधकत्वेन ग्रहीतुं योग्यं पदं नैरर्थक्यदोषभिया कर्मनामधेयं स्वीकार्यमित्यर्थः । यदि तावदिति । अग्निहोत्रशब्दस्य कर्मनामधेयत्वानङ्गीकारेऽग्निहोत्रशब्देन समासभेदेन गुणद्वयं विधातुं योग्यं भवति । अग्नौ होत्रं यस्मिन्कर्मणि तदग्निहोत्रमिति व्यधिकरणबहुव्रीहिमाश्रित्याग्निरूपो गुणो होमाधारत्वेन विधातुं शक्यो भवति । अग्नये होत्रं यस्मिन्कर्मणि तदग्निहोत्रमिति व्यधिकरणबहुव्रीहिमाश्रित्याग्निरूपो गुणो होमे देवतात्वेन विधातुं शक्यो भवति । होत्रं हुतम् । आधारत्वेन देवतात्वेन वाग्निरूपगुणविधायकत्वेऽग्निहोत्रं जुहोतीति सोमेन यजेतेत्यत्रेव विशिष्टविधिः स्यात् । इयांस्तु विशेषः । सोमेन यजेतेत्यत्र मत्वर्थलक्षणा । अत्र तु लक्षणा नास्ति । बहुव्रीहिणाग्निहोत्रमित्येतत्सामानाधिकरण्येन धात्वर्थविशेषणमिति वक्तुं शक्यत्वात् । अत्र च पक्षद्वयेपि व्यधिकरणबहुव्रीहिस्वीकारः क्लेशावहः । तत्राप्यग्नये होत्रं यस्मिन्नित्ययं चतुर्थ्यन्तपूर्वपदकोत्यन्तं क्लेशावहः । सप्तम्यन्तपूर्वपदकस्य बहुव्रीहेः सप्तमीविशेषणे बहुव्रीहौ ( पा. सू. २।२।३५ ) इति ज्ञापकेन वैयाकरणैः क्वचित्साधुत्वाङ्गीकारात् । यद्यप्येव चतुर्थीसमासेत्यन्तं क्लेशो भवति तथाप्यनेनैवाग्नेर्देवतात्वप्रापणाद्यदग्नये च प्रजापतये च सायं जुहोतीत्यत्राग्नेर्देवतात्वस्य न विधिः किन्त्वनुवादः । तथा च तत्राग्नेर्देवतात्वमनूद्य तत्संनियोगेन प्रजापतेर्देवतात्वविधानमेकमेवेति न तत्र वाक्यभेदः । अन्यथा तत्र देवताद्वयविधाने वाक्यभेददोषो दुर्वारः

अथाग्नये होत्रमस्मिन्निति चतुर्थीसमासमाश्रित्याग्निरूपदेवतानेन समर्प्यत इति चेत्–न । शाखान्तरेण प्राप्तत्वात् । किं तच्छाखान्तरमिति चेदत्र केचित्–'यदग्नये च प्रजापतये च सायं जुहोति' (मै. सं १।८।७)इति शाखान्तरेण होमानुवादेनाग्निप्रजापत्योर्विधानान्नाग्निहोत्रपदं देवतासमर्पकम् ।

न चोभयविधाने वाक्यभेदः । परस्परनिरपेक्षविधाने हि वाक्यभेदः स्यात् । अग्नये जुहोति प्रजापतये जुहोतीति प्रत्येकं विधिव्यापारात् । चशब्दश्रवणात्तु परस्परसापेक्षस्यैव पदद्वयस्याख्यातान्वयान्न वाक्यभेदः ।

अत एव ( जै. १।५ अधि. ३ ) ऋत्विग्भ्यो दक्षिणां ददातीति

---

स्यात् । यद्यप्यग्निप्रजापत्योः संभूय देवतात्वविधाने वाक्यभेददोषो नास्ति तथापि न तथेष्यते । अग्नये च प्रजापतये चेति वाक्यस्वरसादपि न तथा प्रतिपत्तिर्भवतीत्यनुपदमेव वक्ष्यते । चित्रया यजेतेत्यत्र वाक्यभेदभयात्कर्मनामधेयत्वं स्वीकृतम् । अत्र तु वाक्यभेदभयात्कर्मनामधेयत्वं त्याज्यं भवति ।

अत्र केचिदिति । न्यायसुधाकारा इत्यर्थः । एतच्च न्यायसुधाकाराणां मतं पार्थसारथिमिश्रा न सहन्ते । तेषां मतमग्रे ( पृ. २२४।९ ) वक्ष्यते । अग्निहोत्रशब्दस्य कर्मनामधेयत्वं द्वयोरपि संमतमेव । विशेषस्त्वग्नेर्देवतात्वप्रापकान्यशाखविषय एव । अग्नये च प्रजापतये च सायं जुहोतीति विधायकब्राह्मणवाक्यादग्नेर्देवतात्वावगतिरिति न्यायसुधाकाराणां मतम् । अग्निर्ज्योतिरिति मन्त्रलिङ्गादेवाग्नेर्देवतात्वप्राप्तिर्यदग्नये च प्रजापतये चेति तु केवलं प्रजापतेरेव देवतात्वविधायकमिति पार्थसारथिमिश्राणां मतम् ।

अग्निप्रजापत्योर्विधानादिति । अत्र हि चतुर्थीविभक्त्याग्नेः प्रजापतेश्च देवतात्वमवगम्यते । यदि चात्र वाक्ये प्रजापतेरेकस्यैव देवतात्वविधानं स्यात् तर्ह्यत्राग्नेर्देवतात्वमेव न स्यात् । मन्त्रवर्णात्तु नाग्नेर्देवतात्वसिद्धिः । चतुर्थ्यन्तपदेन विहितया प्रजापतिदेवतया मान्त्रवर्णिकाग्निदेवताया बाधप्रसङ्गात् । मन्त्रलिङ्गापेक्षया चतुर्थ्याः प्रबलत्वादित्याशयः । अग्नये च प्रजापतये चेत्यत्र द्वयोर्देवतात्वविधानमङ्गीकृत्यैव वाक्यभेदं परिहरति–परस्परेति । अग्नेर्देवतात्वं तदनपेक्ष्यैव प्रजापतेर्देवतात्वमनेन विधीयते । तथा प्रजापतेर्देवतात्वमनपेक्ष्यैव चाग्नेर्देवतात्वमनेन विधीयते । तथा च वाक्यभेदः स्यात् । कदाचिदग्नेर्देवतात्वं कदाचिच्च प्रजापतेरित्येवं विकल्पश्च स्यात् । किंतु चशब्दबलात्तथा वक्तुं न शक्यते । किंत्वग्नेर्यद्देवतात्वं तत्संनियोगेनैव प्रजापतेर्देवतात्वमनेन विधीयते । तथा च न विकल्पप्रसक्तिः । नापि च वाक्यभेदः । अत्र च सापेक्षविधाने वाक्यभेदो न भवतीत्यभिप्रायः । तदेव दृष्टान्तेन साधयति–अत एवेति । सापेक्षानेकविधाने वाक्यभेददोषाभावादेवेत्यर्थः ।

वाक्यविहितदक्षिणानुवादेन 'गौश्चाश्वश्चाश्वतरश्च गर्दभश्चाजाश्चावयश्च व्रीहयश्च यवाश्च तिलाश्च माषाश्च तस्य द्वादशशतं दक्षिणा' ( ता. ब्रा. १६।१।१० ) इति वाक्येन गवादीनां विधानं दशमोक्तं ( जै. १०।३।३९ ) संगच्छते। परस्परसापेक्षाणां गवादीनां विधानेन वाक्यभेदाभावात्। अन्यथा दक्षिणानुवादेनानेकेषां गवादीनां विधानं नैव संगच्छेतेति।

अग्निप्रजापत्योश्च देवतयोः सतोः समुच्चयो न तु समुच्चितयोर्देवतात्वम्। पृथक्कारकविभक्तिश्रवणात्। चकारार्थस्य विभक्त्यर्थेनान्वयात्तस्याप्राधान्यात्। अतश्च नाग्नीषोमादिवदग्निप्रजापत्योर्देवतात्वमिति।

अन्ये त्वाचार्या आहुः। अग्नये च प्रजापतये च सायं जुहोतीति

---

<u>गौश्चाश्वश्चेति</u>। इदं ज्योतिष्टोमे श्रूयते। द्वादशशतमित्यस्य द्वादशाधिकं शतमित्यर्थः। दशमाध्याये तृतीयपादे द्रव्यविधिसंनिधौ ( १०।३।३९ ) इत्यादिसूत्रैर्जैमिनिनायं विचारः कृतः। तत्र द्वादशाधिकशतसंख्याया गवादिषु सर्वेषु प्रत्येकं संबन्धश्चेद्वाक्यभेदः। परस्परसापेक्षतया मिलितानां संख्या विधीयते चेत्तदपि न। मिथो विजातीयानां पदार्थानां संभूय संख्याप्रतिपादनस्य प्रायोऽदर्शनात्। किंतु तस्य द्वादशशतमित्यत्र तस्येत्येकवचनेन गवादिषु कस्यचिदेकस्यैव पदार्थस्येयं संख्या प्रतीयते। सा च प्रथमोपस्थितत्वाद्गोरेवेति निर्णयः।

नन्वेवमग्निप्रजापत्योर्द्वयोरपि मिथः सापेक्षं देवतात्वं यदग्नये च प्रजापतये चेति वाक्येनावगम्यत इति चेद्द्वयोः संभूय देवतात्वं स्यान्नतु देवतात्वस्य प्रत्येकं पर्याप्तिरत आह--<u>अग्निप्रजापत्योश्चेति</u>। अयं भावः। चतुर्थ्या हि देवतात्वमवगम्यते। जुहोतीत्यनेन च तादृशदेवताया होमसंबन्ध उच्यते। तत्राग्नेर्देवतात्वावगमे न प्रजापतिसापेक्षत्वम्। नापि च प्रजापतेर्देवतात्वावगमेऽग्निसापेक्षत्वम्। येन च तयोर्देवतात्वं द्वित्वसंख्यावद्व्यासज्यवृत्ति स्यात्। किंत्वग्निदेवताया यो होमसंबन्धः स प्रजापतिदेवतासापेक्षः। तथा प्रजापतिदेवताया यो होमसंबन्धः सोऽग्निदेवतासापेक्षः। तथा चाग्नेः प्रजापतेश्च देवतात्वप्रतिपत्तौ निरपेक्षतैवेति देवतात्वस्य प्रत्येकपर्याप्तिः सिद्धा भवति।

<u>चकारार्थस्येति</u>। चकारार्थस्य समुच्चयस्य न प्रातिपदिकार्थमात्रेणाग्निना प्रजापतिना च संबन्धः। प्रातिपदिकार्थस्य विभक्त्यर्थं प्रत्यप्राधान्यात्। तथा चाग्नये प्रजापतय इति विभक्त्यन्तार्थेनैव चकारार्थस्य समुच्चयस्य संबन्ध इति देवतात्वविशिष्टयोरेव तयोः समुच्चयः सिद्धः।

एवं न्यायसुधाकाराणां मतं प्रदर्श्याधुना पार्थसारथिमिश्राणां मतं प्रदर्शयति—<u>अन्ये त्विति</u>।

वाक्यं नाग्नेः प्रापकम्। होमानुवादेन प्रजापतिविधानात्। न च विनिगमनाविरहादुभयविधानं युक्तमिति वाच्यम्। विधिना हि तदेव विधीयते यत्प्रकारान्तरेणाप्राप्तम्। तत्र यथानेन वाक्येन सायंकालो न विधीयते सायं जुहोति (मै. सं. १।८।६) इति वचनान्तरेण प्राप्तत्वात्, तथाग्निरपि न विधीयते अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति मन्त्रवर्णादेव प्राप्तत्वात्। मन्त्रवर्णस्यापि देवतासमर्पकत्वमस्त्येव। अत एवोपांशुयाजे विष्ण्वादीनां मान्त्रवर्णिकं देवतात्वमित्युक्तम्।

नन्वेवं प्रजापतिदेवतया अग्नेर्बाधः स्यात्। चतुर्थ्या हि प्रजापतेर्देवतात्वमवगम्यते। अग्नेस्तु मान्त्रवर्णिकम्। तत्र 'साऽस्य देवता' (पा. सू. ४।२।२४) इति देवतात्वे तद्धितस्मरणवद्यपि देवतात्वे चतुर्थीस्मरणं नास्ति। संप्रदाने चतुर्थी (पाणि. सू. २।३।१३) इति संप्रदाने तस्याः स्मरणात्।

---

नाग्नेः प्रापकमिति। अग्नेर्देवतात्वस्य तत्र विधानाभावात्। प्रजापतिविधानादिति। प्रजापतेर्देवतात्वं केनाचित्प्रकारान्तरेण न प्राप्यत इति तदेव तत्र विधीयते। तच्चाग्नेः प्रकारान्तरेण प्राप्तं देवतात्वमनूद्य तत्संनियोगेन विधीयत इति भावः। तदेवाक्षिप्य समाधत्ते--न च विनिगमनेति। अनेकेषु कल्पेष्वेकत्र निश्चायकं प्रमाणं विनिगमनाशब्देनोच्यते। विरहोऽभावः। उपांशुयाज इति। विष्णुर्वा स्यात् (जै. सू. १०।८।५२) इत्यादिसूत्रे जैमिनिनैतदुक्तम्। उपांशुयाजो हि दर्शपूर्णमासप्रकरणे पठितः। तत्र दर्शयागसंनिधौ हौत्रस्य 'इदं विष्णुर्विचक्रमे' 'प्रतद्विष्णुः' इति याज्यापुरोनुवाक्याद्वयमाम्नातम्। तादृशमन्त्रलिङ्गात्तत्रोपांशुयाजे विष्णोर्देवतात्वं निर्णीतम्। अग्नेरपि तत्र देवतात्वमस्तीत्यन्यत्।

नन्वेवमिति। यद्यग्नये च प्रजापतये चेति वाक्येन प्रजापतेरेव देवतात्वं विधीयते नाग्नेः, अग्नेस्तु देवतात्वं मान्त्रवर्णिकमेव तर्ह्यग्नेर्देवतात्वं चतुर्थीबोधितं न भवति। तथा च चतुर्थीबोधितस्य देवतात्वस्य मान्त्रवर्णिकापेक्षया प्राबल्यात्प्रजापतेश्चतुर्थ्या बोधितेन देवतात्वेनाग्नेर्मान्त्रवर्णिकं देवतात्वं बाध्येतेत्यर्थः।

चतुर्थीस्मरणं नास्तीति। स्मरणं स्मृतिः। सा चात्र पाणिनिसूत्ररूपा। पाणिनिना तद्धितप्रत्ययो यथा साऽस्य देवता (पा. सू. ४।२।२४) इत्येवं देवताशब्दं निर्दिश्य देवतावाचकत्वेन विहितः तथा देवतावाचकत्वेन चतुर्थी न विहिता। तथा च मान्त्रवर्णिकदेवतात्वस्य तद्धितप्रत्ययबोधितेन

तथापि त्यज्यमानद्रव्योद्देश्यत्वं तावद्देवतात्वम् । तच्च संप्रदानस्वरूपान्तर्गतम् । त्यज्यमानद्रव्योद्देश्यत्वे सति प्रतिग्रहीतृत्वस्य संप्रदानत्वात् । अतश्चतुर्थीतः संप्रदानैकदेशतया देवतात्वप्रतीतिरस्त्येव । मन्त्रवर्णात्तु न देवतात्वं प्रतीयते, किं त्वधिष्ठानमात्रम् । अतश्च मन्त्रवर्णश्चतुर्थीतो दुर्बलः । यथाहुः—

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः ।
देवताया विधिस्तत्र दुर्बलं तु परं परम् ॥ (त.वा.२।२।९) इति ।

अतश्च प्रबलप्रमाणबोधितप्रजापतिदेवतया दुर्बलप्रमाणबोधिताग्नेर्बाधः स्यादिति चेत् सत्यम् ।

स्याद्बाधो यदि प्रजापतये जुहोतीति केवलं प्रजापतिविधानं स्यात् । विधीयमानस्तु प्रजापतिर्मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुचितो होमोद्देशेन विधी-

---

देवतात्वेन बाधोऽस्तु नाम । न तु चतुर्थीप्रत्ययबोधितेन । चतुर्थी संप्रदाने (पा सू. २।३।१३) इति पाणिनेः सूत्रम् । तत्र च संप्रदाने इत्युक्तम् न तु देवतायामितीत्याशयः ।

यद्यप्येवं चतुर्थीप्रत्ययबोधितस्य देवतात्वस्य तद्धितप्रत्ययबोधित देवतात्वापेक्षया दौर्बल्यं तथापि मान्त्रवर्णिकदेवतात्वापेक्षया प्राबल्यमस्त्ये-वेत्युपपादयति–तथापि त्यज्यमानेति । देवतात्वप्रतीतिरस्त्येवेति । देवता स्वरूपापेक्षया संप्रदानस्वरूपे प्रतिग्रहीतृत्वांशोऽधिकः । अतो देवतातद्धितस्य संप्रदानचतुर्थ्याश्च पर्यायत्वाभावेऽपि देवतात्वमन्तरेण संप्रदानत्वं न संभवतीति तत्र संप्रदानत्वहेतुकानुमानेनाक्षेपेण वा देवतात्वस्य प्रतीतिः स्यादेव । मन्त्रे तु नैवम् । ज्योतिरैश्वर्यादिगुणनिरूपणेन मन्त्रा यद्यपि देवतास्तुतिपरास्तथापि न मन्त्रेभ्यो देवतानां त्यज्यमानद्रव्योद्देश्यत्वरूपेण शक्त्या प्रतीतिः । नाप्य-नुमानेनाक्षेपेण वा । त्यज्यमानद्रव्योद्देश्यत्वाविनाभूतस्य कस्यचिद्देवतावृत्ति-धर्मस्य मन्त्रेभ्यो नियमेनाप्रतीतेः । किं तु देवतात्वधर्मस्याधिष्ठानभूतं यत्स्व-रूपं तत्केनाप्यैश्वर्यादिधर्मेण मन्त्रात्प्रतीयते । ततश्च यत्र यागीया का देवता-इत्याकाङ्क्षा जायते तत्र यागकाले समुच्चार्यमाणैर्मन्त्रैः स्वार्थे स्मारिते तादृशमन्त्रार्थप्रविष्टत्वेन या देवतोपस्थाप्यते सैव तद्यागीयदेवतात्वेन ग्रहीतु-मुचिता भवति नान्यानुपस्थिता । एवं मन्त्राद्यागीयदेवतावगमो यद्यपि भवति तथापि मन्त्राद्देवतात्वधर्मस्याधिष्ठानभूतं यद्देवतास्वरूपं तन्मात्रं प्रतीयते न तु तत्स्वरूपं देवतात्वेन तस्मात्प्रतीयत इति भावः । दुर्बलं तु परं परमिति । अत्र युक्तिरनुपदमेवोक्ता ।

तत्समुचित इति । मन्त्रवर्णप्राप्ताग्निदेवतायाः प्रजापतिदेवतया बाधो मा

यते। समुच्चितोभयविधानापेक्षयाऽन्यतः प्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिमात्रविधाने लाघवात्।

अतश्च न बाधकत्वम्। निरपेक्षविधानाभावात्। यथा च त्वन्मतेऽग्निप्रजापत्योरेकहोमोद्देशेन विधानात्तुल्यार्थत्वेन विकल्पे प्रसक्ते प्रजापतेर्न पाक्षिकमग्निबाधकत्वम्। समुच्चयविधानात्। एवं मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुच्चितप्रजापतिविधानेऽपि न बाधकत्वमिति तुल्यम्।

यत्त्वग्नेर्मान्त्रवर्णिकत्वेऽग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहा (तै. ब्रा. २।१।

---

भूरित्येवमर्थमेव प्रजापतेर्देवतात्वविधायकेऽग्नये च प्रजापतये चेति वाक्येऽग्नये चेत्युक्तम्। तथा चाग्नेर्देवतात्वं तत्स्वीकृत्य तदपेक्षयैव प्रजापतेर्देवतात्वं यदग्नये च प्रजापतये चेत्यनेन वाक्येन विधीयत इति न बाधशङ्कावकाशः। ननु यद्येवमग्नये चेत्यावश्यकं पदं तर्हि तदेवाग्नेर्देवतात्वविधायकमस्तु किमर्थं परमुखप्रेक्षणमिति चेत्तत्राह-समुच्चितोभयेति। लाघवादिति। द्वयोर्विधानापेक्षयैकस्य विधाने लाघवं स्पष्टमेव। किं चात्र देवताद्वयविधाने सापेक्षविधानेपि वाक्यभेददोषोस्त्येव। नहि सापेक्षविधाने एकस्माद्वाक्याद्देवताद्वयविधानं प्रतीयते। तथा च सापेक्षविधानं वास्तु निरपेक्षविधानं वास्तु वाक्यभेदो दुर्वार एव। सापेक्षविधाने देवताद्वयसमुच्चयो निरपेक्षविधाने देवतयोः पर्यायेण विकल्पः स्यादिति तु तत्र विशेषः।

त्वन्मत इति। यदग्नये चेत्यादि वाक्येन द्वयोर्देवतात्वविधानमिति पक्षे गृहीते पक्षेग्निरेवैका देवता पक्षे प्रजापतिरेवैका देवतेत्येवं विकल्पे द्वयोरपि पाक्षिको बाधः स्यात्। तन्निवृत्त्यर्थं चशब्दबलात्समुच्चितविधानमङ्गीकर्तव्यमेव भवति। तथा च न समुच्चयविधानप्रयुक्तं गौरवं मन्मत आपादनीयमिति भावः।

यत्त्वग्नेरिति। अग्निहोत्रे प्रातर्होमे सूर्यः प्रजापतिश्चेति देवताद्वयम्। सायंहोमेग्निः प्रजापतिश्चेति देवताद्वयम्। तत्राग्निसूर्ययोरसंसृष्टहोमः एकः पक्षः। संसृष्टहोमश्च द्वितीयः पक्षः। तत्राद्ये पक्षेग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेत्यग्निमन्त्रः। सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति सूर्यमन्त्रः। संसृष्टपक्षे तु अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेत्यग्निमन्त्रः सूर्योज्योतिर्ज्योतिरग्निः स्वाहेति सूर्यमन्त्रः। तथा च तैत्तिरीयब्राह्मणे अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेत्येव सायंहोतव्यम्। सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातः (तै. ब्रा. २।१।२।१०) इत्युक्तम्। संसृष्टहोमस्यायमभिप्रायः। लोके यस्य गृहे द्वौ पुरुषौ पुण्यात्मानौ समानैश्वर्यौ समानविद्यौ परस्परस्नेहयुक्तौ निवसतस्तस्य गृहे

२।१०) इति मिश्रलिङ्गमन्त्रवर्णबलात्सायंहोमस्य द्विदैवत्यत्वापत्तिरिति । तन्न । अग्निसमुच्चितप्रजापतिविधानवत्सूर्यसमुच्चितस्याविधानात्प्रबलप्रमाणबोधितेन प्रजापतिना मन्त्रवर्णप्राप्तस्य सूर्यस्य बाधितत्वात् ।

---

तयोः पुण्यात्मनोर्मध्ये कंचिदेकं पुण्यात्मानं यः संपूज्यान्यं न पूजयति स पूजकस्तावुभावपि पुण्यात्मानौ हिनस्ति । तत्रैकस्य पूजाराहित्यमेव हिंसा । अन्यस्य च मनःक्लेश एव हिंसा । तस्य पूजायां सत्यामपि स्वसदृशस्य स्निग्धस्य द्वितीयस्य पूजाराहित्येन मनसि पीडाजननात् । एवमत्रापि परस्परस्निग्धयोरग्न्यादित्ययोर्मध्ये सायं प्रातश्च कस्यचिदेकस्यैव होमे तयोरुभयोरपि क्लेशः स्यात् । परस्परस्नेहश्च तयोरेवमवगन्तव्यः । सायंकाल आदित्योऽग्निं प्रविशति । अत एव तेजोद्वयमेलनाद्रात्रौ दूरेऽप्यग्निर्दृश्यते । तथोद्यन्तमादित्यमग्निः प्रविशति । तस्मादग्नितेजसः सूर्ये प्रविष्टत्वादहनि दूरे धूम एव संदृश्यते न तु तेजस्तत्रत्यम् । एवं परस्परस्नेहे सति सायंकाले यद्याग्न्यर्थमेव हुत्वा सूर्यार्थं न जुहुयात्तदानीमयं सूर्याद्विच्छिद्यते । एवं प्रातरपि सूर्यार्थमेव हुत्वाग्न्यर्थमजुह्वत्पुमानग्नेर्विच्छिद्येत । अतस्तत्परिहाराय सायंकालेऽग्निना सह सूर्यं मिश्रयित्वा तादृशेन मन्त्रेण जुहुयात् । अग्निरूपं सूर्यरूपं च यज्ज्योतिस्तदुभयमेकत्र विधाय तस्मा इदं हविरिति मन्त्रतात्पर्यम् । एवं प्रातःकालेऽपि सूर्येण सहाग्निं मिश्रयित्वा तादृशेन मन्त्रेण जुहुयात् । तथा सति कालद्वयेऽपि पुण्यात्मनोरुभयोर्होमः सिद्धः इति भाष्ये स्पष्टम् । तथा च मन्त्रवर्णः सूर्यमिश्रिताग्निदेवताया लिङ्गं भवति । अतश्च मन्त्रार्थप्रकाशनकालेऽग्नेरिव सूर्यस्याप्युपस्थितत्वात्सायं होमस्य का देवतेत्याकाङ्क्षायां मन्त्रवर्णाद्देवतानिश्चयश्चेन्मन्त्रवर्णादग्निसूर्ययोर्द्वयोः सायंहोमे देवतात्वप्रसक्तिः । एवं प्रातर्होमेऽपि सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेत्यग्निमिश्रितसूर्यलिङ्गकमन्त्रवर्णादग्निसूर्ययोर्द्वयोर्देवतात्वप्रसक्तिर्बोध्या ।

परिहरति—तन्नेति । मिश्रलिङ्गकमन्त्रवर्णाद्द्वयोरग्निसूर्ययोर्देवतात्वप्रसक्तिरिति तु सत्यमेव । किंतु प्रजापतय इति चतुर्थ्या बोधितेन प्रजापतेर्देवतात्वेनाग्निसूर्ययोर्द्वयोरपि मान्त्रवर्णिकस्य देवतात्वस्य बाधः । तत्र सायंहोमेऽग्नेर्बाधो नेष्ट इत्यतः सायंहोमे देवताविधायकेऽग्नये च प्रजापतये चेत्यादिवाक्येऽग्नय इत्यनुवादः । तथा प्रातर्होमे सूर्यस्य बाधो नेष्ट इत्यतः प्रातर्होमे देवताविधायके सूर्याय च प्रजापतये चेत्यादिवाक्ये सूर्यायेत्यनुवादः । एवं च यत्र यस्यानुवादस्तत्र तेनैव सह प्रजापतेः समुच्चयो नान्यस्येति बोध्यम् । <u>समुच्चितस्याविधानादिति</u> । सायंहोमे देवताविधायकेऽग्नये चेत्यादिवाक्ये प्रजापतेः सूर्यसमुच्चितत्वेनाविधानादित्यर्थः ।

यत्त्वग्नेर्मान्त्रवर्णिकत्वे प्रजापतिविधेरेकेनैव वाक्येन सिद्धे यदग्नये च प्रजापतये च सायं जुहोति इति यत्सूर्याय च प्रजापतये च प्रातर्जुहोति ( मै. १।८।७ ) इति वाक्यद्वयं व्यर्थमिति तन्न ।

भवेद्व्यर्थं यदि प्रजापतिमात्रविधानं विवक्षितं स्यात् । सायंहोमेऽग्निसमुच्चितप्रजापतिविधानं प्रातर्होमे सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा ( मै. सं. १।८।१ ) इति मन्त्रवर्णप्राप्तसूर्यसमुच्चितप्रजापातिविधानं च विवक्षितम् । न चैतदेकेन वाक्येन सिध्यति । अतोऽर्थवद्वाक्यद्वयम् ।

यत्तु—अग्नेर्मान्त्रवर्णिकत्वे मन्त्रवर्णस्याग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा इति सायं जुहोति ( तै. ब्रा. २।१।९।२ ऐ. ब्रा. प. ५।५।३१ ) इति वाक्येन सायंहोमे विनियुक्तत्वात् तत्प्रकाश्यस्याग्नेरपि प्रजापतिसमुच्चितस्य तत्रैव देवतात्वावगतेर्यदग्नये चेति वाक्ये सायंशब्दो व्यर्थ इति । एवं यत्सूर्याय

---

<u>एकेनैव वाक्येनेति</u> । प्रजापतये जुहोतीत्येतावन्मात्रमेकमेव वाक्यं देवताविधायकं पठनीयम् । सायंशब्दस्य प्रातःशब्दस्य चानुच्चारणाद्विशेषेण कालद्वयेऽपि प्रजापतेर्देवतात्वं सिध्यति ।

<u>भवेद्व्यर्थमिति</u> । अग्नये च प्रजापतये च सायमिति देवताविधायके वाक्ये प्रजापतेरेव केवलं देवतात्वविधानं नत्वग्नेः । नापि च प्रजापतेर्देवतात्वविधानमग्निसमुच्चितमग्नेस्तु तत्रानुवादमात्रमिति यदि विवक्षा स्यात्तर्हि तावतोऽर्थस्यैकेनैव वाक्येन सिद्धिः स्यादिति वाक्यद्वयं व्यर्थं स्यात् । किंतु तथात्र विवक्षा नास्तीत्यर्थः । तर्हि कीदृशी तत्र विवक्षेति चेत्तत्राह—<u>सायंहोम इति</u> ।

पुनः शङ्कते—<u>यत्त्वग्नेरिति । तत्प्रकाश्यस्येति</u> । मन्त्रप्रकाश्यस्येत्यर्थः । अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोतीत्यनेन ब्राह्मणवाक्येन सायंहोमे करणतयाग्निरित्यादिमन्त्रो विधीयते । तेन च मन्त्रेण स्वार्थस्मरणद्वारा स्वार्थघटकीभूतत्वेनोपस्थापितानिर्देवता सायंहोमीयैव कल्पनीया भवति । तथा च यदग्नये च प्रजापतये च सायं जुहोतीति देवताविधायके ब्राह्मणवाक्येऽग्नय इति मान्त्रवर्णिकाग्निदेवतानुवादश्चेत्स सायंहोमीयाया एव तस्याः स्यात् । ततश्च तत्संनियोगेन विधीयमाना प्रजापतिदेवतापि सायंहोमीयैव सिध्यतीति देवताविधायके ब्राह्मणवाक्ये सायंशब्दो व्यर्थ इत्याशयः । <u>एवं यदिति</u> । सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः ( तै.ब्रा. २।१।९।२ ) इत्यनेन ब्राह्मणवाक्येन प्रातर्होमे विधीयमानो यो मन्त्रस्तत्प्रकाश्या सूर्यदेवतापि

चेति वाक्ये प्रातःशब्दो व्यर्थ इति। किंच मन्त्रवर्णेन ज्योतिष्ट्वगुणविशिष्टस्याग्नेः प्रकाशनाद्विशिष्टस्यैव देवतात्वापात इति।

तदपि न। होमानुवादेन देवताद्वयविधानेऽपि मन्त्रवर्णयोर्लिङ्गादेव प्राप्तिसंभवात्तद्विध्यानर्थक्यात्। मिश्रलिङ्गमन्त्रविधिपर्युदस्तयोः प्रतिप्रसवार्थं विधानेऽपि तद्विधिगतयोः सायंप्रातःशब्दयोरानर्थक्यम्। विधीयमानयोर्मन्त्रयो-

---

प्रातर्होमीयैव कल्पनीयेति यत्सूर्याय च प्रजापतये च प्रातर्जुहोतीति देवताविधायके ब्राह्मणवाक्ये प्रातःशब्दो व्यर्थो भवति। अग्नेर्मान्त्रवर्णिकत्वे दूषणान्तरमाह—किंच मन्त्रवर्णेनेति। अग्निमन्त्रे सूर्यमन्त्रे च ज्योतिरिति विशेषणं दृश्यते। तथा चाग्नेः सूर्यस्य च देवतात्वावगतिर्यदि मन्त्रात्स्यात्तर्हि ज्योतिष्ट्वगुणविशिष्टस्यैव स्यात्। इष्यते तु केवलस्याग्नेः सायं तथा केवलस्य सूर्यस्य प्रातः। अतस्तयोर्देवतात्वावगतिर्देवतात्वविधायकब्राह्मणवाक्यादेव न तु मन्त्रवर्णादित्यवश्यं स्वीकार्यं भवतीत्याशयः।

परिहरति—तदपि नेति। तत्र सायंशब्दस्य प्रातःशब्दस्य च वैयर्थ्याक्षेपं प्रतिबन्द्या दूषयति—होमानुवादेनेति। अयं भावः। मन्त्रवर्णाज्ज्योतिष्ट्वधर्मविशिष्टस्याग्नेर्देवतात्वमवगम्यते। तच्च नेष्यते। किंतु केवलस्याग्नेरत्र देवतात्वमिष्यते। तच्चाग्नये च प्रजापतये चेत्यादिना देवतात्वविधायकवाक्येन विधातुं शक्यत इति सत्यमेव। किंतु मन्त्रवर्णाद्यत्सूर्यसहकृतस्य ज्योतिष्ट्वविशिष्टस्य चाग्नेर्देवतात्वं प्राप्नोति तदवर्जनीयमेवेति तन्निवृत्तौ कश्चिदुपायो वाच्यः। चतुर्थ्या बोधितया प्रजापतिदेवतया बाधश्चेदग्नेर्देवतात्वमिष्यते तन्न सिध्येत्। यदग्नय इत्यनेन तद्विधीयत इति चेदत्रेत्थं वक्तव्यम्। किमपूर्वमग्नेर्देवतात्वं यदग्नय इत्यनेन विधीयत उत मान्त्रवर्णिकमग्नेर्देवतात्वमंशतः प्रतिप्रसूयते। प्रतिप्रसवो हि पूर्वप्राप्तस्य कार्त्स्न्येनांशेन चापेक्षानुसारेण कर्तुं शक्यते। ईदृशस्थले पुनरपूर्वविधानापेक्षया प्रतिप्रसवाङ्गीकार एव वरम्। अपूर्वविधाने हि प्राप्तं परित्यज्याप्राप्तस्यापूर्वस्य परिकल्पनम्। प्रतिप्रसवे तु प्रतिबन्धकापसारणमात्रेण प्राप्तस्यैव परिपालनम्। तथा च लाघवानुगृहीतोयं प्रतिप्रसवपक्षः। तथा चात्रापूर्वविधिपक्षस्य त्वदभिमतस्यापि प्रतिप्रसवपक्ष एव नान्तरीयकतया पर्यवसानं स्यादित्यतः सायंहोमीयाग्निदेवतायाः प्राप्ताया यदग्नये च प्रजापतये च सायं जुहोतीत्यत्राग्नय इत्यनेन प्रतिप्रसवे तत्संनियोगशिष्टायाः प्रजापतिदेवताया अपि सायंहोमीयदेवतात्वे सिद्धे सायंशब्दवैयर्थ्यं दुष्परिहरमेव भवति। अपूर्वविधानपक्षं परिगृह्य सायंशब्दस्य चारितार्थ्योपपादनं तु गौरवपराहतत्वान्निरस्तमेव।

व्यवस्थयैव प्राप्तिसंभवात्तत्प्रकाश्ययोर्देवतयोर्व्यवस्थितत्वात्। अनुवादत्वोक्तिस्तूभयत्र तुल्येति।

मान्त्रवर्णिकत्वेऽपि अग्नेः केवलस्यैव देवतात्वं न गुणविशिष्टस्य। यदग्नये चेति वाक्येऽग्नेः पूर्वाहुतिः (तै. ब्रा. २।१।२।१०) इत्यत्र च केवलस्यैवाग्नेः संकीर्तनात्केवलस्यैव देवतात्वावगतेः।

यथा ध्रुपांशुयाजे विष्ण्वादेर्मान्त्रवर्णिकत्वेऽपि न गुणविशिष्टस्य देवतात्वम्। विष्णुरुपांशु यष्टव्य इत्यर्थवादे केवलस्यैव संकीर्तनात्तद्वदिति।

अतश्च मान्त्रवर्णिकत्वे दोषाभावाद्देवताद्वयविधाने च गौरवापत्तेरन्यतः प्राप्तमग्निमनूद्य तत्समुचितः प्रजापतिरेवात्र विधीयते। होमानुवादेनोभयविधाने वाक्यभेदप्रसङ्गाच्च।

नच चकारश्रवणान्न वाक्यभेद इति वाच्यम्। चकारार्थो हि समुच्चयः। तं

---

व्यवस्थयैवेति। प्रातर्होमीयत्वेनैव सायंहोमीयत्वेनैव वेत्यर्थः। अनुवादत्वोक्तिरिति। अथ देवताविधायके यदग्नये चेत्यत्र सायंशब्दोनुवाद एव न तु तस्यानन्यथासिद्धप्रयोजनार्थमभिनिवेष्टव्यं तथा यत्सूर्याय चेत्यत्र प्रातःशब्दस्यापीति चेद्यदग्नये च प्रजापतये चेत्यत्राग्नय इति मान्त्रवर्णिकदेवतानुवाद इति मदीये पक्षेपि तत्तुल्यमेवेति भावः।

नन्वपूर्वविधिपक्षोत्र मया केवलस्याग्नेर्देवतात्वसिद्ध्यर्थं स्वीकृतः। अग्नये चेति मान्त्रवर्णिकदेवतात्वानुवाद इति पक्षे ज्योतिर्विशिष्टस्यैव तस्य देवतात्वं स्यादिति चेत्तत्राह—मान्त्रवर्णिकत्वेपीति। अग्नये चेतीति। अत्रानुवादे गुणस्यानिर्देशात्केवलस्य देवतात्वं सिध्यति। अपेक्षानुसारेणानुवादकरणात्। नहि यावत्प्राप्तं तावत्सर्वमेवानुवदितव्यमित्यस्ति कश्चिन्नियमः। अग्नेः पूर्वाहुतिरिति। अत्राद्याहुतिक्रमविधायके वाक्येग्नेर्देवतात्वेन यो निर्देशः कृतः स केवलस्यैव न तु ज्योतिष्गुणविशिष्टस्येति केवलस्य देवतात्वं सिध्यतीति भावः। तत्र दृष्टान्तमाह—यथा ध्रुपांश्विति। अग्नये चेति नापूर्वदेवताविधिः किंतु मान्त्रवर्णिकदेवतानुवाद एवेति पक्षमुपसंहरति—अतश्चेति। किंचापूर्वविधिपक्षे सापेक्षविधानाङ्गीकारेण वाक्यभेददोषपरिहारो यः पूर्वमुक्तः (पृ. २२३ प. ७) स न संभवतीत्याशयेनाह—होमानुवादेनेति। न च चकारश्रवणादिति। अग्नये च प्रजापतये चेत्यत्र नाग्निप्रजापत्योः समुच्चितयोर्देवतात्वम्। किंतु प्रत्येकं देवताबोधकचतुर्थीप्रत्ययदर्शनाद्देवतयोः सतोरत्र समुच्चय इति प्रागुक्तमेव (पृ. २२४ प. १)। अत एव च तयोः

च समुच्चयं यदि चकारः प्राधान्येन ब्रूयात्तदा प्रधानस्यानेकविशेषणसंग्राहकत्वादारुण्यादिविशिष्टक्रयविधान इव कारकद्वयसमुच्चयविधाने वाक्यभेदो न भवेत्। नच चकारः समुच्चयं प्राधान्येन ब्रूते। परोपसर्जनत्वेनैवाभिधानात्।

अत एव दशमे भाष्यकारैश्चकारस्य समुच्चयशब्दाद्वैलक्षण्यं प्रतिपादितम्। समुच्चयशब्दो हि तं प्राधान्येन ब्रूते न चकारः। यदि हि प्राधान्येन ब्रूयात्तदा तत्प्रतिपन्नः समुच्चयः क्रियागुणैः संबध्येत। समुच्चयः शोभनः समुच्चयो द्रष्टव्य इतिवत् च शोभनश्च द्रष्टव्य इति प्रयोगः स्यात्। समुच्चयशब्दवच्चकारस्य प्राधान्येन समुच्चयवाचित्वे धवखदिरयोः समुच्चय इतिवद् धवखदिरयोश्चेत्यपि प्रयोगः स्यादिति।

---

पृथग्देवतात्वसिद्धिः। एवं सत्यप्यत्र वाक्यभेदो नेति वदतोयमाशयः। चकारेण योत्र देवतयोः समुच्चयः प्रतिपादितः स एक एवात्र विधेयो भवति। विधेः पर्यवसानं तु प्रत्येकं स्यादित्यन्यादिति।

प्राधान्येनेति। यथा गवादिशब्दः स्वार्थं शक्त्या प्राधान्येन ब्रूते। वाक्यार्थे तस्य विशेषणत्वं विशेष्यत्वं वा कथमप्यस्तु। शक्त्या यावतोऽर्थस्योपस्थितिस्तादृशोपस्थितिवेलायां न तावतोर्थस्य परोपसर्जनत्वेनोपस्थितिः। यथा वा समुच्चयशब्दात्समुच्चयरूपार्थस्योपस्थितिः। चशब्दात्तु या समुच्चयरूपार्थस्योपस्थितिः सा स्वसंनिहितपदार्थोपसर्जनत्वेनैव भवति। तथा च देवतयोः समुच्चय इति शब्दमर्यादया नार्थो भवति किंतु समुच्चिते देवते इति। समुच्चितयोर्देवतयोरत्र जुहोतीत्यत्रान्वयो न तु तयोः समुच्चयस्य जुहोतीत्यत्रान्वय इति यावत्। यथा स्त्रीपुरुषयोर्युग्मं गच्छतीत्यत्र स्त्रीपुरुषयोर्द्वित्वेपि युग्मशब्दार्थः स्वस्मिन्स्त्रियं पुरुषं च संग्राह्य स्वयमेक एव गच्छतीत्यत्रान्वेतीति न तत्र वाक्यभेदस्तद्वत्समुच्चयशब्दप्रयोगे भवेन्नतु चशब्दप्रयोगे। तथा चात्र कथं न वाक्यभेदः। नन्वत्र देवतात्वस्य प्रत्येकनिष्ठस्यापि मिथः सापेक्षत्वं चशब्दबलात्प्रतीयत एवेति चेत्किं तेन। वाक्यभेदो हि वाक्यार्थभेदः। वाक्यार्थश्चोद्देश्यविधेयभावः। तत्रोद्देश्यभेदेन विधेयभेदेन वोद्देश्यविधेयभावद्वये वाक्यभेददोषोऽवर्जनीय एव। विधाने सापेक्षत्वनिरपेक्षत्वकृतो विशेषस्तु वाक्यभेदचर्चायामकिंचित्करः। आरुण्यादीति। आरुण्याद्यनेकधर्मविशिष्टाया गोरेकस्या एवैकरूपेण क्रये करणतयान्वयो भवतीति न तत्र वाक्यभेदः। दशम इति। तस्य धेनु० (१०।३।५६) इति सूत्रार्थप्रतिपादनप्रसङ्ग इति शेषः। तमिति। समुच्चयरूपमर्थमित्यर्थः। तत्प्रतिपन्नः समुच्चय इति। चशब्दादुपस्थितः समुच्चयरूपोर्थ इत्यर्थः।

अतश्चकारः समुच्चयं प्राधान्येन न ब्रूते येन प्रधानस्यैकस्य विधानान्न वाक्यभेदो भवेत्। किंतु कारकद्वयोपसर्जनत्वेनैव स तं ब्रूते समुचितौ अग्निप्रजापती इति। प्रधानद्वयविधाने च वाक्यभेदः स्यादेव। यथा ग्रहोद्देशेन संमार्गैकत्वविधाने।

यद्यपि चकारः समुच्चयं प्राधान्येन ब्रूयात्तथापि तस्य कारकद्वयं प्रति

---

कारकद्वयेति। अग्निप्रजापतिरूपसंप्रदानकारकद्वयोपसर्जनत्वेनैव चशब्दात्समुच्चयरूपोर्थः प्रतीयत इत्यर्थः। तामेव प्रतीतिं प्रदर्शयति—समुच्चितौ अग्निप्रजापती इति। अग्निप्रजापत्योः समुच्चय इत्येवं समुच्चयरूपार्थस्य प्राधान्येन प्रतीतिश्चशब्दाद्भवितुं नार्हतीति भावः। ग्रहोद्देशेनेति। इदं जैमिनीये तृतीयाध्याये प्रथमपादे सप्तमाधिकरणे चिन्तितम्। सोमे श्रूयते दशापवित्रेण ग्रहं संमार्ष्टीति। दशापवित्रं वाससःखण्डः। ग्रहशब्देन पात्रमुच्यते। तत्र ग्रहमिति द्वितीयया ग्रहस्योद्देश्यतया प्राधान्यं गम्यते। संमार्जनं त्वप्रधानं ग्रहसंस्कारकम्। प्रधानानुरोधेन चाप्रधानस्यावृत्तौ जातायामपि न काचित्क्षतिरिति यत्र यावन्तो ग्रहास्तत्रावृत्त्या तेषां संमार्जनं स्यादेवेत्यतोत्र कति ग्रहा इत्येवं संख्याविशेषाकाङ्क्षा नोदेति। अतस्तत्रत्यमेकत्वमविवक्षितं भवति। ननु नेदमेकत्वमुद्देश्यगतं किंतु स्वयं विधेयमिति चेन्न। वाक्यभेदापत्तेः। ग्रहं संमृज्यात् तं च संमार्जनार्थमेकं गृह्णीयादिति। एकत्वस्य संमार्जनसापेक्षत्वेन विधानात्संमार्जनार्थेति गम्यते। तथा च यथात्र वाक्यभेददोषस्तथा प्रकृतेग्निप्रजापत्योर्विधाने वाक्यभेदः स्यादित्यर्थः। अत्रैकत्वविशिष्टं ग्रहमुद्दिश्य संमार्जनं विधीयत इति विशिष्टोद्देशे किं बाधकमिति चेदित्थम्। यदि ग्रहेषु प्रतिस्वं विद्यमानं स्वाभाविकमेकत्वं गृहीत्वास्य विधेः प्रवृत्तिरुच्यते तर्हि सर्वेषां संमार्जनं स्यादेवेति तत्रैकत्वस्याविवक्षायामेव पर्यवसानं भवति। यदि च तदेकत्वं संमार्जनसापेक्षत्वेन विवक्ष्यत इत्युच्यते तर्हि सर्वेषां संमार्जनं न स्यात्। किंतु तदा वाक्यभेदोस्त्येव। एकत्वस्य शाब्दे वाक्यार्थे विधेयत्वानङ्गीकारेपि पर्यवसिते पार्ष्ठिके वाक्यार्थे संमार्जनार्थमेकं गृह्णीयादित्येवमार्थिकस्य विधेयत्वस्य तत्रावर्जनीयत्वात्। एवं चोद्देश्यद्वये विधेयद्वये च वाक्यभेदः स्पष्ट एव। उद्देश्यैक्ये विधेयद्वये च वाक्यभेदः। विधेयैक्ये उद्देश्यद्वये च वाक्यभेदः। उद्देश्यैके विधेयैक्ये च वाक्यभेदो न भवति। किंतु तत्रापि विशिष्टोद्देश्ये उक्तरीत्या वाक्यभेदोस्त्येव। केवलं विशिष्टविधाने वाक्यभेदो न भवतीति।

प्राधान्येनेति। यथा समुच्चयशब्दः समुच्चयरूपमर्थं स्वातन्त्र्येणो-

प्राधान्यमनुपपन्नम्। विभक्त्यभिहितस्य कारकद्वयस्य क्रियोपसर्जनत्वेन समुच्चयोपसर्जनत्वाभावात्। कृदन्तादिशब्दैरुपस्थितं हि कारकं क्रियातोऽन्येन संबध्यते। कारकसमुच्चयः करणसमुच्चय इति। विभक्त्यभिहितं तु क्रियैव। कारकाणां तयैवान्वयात्।

अतश्चकारेणोच्यमानः स कारकोपसर्जनत्वेनैवोच्यते। कारकद्वयं च प्रधानम्। एकोद्देशेन च प्रधानद्वयविधाने वाक्यभेद एव। यथाहुः—

अनेकपदसंबद्धं यद्येकमपि कारकम्।
तथापि तदनावृत्तेः प्रत्ययैर्न विधीयते॥

(त वा. २।२।५) इति।

---

पस्थापयति न तु परोपसर्जनत्वेनैव तथा चकारोपि स्वातन्त्र्येण समुच्चयरूपमर्थमुपस्थापयेत्तथाप्यत्र नाग्निप्रजापत्योश्चकारार्थे समुच्चयेन्वयो वक्तुं शक्यो येन समुच्चयस्य जुहोतीत्यत्रान्वये वाक्यभेदो न भवेत्। किंत्वग्नय इत्यस्य प्रजापतय इत्यस्य च संप्रदानकारकार्थकविभक्त्यन्तत्वेन तयोर्जुहोतीत्यत्रैवान्वय इति वाक्यभेदो दुर्वार एव।

कृदन्तादिशब्दैरिति। यथा दानीयो विप्र इत्यत्र संप्रदानार्थकोनीयप्रत्यय इति तदन्तस्य क्रियापेक्षयान्येन विप्रादिनापि संबन्धो भवति। एवमेव कारक इति शब्दात्सामान्यरूपेणोपस्थितस्य कारकस्य तथा करणादिशब्दाद्विशेषरूपेणोपस्थितस्यार्थस्य क्रियापेक्षयान्यस्मिन्समुच्चयादावन्वयो भवति नैवं विभक्त्युपस्थापितकारकविषये। तस्य तु क्रियैवान्वयः। विभक्तिप्रत्ययस्य क्रियोपसर्जनत्वेनैव स्वार्थोपस्थापने शक्तत्वात्। स इति। समुच्चयरूपोर्थ इत्यर्थः। कारकोपसर्जनत्वनैवेति। कारकपदमग्नये च प्रजापतये चेति प्रकृतोदाहरणाभिप्रायम्। चकारः संनिहितपदार्थोपसर्जनत्वेनैव समुच्चयार्थं ब्रूते। यथा देवदत्तस्य च यज्ञदत्तस्य च गृहमित्यत्र देवदत्तयज्ञदत्तयोरकारकत्वेपि तन्निरूपितोपसर्जनत्वेनैव चकारात्समुच्चयार्थोपस्थितिरिति बोध्यम्। एकोद्देशेनेति। जुहोतिपदप्रतिपाद्यक्रियामेकामुद्दिश्याग्नेः प्रजापतेश्च देवतात्वेन विधाने वाक्यभेद इति भावः।

अनेकपदेति। एकमपि, एकजातीयमपि। अग्नये च प्रजापतये चेत्यत्रैकजातीयमपि संप्रदानकारकमग्निप्रजापतिरूपानेकपदसंबद्धत्वादनावृत्तेन सकृदुच्चारितेन प्रत्ययेन न विधातुं शक्यते। किंतु प्रतिपदं प्रत्ययावृत्ति-

यच्च यथा दक्षिणानुवादेन गवादीनामनेकेषां विधाने न वाक्यभेदस्तथा कारकद्वयविधानेऽपीति । तन्न । नहि गौश्चाश्वश्चेत्यस्मिन् वाक्ये दक्षिणानुवादेन गवादयो विधीयन्ते । उक्तरीत्या वाक्यभेदापत्तेः । चकारेण कथंचित्परिहारेऽपि गवादीनामनेकेषां द्वादशशतसंख्यायाश्च विधाने वाक्यभेद एव । आध्वर्यवशाखायां गौश्चेत्यादेः तस्य द्वादशशतमित्यन्तस्य सहश्रुतत्वेन

---

स्तत्रावश्यकी । एवं प्रत्ययावृत्तौ च तयोः पार्थक्येन क्रियान्वयाद्वाक्यभेदस्तत्र दुर्वार एव भवति । यदि त्वग्नीषोमेति सामासिकैकपदसंबद्धं कारकं भवेत्तर्हि सकृदुच्चारितेनैव प्रत्ययेन विधातुं शक्येत । वाक्यभेदश्च तत्र न भवेत्, यथाग्नीषोमाभ्यां जुहोतीत्युक्ते द्वयोः समुच्चितयोरेव संप्रदानत्वावगतिः।

अथ सापेक्षविधाने वाक्यभेददोषो नास्तीति मन्वानस्य मतमनूद्य खण्डयति—यच्च यथेति । तन्नेति । अयं भावः । गौश्चाश्वश्चेत्यत्र वाक्यभेददोषो नास्तीति सर्वसंमतम् । किंतु तत्साधनाय मार्गद्वयम् । एको न्यायसुधाकाराणामपरः पार्थसारथिमिश्राणाम् । आद्यो यथा ऋत्विग्भ्यो ददातीति वाक्यं दक्षिणाविधायकम् । तादृशदक्षिणानुवादेन गौश्चाश्वश्चेति वाक्येन दक्षिणाविशेषो गवाश्वादिर्विधीयते । गवाश्वादीनामनेकेषां विधानेऽपि मिथः सापेक्षत्वेन तेषां विधानमतो न वाक्यभेदः । यद्यपि सापेक्षविधानेऽपि उद्देश्यविधेयभावभेदेन वाक्यभेदोऽवर्जनीय एव तथापि तत्र विवक्षितो यः पार्ष्ठिकस्तात्पर्यार्थस्तत्रैकवाक्यत्वकल्पनं भवतीत्यतो न तादृशस्थले श्रुतो विद्यमानो वाक्यभेदस्तादृशदोषावह इति तेषामाशयः । द्वितीयो मार्गो यथा ऋत्विग्भ्यो दक्षिणां ददातीति वाक्यं न दक्षिणाविधायकम् । किंतु दक्षिणानुवादेन तत्संप्रदानतया ऋत्विग्विधायकम् । दक्षिणाविधायकं वाक्यं तु गौश्चाश्वश्चेत्येतदेव । तत्र च गवाश्वाद्यनेकपदार्थरूपा गोनिष्ठद्वादशाधिकशतसंख्यायुक्ता चेत्येवं विशिष्टरूपा दक्षिणा विधीयते । विशिष्टविधानाङ्गीकाराच्च सोमेन यजेतेत्यत्रेव न वाक्यभेदः । तदुक्तं प्राक्—

प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः ।

अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥ इति ।

एतादृशस्थले पार्यन्तिके तात्पर्यार्थे वाक्यभेदसंबन्धसत्त्वेऽप्युद्देश्यविधेयभावस्यैक्यान्न कथमपि वाक्यभेदशङ्का । अत्र चान्त्यपक्ष एव युक्तः । वाक्यभेदशङ्काया अप्यभावात् । आद्यपक्षे च पार्यन्तिके तात्पर्यार्थे एकवाक्यत्वसंभवेन तत्र वाक्यभेदस्य कार्त्स्न्येन दोषापादकत्वाभावेन कथंचित्परिहारेऽपि प्रकारान्तरेण वाक्यभेदस्तदवस्थ एव भवति । चकारबलाद्धि प्रतीयमानं सापेक्षविधानं गवादीनां स्यात् । तत्र प्रत्येकं चकारनिर्देशात् । तस्य द्वादशशतं दक्षिणेत्यत्र

चास्यैकवाक्यत्वमित्युक्तं दशमे। अतोऽनेन वाक्येनोभयविशिष्टा दक्षिणैव विधीयते। विशिष्टविधानाच्च न वाक्यभेदः। अत एव पार्थसारथिमिश्रैर्दशमे तत्र तत्र सोभयविशिष्टा विधीयते इति अनेकगवाद्यात्मिकैका दक्षिणा विधीयत इति चोक्तम्।

न चैवमृत्विग्भ्यो दक्षिणां ददातीत्यस्यानर्थक्यम्। तस्यानुवादत्वात्। ऋत्विक्संबन्धपरत्वाद्वा। दक्षिणाशब्दसामर्थ्याद्धि ऋत्विजां चमसाध्वर्य्वादीनां च तत्संबन्धः स्यात्। एतद्वाक्यसत्त्वे च न भवति। ऋत्विक्शब्दस्य ब्रह्मादिगतऋतुयजननिमित्तत्वेन चमसाध्वर्यूणामृत्विक्त्वाभावस्य तृतीये ( जै. ३।७।३२ ) उक्तत्वात्।

---

द्वादशाधिकशतसंख्यावाचकद्वादशशतपदोत्तरं चकारनिर्देशाभावेन संख्यायाः सापेक्षविधानाभावेन वाक्यभेदधौव्यात्। किं च निरपेक्षविधाने पर्यायापत्तिरपि दोष इति।

दशम इति। दशमाध्याये तृतीयपाद एकादशाधिकरण इदमुक्तम्। तत्र तत्रेति। दशमाध्याये तृतीयपादे एकादशाधिकरणे सोभयविशिष्टा विधीयत इत्युक्तम्। तत्रैव पादे चतुर्दशाधिकरणेऽनेकगवाद्यात्मिकैका दक्षिणा विधीयत इत्युक्तम्।

अनुवादत्वादिति। अनुवादे प्रयोजनं तु गवाद्यनेकद्रव्यात्मकदक्षिणायाः साक्षादावश्यकत्वबोधनमित्याहुः। प्रयोजनान्तरमाह–ऋत्विक्संबन्धेति। ऋत्विङ्मात्रसंबन्धेत्यर्थः। गौश्चाश्वश्चेत्यादिवाक्येन विहिता दक्षिणा कर्मकर्तृभ्य एव देया भवति। मानसिकोत्साहवृद्धिर्दक्षधात्वर्थः। तादृशवृद्धिसाधनीभूतं द्रव्यं दक्षिणाशब्देनोच्यते। दक्षिणया हि तत्तत्कर्मकरण उत्साहाधिक्यं भवतीति प्रसिद्धमेव। तथा च कर्मकारिभ्यो देयेयं गवादिदक्षिणा ऋत्विजां सप्तदशानां कर्मकारित्वात्प्राप्तैवेति ऋत्विग्भ्यो दक्षिणां ददातीति वाक्यमनर्थकं सदितरव्यावृत्तिपरं भवति। तथा च ऋत्विग्भ्य एव दक्षिणा देया नान्येभ्यः कर्मकारिभ्यश्चमसाध्वर्युभ्य इत्येवं स परिसंख्याविधिः संपद्यते। यद्यपि ऋतौ यजतीति ऋत्विगिति योगार्थेन चमसाध्वर्यूणामपि ऋत्विक्त्वं प्राप्यते तथापि सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदशर्त्विज इति श्रुतौ सप्तदशेति संख्याया निर्देशात्तदनुसारेण ऋत्विक्शब्दो योगरूढः सप्तदशस्वेवेति निर्णीतं तृतीयाध्याये सप्तमे पादे 'न वा परिसंख्यानात्' ( जै. सू. ३।७।३३ ) इति सूत्रे जैमिनिना।

अतश्च गौश्चाश्वश्चेत्यस्मिन् वाक्ये विशिष्टविधानान्न वाक्यभेदः । 'यदग्नये च प्रजापतये च सायं जुहोति' इति तु न विशिष्टविधानम् । होमस्याग्निहोत्रं जुहोतीत्यनेन प्राप्तत्वात् । अतश्च होमानुवादेन समुचितोभयविधाने वाक्यभेदाद्गौरवापत्तेश्च नानेन वाक्येन देवताद्वयं विधीयते । किंतु मन्त्रवर्णप्राप्तमग्निमनूद्य तत्समुचितः प्रजापतिर्होमोद्देशेन विधीयते ।

अतश्च नेमदग्नेः प्रापकम् । किंतु मन्त्रवर्ण एव । अतश्च तेनाग्नेः प्राप्तत्वान्नाग्निहोत्रपदं देवतासमर्पकम् । किं तर्हि नामधेयमेव । तत्सिद्धमेतत्तत्प्रख्यशास्त्रादग्निहोत्रशब्दस्य कर्मनामधेयत्वमिति ।

एवं प्रयाजेषु समिदादिदेवतानां समिधः समिधोऽग्न आज्यस्य व्यन्तु ( का. हौ. १।४ ) इत्यादिमन्त्रवर्णेभ्यः प्राप्तत्वात्समिधो यजतीत्यादिषु समिदादिशब्दास्तत्प्रख्यशास्त्रात्कर्मनामधेयानि । यथाहुः—

विधित्सितगुणप्राप्ति शास्त्रमन्यत्र तत्स्त्विह ।

---

प्राप्तत्वादिति । न च यदग्नये चेति विशिष्टविधिः, अग्निहोत्रं जुहोतीत्ययमनुवाद इति कल्प्यताम् । तथा च गौश्चाश्वश्चेत्यत्रेव न वाक्यभेद इति वाच्यम् । तथा सत्यग्निहोत्रं जुहोतीत्यस्य नैरर्थक्यापातात् । नहि तत्रान्यत्किंचिद्गुणविशिष्टं विधातुं शक्यते । कस्याप्यनिर्देशात् । गौरवापत्तेश्चेति । मान्त्रवर्णिकस्याग्नेर्देवतात्वस्य बाधकल्पनया गौरवं स्पष्टमेवोभयविधानपक्षे । प्रतिप्रसवपक्षस्तु तैर्नोद्रियते । किंतु प्रतिप्रसवपक्षमनिच्छतामपि तेषां स गले पतितो भवतीत्यभिप्रायेण पूर्वं ( पृ. २३० प. ४ ) निर्दिष्टः । नेदमिति । यदग्नये च प्रजापतये चेति ब्राह्मणवाक्यमग्निदेवतायाः प्रापकत्वेन न प्रदर्शनीयमित्यर्थः । मन्त्रवर्णः । अग्निर्ज्योतिरिति मन्त्रः । तत्प्रख्यशास्त्रात्कर्मनामधेयत्वस्योदाहरणान्तरमाह—एवं प्रयाजेष्विति । समिधो यजति ( तै. २।६।१ ) इत्यादिब्राह्मणवाक्ये समिदादिशब्दानां कर्मनामधेयत्वानङ्गीकारे सम्यागिन्धे इति समिदित्येवं समिच्छब्देन सम्यक्प्रज्वलितत्वरूपगुणविशिष्टाग्निर्देवता बोध्यते । एवं तनूनपातं यजतीत्यत्र तनूनपाच्छब्दस्य कर्मनामधेयत्वानङ्गीकारे तनूं न पातयति किंतु रक्षत्येवेत्येवं शरीररक्षकत्वरूपगुणविशिष्टाग्निर्देवता तनूनपाच्छब्देन बोध्यते । तथा च तत्तद्गुणविशिष्टाग्निर्देवताविधायकानि समिधो यजतीत्यादिवाक्यानीति वक्तव्यम् । परं तु समिधो अग्न आज्यस्य वियन्तु । तनूनपादग्न आज्यस्य वेतु (तै. ब्रा. ३।५।५) इत्यादिमन्त्रवर्णादेवोक्ता देवता बोधिता भवन्ति । अतः समित्तनूनपादित्यादिशब्दानां कर्मनामधेयत्वम् । विधित्सितेति । कर्मनामत्वेनाभिमताच्छब्दात्कर्म-

तस्मात्तत्प्रापणं व्यर्थमिति नामत्वमिष्यते ॥

( त. वा. १।४।४ ) इति दिक् ।

श्येनेनाभिचरन्यजेत ( आप. २२।४।१३ ) इत्यत्र श्येनशब्दस्य कर्मनामधेयत्वं तद्व्यपदेशात् । तेन व्यपदेशः उपमानम् । तदन्यथानुपपत्त्येति यावत् । तथा हि यद्विधेयं तस्य स्तुतिर्भवति । तद्यद्यत्र श्येनो विधेयः स्यात्तदार्थवादैस्तस्यैव स्तुतिः कार्या । न च यथा वै श्येनो निपत्यादत्त एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्त इत्यनेनार्थवादेन श्येनः स्तोतुं शक्यः । श्येनोपमानेनार्थान्तरस्तुतेः क्रियमाणत्वात् । न च श्येनोपमानेन स एव स्तोतुं शक्यते । उपमानोपमेयभावस्य भिन्ननिष्ठत्वात् । यदा तु श्येनसंज्ञको यागो विधीयते तदार्थवादेन श्येनोपमानेन तस्य स्तुतिः कर्तुं शक्यत इति श्येन-

---

नामधेयत्वानङ्गीकारे यो गुणो विधातुमिष्टः स्यात्तस्य गुणस्य प्रापकमन्यच्छास्त्रं यतोऽत्र दृश्यते तस्मात्पुनस्तद्गुणप्राप्तिस्तस्माच्छब्दात्कल्प्यमाना व्यर्था स्यादिति हेतोस्तस्य शब्दस्य कर्मनामधेयत्वमिष्यत इति वार्तिकार्थः ।

अथ कर्मनामधेयत्वे तद्व्यपदेशरूपं चतुर्थं कारणं प्रदर्शयति-श्येनेनेति । इदं जैमिनीये प्रथमाध्याये चतुर्थपादे पञ्चमाधिकरणे चिन्तितम् । श्येनशब्दस्य कर्मनामधेयत्वानङ्गीकारे श्येनशब्दस्य पक्षिविशेषरूपोऽर्थः प्रसिद्ध इति तं गृहीत्वा श्येनेनाभिचरन्नित्यस्यायमर्थः स्यात् । प्रकृते सोमयागे नित्यं सोमद्रव्यं बाधित्वा तत्स्थाने पक्षिविशेषरूपं हविर्द्रव्यं गुणः काम्यो विधीयते । एवं गुणविधित्वे स्वीक्रियमाणे न वाक्यभेदस्तथाप्यत्र श्येनशब्दः कर्मनामधेयं स्वीकार्यम् । कुतः । तद्व्यपदेशात् । तेन पक्षिणा व्यपदेशः सादृश्यं श्येनेनाभिचरन्निति वाक्यगतविधेयस्यार्थवादवाक्ये यत्प्रतिपादितं तस्मादित्यर्थः । अत्र श्येनपदस्युपमानम् । श्येनेनाभिचरन्नित्यत्रत्यं यद्विधेयं तदुपमेयम् । श्येनपक्षी हि यं पक्षिणमालक्ष्य पतति स न कदापि श्येनपाताच्च्यवते । तथा च श्येनो यथा प्रसह्य नियतं च स्वाभिलषितं प्राणिनं गृह्णात्येव तथायं श्येनयाग इत्यर्थवादेन स्तूयते । परं तु यदि श्येनेनाभिचरन्नित्यत्र यागो न विधेयः किंतु यागमुद्दिश्य हविर्द्रव्यतया श्येनः पक्षी गुणो विधेयः स्यात्तर्हि विधेयः श्येनपक्षी एवोपमेयः स एव चोपमानमित्युपमानोपमेयभावो न संभवति । अतः श्येन इति कर्मनामधेयं स्वीकार्यमिति भावः । उपमानमिति । सादृश्यमित्यर्थः । तदन्यथानुपपत्त्येति । तस्य सादृश्यस्यान्यथा कर्मनामधेयत्वानङ्गीकारेऽनुपपत्त्येत्यर्थः । श्येनो विधेय इति । श्येनः पक्षी विधेयो यदि स्यादित्यर्थः । नचेति । नहीत्यर्थः । द्विषन्तम् । द्वेषं कुर्वन्तम् । भ्रातृव्यम् । शत्रुम् । श्येनोपमानेन तस्य स्तुतिरिति । श्येनपदस्युपमानेन श्येनसंज्ञकयागस्य स्तुतिरित्यर्थः ।

शब्दस्य तद्व्यपदेशाद्यागनामधेयत्वम् । तत्सिद्धं निमित्तचतुष्टयान्नामधेयत्वम् ।

उत्पत्तिशिष्टगुणबलीयस्त्वमपि पञ्चमं केचिन्नामधेयत्वे निमित्तमाहुः । वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्दस्य कर्मनामधेयत्वम् ( जै. १।४।२३ ) उत्पत्तिशिष्टगुणबलीयस्त्वात् । उक्तमत्वर्थलक्षणादिप्रकारचतुष्टयासंभवात् ।

तथा हि न तावन्मत्वर्थलक्षणाभयान्नामधेयत्वं युक्तमिति वक्तुं शक्यम् । वैश्वदेवेनेति तद्धितेनैव मत्वर्थस्य यागस्योक्तत्वात् । साऽस्य देवतेत्यस्मिन्नर्थे

---

अथोक्तचतुष्टयातिरिक्तमपि कर्मनामधेयत्वे निमित्तं संभवतीति यन्न्यायसुधायामुक्तं तत्प्रदर्शयति—उत्पत्तीति । यागोत्पत्तिविधौ कथितो यो गुणः स बलीयान् । उत्पत्तिवाक्य एव गुणस्य निर्देशे विधेर्गुणविषये निराकाङ्क्षत्वेन तत्र गुणान्तरस्य संबन्धो न भवति । अतस्तत्र गुणान्तरं दुर्बलं भवति । तथा च तादृशगुणान्तरविधायकत्वेन संभाव्यमानो यः शब्दः स गुणान्तरविधायको न भवतीत्यतस्तस्य शब्दस्य कर्मनामधेयत्वं स्वीकार्यमिति भावः ।

वैश्वदेवेनेति । इदं जैमिनीये प्रथमाध्याये चतुर्थपाद एकादशाधिकरणे चिन्तितम् । चातुर्मास्ययागस्य चत्वारि पर्वाणि वैश्वदेववरुणप्रघाससाकमेधशुनासीरीयसंज्ञकानि । तत्र प्रथमे वैश्वदेवपर्वण्यष्टौ यागा विहिताः । आग्नेयमष्टाकपालं निर्वपति (१) । सौम्यं चरुम् (२) । सावित्रं द्वादशकपालम् (३) । सारस्वतं चरुम् (४) । पौष्णं चरुम् (५) । मारुतं सप्तकपालम् (६) । वैश्वदेवीमामिक्षाम् (७) । द्यावापृथिव्यमेककपालम् (८) ( तै. सं. १।८।२ ) इति । एतेषां चाष्टानां यागानां संनिधौ वैश्वदेवेन यजेत इत्याम्नायते । तत्र वैश्वदेव इति कर्मनामधेयम् । पूर्वोक्तानामष्टानां यागानां वैश्वदेव इति संज्ञानेन वाक्येन क्रियते । संज्ञाकरणं च लाघवेन व्यवहारसिद्धये । प्राचीनप्रवणे देशे वैश्वदेवेन यजेतेत्यादयः संज्ञाप्रदेशाः । वैश्वदेव इति संज्ञाया अभावे प्राचीनप्रवणदेशविधायकेत्र वाक्येष्टानां यागनां निर्देशः कर्तव्यः स्यादिति गौरवं स्पष्टमेव । अत्र वैश्वदेवशब्दस्य कर्मनामधेयत्वानङ्गीकारे विश्वदेवा देवता अस्येति योगं पुरस्कृत्यास्मिन्वाक्ये पूर्वोक्तानष्टौ यागाननूद्य विश्वदेवदेवतारूपो गुणस्तत्र विधेयः स्यात् । स च न संभवति । तेषूत्पत्तिविधावेव प्रत्येकं देवतायाः कथनात् । तासां चोत्पत्तिशिष्टत्वेन बलीयस्त्वात् । तेन वैश्वदेव इति कर्मनामधेयं सिद्धमिति भावः ।

तद्धितेनैवेति । यदि वैश्वदेवशब्दो देवतामात्रवाची स्यात्तर्हि तस्य यजिना सामानाधिकरण्यसंपादनार्थं देवताविशिष्टे लक्षणाश्रयणीया स्यात् ।

हि तद्धितस्मरणम् । तत्रास्यशब्दस्य तद्धितान्तर्गतस्य यद्यपि सूक्तहविषोरिति स्मृतेः सूक्ते हविषि वा मुख्यत्वमवगतं तथापि सर्वनाम्नामुपस्थितवाचित्वात् सूक्तहविषोश्चात्रानुपस्थितत्वाद्यजेतेत्युपस्थितं यागमेवास्यशब्दोऽभिधत्त इति न यागे मत्वर्थलक्षणा । विश्वदेवरूपैकदेवताविधानाच्च न वाक्यभेदः ।

नापि तत्प्रख्यशास्त्रान्नामत्वम् । यत्र हि विधित्सितो गुणोऽन्यतः प्राप्तः तत्र तत्प्रख्यशास्त्रान्नामधेयत्वम् । यथाग्निहोत्रशब्दे । अत्र चाग्नेयादयोऽष्टौ यागाः प्रकृताः । तत्रामिक्षायागे यद्यपि विश्वेदेवाः प्राप्ताः वैश्वदेव्यामिक्षेति तथापि सप्तसु तेषामप्राप्तत्वाद्वैश्वदेवेन यजेतेत्यनेन तत्र तद्विधाने न तत्प्रख्यशास्त्रमन्यत् येन तद्वशान्नामत्वं स्यात् ।

न चामिक्षायागस्यैवैतन्नामेति वाच्यम् । वैश्वदेवेन यजेतेति वाक्यवैयर्थ्यापत्तेः । वैश्वदेवशब्दस्यामिक्षायागमात्रनामत्वे स एव यागोऽनेनानूद्येत ।

---

परं तु सा देवतास्येत्यर्थस्तद्धितप्रत्ययेनैव तत्रोक्तो भवति । तत्रास्येति । सा देवतास्येति यस्तद्धितप्रत्ययार्थस्तदन्तर्गतेनास्येत्यनेन सर्वनाम्ना सूक्तं हविर्वा ग्राह्यं भवतीति सूक्तहविषोरिति स्मृत्या बोधितम् । यद्यपि बोधितं तथापि तत्प्रायोदर्शनानुसारादुक्तम् । न तु तयोरेवार्थयोस्तद्धितप्रत्यय इति नियमः । उपस्थितवस्तुपरामर्शो हि सर्वनाम्नां स्वभावः । तथा च विश्वदेवा देवता अस्य यागस्य स यागो वैश्वदेवशब्देनैवोक्तो भवतीति न मत्वर्थलक्षणायाः प्रयोजनम् । विश्वदेवरूपेति । एकशब्दः केवलवाची । अत्र केवलं देवताविधानमेव नान्यत्किंचिदत्र विधेयतया निर्दिश्यते इति न वाक्यभेदः । अष्टौ यागा इति । वैश्वदेवेन यजेतेत्यनेन प्रकृताष्टयागेषु विश्वदेवरूपदेवता विधीयते । तत्र वैश्वदेव्यामिक्षेत्येवं विहिते सप्तमे यागे केवलं विश्वदेवरूपा देवता प्राप्ता भवति नत्वन्येषु सप्तसु । तथा च नात्र विश्वदेवदेवतारूपगुणप्रापकमन्यशास्त्रं वर्तत इति भावः ।

नचामिक्षेति । पूर्वप्रदर्शितवाक्याष्टकमध्ये सप्तमेन वैश्वदेव्यामिक्षेति वाक्येन विहितो यो विश्वदेवदेवताक आमिक्षाद्रव्यकश्च यागविशेषस्तस्यैकस्यैवैतद्वैश्वदेव इति नामधेयमस्तु । तस्य च यागविशेषस्य विश्वदेवदेवताकत्वेन वैश्वदेवशब्दोपपत्तेः । तथा च तत्प्रख्यशास्त्रात्कर्मनामधेयत्वमत्र वक्तुंशक्यमित्याशयः । वैयर्थ्यापत्तेरिति । वैश्वदेवेन यजेतेति ह्यनुवादवाक्यम् । वैश्वदेव इति संज्ञाशब्देनानुवादादयं संज्ञाशब्द इति ज्ञाप्यते । तस्योपयोगश्च प्राचीनप्रवणदेशविधानं वैश्वदेवसंज्ञकेष्वष्टसु भवतीति । यदि चैकस्य सप्तमस्यामिक्षायागस्यैव सा संज्ञा स्यात्तर्हि तत्रैकत्रैव प्राचीन-

न च तदनुवादेनास्ति किंचित्कृत्यम्। प्राचीनप्रवणे वैश्वदेवेन यजेत ( मै. सं. १।१०।७ ) इति विधीयमानस्य प्राचीनप्रवणदेशस्य विनाप्येतद्वाक्यमामिक्षायाग एव संबन्धोपपत्तेः। विश्वदेवसंबन्धात्तस्य।

आग्नेयाद्यशेषप्रकृतयागनामत्वे तु न वैश्वदेवेन यजेतेति वाक्यानर्थक्यम्। तदा ह्यनेनाष्टौ यागा अनूद्यन्ते। अनुवादेन चैकप्रतीत्यारूढत्वात्समुदितानामष्टानामपि वैश्वदेवशब्दो नामधेयं सिध्यति। एवं च प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्देनाष्टौ यागाननूद्य प्राचीनप्रवणविधानं तत्र सिद्धं भवति। तद्वाक्यस्यासत्त्वेऽनेन वाक्येनामिक्षायाग एव प्राचीनप्रवणदेशसंबन्धः स्यात्। अतश्चाष्टसु यागेषु प्राचीनप्रवणदेशसंबन्ध एवैतद्वाक्यप्रयोजनम्। एवं च वैश्वदेवशब्दोऽष्टानां नामधेयम्।

न च तत्र तत्प्रख्यशास्त्रं निमित्तं संभवति। सप्तसु विश्वदेवाप्राप्तेः। अतो न वैश्वदेवशब्दस्य तत्प्रख्यशास्त्रान्नामधेयत्वमिति।

नापि तद्व्यपदेशात्। तादृशस्य व्यपदेशस्यानुपलम्भात्। अतश्च वैश्वदेवशब्दस्य नामधेयत्वे उक्तप्रकारचतुष्टयस्यानिमित्तत्वादुत्पत्तिशिष्टगुणबलीयस्त्वमेव निमित्तम्। तथा हि– वैश्वदेवेन यजेतेत्यत्र न तावदप्रकृतकर्मा-

---

प्रवणत्वं स्यात्। तच्च संज्ञामन्तरेणापि तत्रैव सिद्धं भवति। प्राचीनप्रवण- इति वाक्ये वैश्वदेवशब्दस्य योगार्थेन सप्तमस्यैकस्यैव तत्रोपस्थितेरिति भावः। न च तदनुवादेनेति। तस्यामिक्षायागस्य यो वैश्वदेवेन यजेतेत्ययमनुवादस्तस्य न कश्चिदुपयोगः संभवतीत्यर्थः। विनाप्येतद्वाक्यमिति। संज्ञाबोधकं वैश्वदेवेन यजेतेत्यनुवादवाक्यं विनापीत्यर्थः। वैश्वदेवेत्यष्टानां नामधेयं चेद्वैश्वदेवेन यजेतेत्यनुवादवाक्यस्योपयोगो भवतीत्याह—आग्नेयेति। अनेन। वैश्वदेवेन यजेतेत्यनुवादवाक्येन। अनुवादेन चेति। वैश्वदेव इत्येकेनैव शब्देनाष्टानामनुवादाद्वैश्वदेवशब्दादेकेनैव रूपेण सर्वेषां प्रतीतिर्जायमानत्वादित्यर्थः। तत्र सिद्धमिति। अष्टस्वपि यागेषु सिद्धं भवतीत्यर्थः। तद्वाक्यस्य। वैश्वदेवेन यजेतेत्यनुवादवाक्यस्य। अनेन वाक्येन। प्राचीनप्रवणे वैश्वदेवेन यजेतेत्यनेन। एवं चेति। अष्टानां नामधेये स्वीकृतेऽनुवादवाक्यस्य प्रयोजनसत्त्वाद्वैश्वदेवशब्दोऽष्टानां नामधेयमित्यङ्गीकार्यम्। तदर्थं वैश्वदेवेन यजेतेत्यत्र यजधातुना यागाष्टकस्य निर्देश इति वक्तव्यम्। तथा च कर्मनामधेयत्वानङ्गीकारे विश्वदेवदेवताया यागाष्टकेन संबन्धोऽनेन विधेयस्तस्य प्रापकं शास्त्रं नास्तीति नात्र तत्प्रख्यशास्त्रान्नामधेयत्वमिति सिद्धम्। अप्रकृतेति।

नुवादेन देवताविधानं संभवति । तेषामत्रानुपस्थितेः । नापि देवताविशिष्ट-कर्मान्तरविधानं संभवति । गौरवापत्तेः । अष्टौ हवींषि ( तै. ब्रा. १।६।३।४, मै. सं. १।१०।८ ) इत्यनन्यगतिकलिङ्गविरोधात् ।

अतोऽनेन प्राकृतकर्मानुवादेन देवता विधीयन्त इति वक्तव्यम् । तत्रामिक्षायागे विश्वदेवप्राप्तेः सप्तसु यागेष्वनेन वाक्येन विश्वेदेवा विधीयन्त इति वक्तव्यम् । न च तत्संभवति । तेषामुत्पत्तिशिष्टाग्न्याद्यवरोधात् । आकाङ्क्षया हि संबन्धो भवति । आग्नेयादियागानां हि देवताकाङ्क्षा उत्पत्तिशिष्टैरग्न्यादिभिरेव निवृत्तेति न तत्र विश्वदेवविधानं युक्तम् । अतश्चोत्पत्तिशिष्टगुणबलीयस्त्वाद्वैश्वदेवशब्दस्य कर्मनामधेयत्वमिति । यथाहुः—

गुणान्तरावरुद्धत्वान्नावकाशो गुणोऽपरः ।
विकल्पोऽपि न वैषम्यात्तस्मान्नामैव युज्यते ॥
( त. वा. १।४।११ ) इति ।

---

उक्तयागाष्टकातिरिक्तकर्मणोत्रानुपस्थितत्वान्न यजेतेत्यनेन तस्यानुवादः संभवतीत्यर्थः । अथ वैश्वदेवेन यजेतेत्यत्र यजिना न प्रकृतस्य यागाष्टकस्य नाप्यप्रकृतस्य कस्यचित्कर्मणोनुवादः । किंतु स्वतन्त्रमेव कर्मान्तरमनेन विधीयतामिति चेत्तत्राह—नापि देवतेति । गौरवापत्तेरिति । स्वातन्त्र्येण कर्मविधायकत्वे तत्र हविर्द्रव्यविशेषः फलविशेषश्च कल्पनीय इति गौरवमित्यर्थः । अष्टौ हवींषीति । वैश्वदेवेन यजेतेत्यनेनानूदितस्य यागस्य संबन्धेनाष्टौ हवींषीत्युक्तम् । तच्च प्रकृतस्य यागाष्टकस्यानुवाद एव संगच्छते । तत्र हविरष्टकसद्भावात् । नत्वप्रकृतस्य कस्यचित्कर्मणोनुवादे नापि कर्मान्तरविधायकत्वे संगच्छते । तत्र हविरष्टकासंभवात् । इति वक्तव्यमिति । वैश्वदेवशब्दस्य कर्मनामधेयत्वानङ्गीकार इति शेषः । गुणान्तरेति । विश्वदेवदेवतारूपगुणापेक्षया यद्गुणान्तरमग्न्यादिदेवतारूपमुत्पत्तिशिष्टं तेनाग्नेयादियागानामवरुद्धत्वात्तत्र वैश्वदेवेन यजेतेति वाक्यविहितविश्वदेवदेवतारूपोपरो गुणोवकाशं न लभते । वैषम्यं साम्याभावः । उत्पत्तिशिष्टोत्पन्नशिष्टयोरत एव प्रबलदुर्बलयोर्गुणयोः साम्याभावान्न विकल्पः । तथा च वैश्वदेवेन यजेतेति वाक्यविहितगुणस्यानुपयोगेन वाक्यवैयर्थ्यमिति तदन्यथानुपपत्त्या कर्मनामधेयत्वं सिद्धं भवति । नन्वेवं नामधेयत्वाङ्गीकारस्यावश्यकत्वेपि कथं यागाष्टकस्य तन्नामधेयमिति वक्तुं शक्यते । सप्तस्वाग्नेयादियागेषु विश्वदेवसंबन्धाभावादिति चेन्न । छत्रिन्यायेन सर्वेषां बोधसंभवात् । तदनुसारेण रूढिशक्त्यङ्गीकारेणादोषात् ।

अन्ये त्वाचार्या आहुः । यः शब्दो यत्र कर्मणि यद्गुणसंबन्धं बोधयति स चेत्संबन्धः शास्त्रान्तरप्रतिपन्नः तदा तस्य शब्दस्य तन्नामधेयत्वं तत्प्रख्यशास्त्रात् । तच्च शास्त्रान्तरं विधिर्वार्थवादो वेत्यत्रानादरः । तत्राग्निहोत्रशब्देऽग्निसंबन्धबोधकं शास्त्रान्तरं विधिरेव । वैश्वदेवशब्दश्च विश्वदेवसंबन्धं कर्मणि बोधयति । विश्वदेवसंबन्धश्चाष्टसु यागेषु 'यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्' ( तै. ब्रा. १।४।१०।५ ) इत्यर्थवादावगतः ।

न च विधिरेव तत्प्रख्यशास्त्रं नार्थवाद इत्यत्र किंचित्प्रमाणमस्ति ।

---

एवं न्यायसुधाकृन्मतमुपपाद्येदानीं पार्थसारथिमिश्राणां मतमुपपादयति–अन्ये त्विति । अयं भावः । नामधेयभूतोयं वैश्वदेवशब्दो न देवतार्थकतद्धितप्रत्ययेन साधनीयः । किंतु विश्वदेवानामयं वैश्वदेव इत्येव तस्येदम् ( पाणि. ४।३।१२० ) इति सूत्रेणेदमर्थे विहितेनाण्प्रत्ययेन साधनीयः । तथा च वैश्वदेवशब्दस्य विश्वदेवसंबन्धीत्यर्थः । तच्च संबन्धिभूतमत्र कर्मैव । विश्वदेवानां कर्मणि संबन्धश्च यागदेवतात्वेन यागकर्तृत्वेन चेति द्विधा । तत्र यद्यपि देवतात्वेन संबन्ध एकस्मिन्नामिक्षायाग एव तथापि कर्तृत्वेन संबन्धोष्टस्वपि यागेषु वर्तते । तथा च वैश्वदेवशब्दस्य कर्मनामधेयत्वानङ्गीकारे वैश्वदेवशब्देन बुभुत्सितो योयमष्टसु यागेषु संबन्धः स ' यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम् (तै· ब्रा. १।४।१०, इत्यर्थवादवाक्येनावगम्यत इत्यतस्तत्प्रख्यशास्त्रात्तद्यागाष्टकस्य नामधेयत्वं सिध्यति । किंच नामधेयत्वानङ्गीकारे वैश्वदेवेन यजेतेत्यस्यार्थनिर्वचनप्रसङ्गे उक्तार्थवादवाक्यानुसारेण तस्येदमित्यर्थकाण्प्रत्ययान्त एव वैश्वदेवशब्दो ग्राह्यो भवति । न तु देवतार्थकतद्धितप्रत्ययान्तः । तथा च पूर्वस्मिन्पक्षेर्थवादाननुसरणं दोषः । किंचास्मिन्पक्षे वैश्वदेवेति नामधेयं यागाष्टकस्य योगरूढ्या निर्वक्तुं शक्यं भवति । रूढिर्यत्र कल्पनीया भवति तत्र केवलरूढ्यपेक्षया योगरूढिकल्पना ज्यायसी । अनादर इति । तत्प्रख्यमन्यशास्त्रं विधिरूपमेवेत्येवमभिनिवेशो न कार्य इत्यर्थः । विधिरेवेति । न्यायसुधाकृन्मते यदग्नये च प्रजापतये च सायं जुहोतीति विधिः । पार्थसारथिमिश्रमतेग्निर्ज्योतिरिति मन्त्रलिङ्गानुमिताग्निसंबन्धबोधकश्रुतिचोदितो विधिरिति भावः । इत्यर्थवादेति । अस्मिन्नर्थवादे वैश्वदेवशब्दस्य या निरुक्तिः प्रदर्शिता तया यागाष्टके विश्वदेवसंबन्धोवगम्यत इति भावः । न च विधिरेवेति । विधिवाक्यमेवान्यशास्त्रं ग्राह्यमित्यत्र प्रमाणं नास्ति । किंच विधेरुत्पन्नाकाङ्क्षा अर्थवादेनापि पूर्यते । यथा रात्रिसत्रविधेः फलाकाङ्क्षा प्रतितिष्ठन्ति ह वै य एता रात्रीरुपयन्तीत्यर्थवादावगतेन प्रतिष्ठाफलेन पूर्यते ।

अत एव ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र ज्योतिष्टोमशब्दः ' तानि वा एतानि ज्योतींषि य एतस्य स्तोमाः ' ( तै. ब्रा. १।५।११।२ ) इत्यर्थवादावगतं ज्योतिःसंबन्धं निमित्तीकृत्य सोमयागे प्रवर्तमानस्तत्प्रख्यशास्त्रान्नामधेयं भवति। एवं प्रकृतेऽपि द्रष्टव्यम्। पञ्चमप्रकारकल्पने प्रमाणाभावात्। अत एव वैश्वदेवाधिकरणे ( १।४।१३ ) वार्तिककारैरेवमुपसंहृतं ' तत्प्रख्यतयैव सर्वेषां नामधेयत्वम्' इति। यच्चोत्पत्तिशिष्टगुणबलीयस्त्वमुक्तं तद्गुणविध्यसंभवे युक्त्यभ्युच्चयमात्रम्। तत्सिद्धं तत्प्रख्यशास्त्राद्वैश्वदेवशब्दस्य कर्मनामधेयत्वमिति।

ननु पशुसोमाधिकरणे ( २।२।१० ) ऐन्द्रवायवं गृह्णातीत्यादौ न यजि-

---

यथा वाक्ताः शर्करा उपदधाति (तै.ब्रा.३।१२।५) इत्यत्र केनाक्ता इत्युत्पन्नाकाङ्क्षा तेजो वै घृतमित्यर्थवादेन पूर्यते। तथा चार्थवादवाक्यस्य न केवलं विधिप्रशंसारूपमेवैकं प्रयोजनम्। किंतु संभवति चेदन्यदपि स्वीक्रियते। अतः प्रकृते तत्प्रख्यं चान्यशास्त्रमित्यत्र शास्त्रपदेनार्थवादवाक्यस्य ग्रहणमुचितमेव। अन्यशास्त्रमित्यत्र शास्त्रपदेनार्थवादवाक्यग्रहणे प्रसिद्धं सर्वसंमतं चोदाहरणं प्रदर्शयति—अत एवेति। ज्योतिष्टोमशब्दस्य कर्मनामधेयत्वानङ्गीकारे ज्योतीरूपः स्तोमो यस्मिन्निति बहुव्रीहिणा यागविशेषणं तद्ग्राह्यम्। तादृशविशेषणबोधितं यज्ञीयस्तोमानां ज्योतिष्ट्वं तत् तानि वा एतानि ज्योतींषि य एतस्य स्तोमाः इत्यर्थवादवाक्यावगतं भवतीत्यतो ज्योतिष्टोमेति कर्मनामधेयं सिध्यति। यज्ञे साम्नां संख्यापरिच्छेदार्थं याः शलाका औदुम्बर्यो गृह्यन्ते ताः कुशा इत्युच्यन्ते। तादृशानां कुशानां त्रिकं स्तोमशब्देनोच्यते।

तत्प्रख्यतयैवेति। मत्वर्थलक्षणाभयं वाक्यभेदभयं तद्व्यपदेशश्चेत्येतत्त्रितयातिरिक्तात्कारणाद्यत्र नामधेयत्वं तत्र सर्वत्र तत्प्रख्यशास्त्रादेव नामधेयत्वमिति वार्तिकाशयं वर्णयन्ति। किमर्थं तर्हि वार्तिककारैस्तत्रोत्पत्तिशिष्टगुणबलीयस्त्वमुक्तं तत्राह-यच्चोत्पत्तिशिष्टेति। यत्र गुणविधित्वं सप्रयोजनं संभवति तत्र कर्मनामधेयत्वाङ्गीकारो न युक्त इत्याशङ्कानिराकरणायोत्पत्तिशिष्टगुणबलीयस्त्वोक्त्या गुणविध्यसंभवे युक्तिवादः केवलं तैः प्रदर्शित इति भावः।

ननु पशुसोमेति। जैमिनीये द्वितीयाध्याये द्वितीयपादे षष्ठाधिकरणमिदम्। तत्र हीत्थमुक्तम्। सोमेन यजेतेति श्रूयते। तत्र चैन्द्रवायवं गृह्णाति मैत्रावरुणं गृह्णाति इत्यादीन्यपि वाक्यानि श्रूयन्ते। तत्रैन्द्रवायवादिवाक्ये-

कल्पनं सोमेन यजेतेति प्रत्यक्षयजिश्रुतेरित्युक्तम्। तेन न्यायेन वैश्वदेव्या- मिक्षेत्यत्रापि यजिकल्पना मास्तु। वैश्वदेवेन यजेत (मै. सं. १।१०।८) इत्यत्र प्रत्यक्षयजिश्रुतेः। एवं चानेनैव वाक्येन देवताविशिष्टकर्मविधान- मस्तु। तस्य च द्रव्याकाङ्क्षायां वैश्वदेव्यामिक्षेति द्रव्यविधानमस्तु। एवं च न वाक्यद्वयस्याप्यनुवादत्वम्। नाप्यष्टौ हवींषीत्यनन्यगतिकलिङ्गविरोधो भवेदिति चेत्—मैवम्।

---

यागा विधीयन्ते। इन्द्रवाय्वादिप्रातिपदिकैर्विहितानां यागानां समुदाय- स्तत्रानूद्यत इति पूर्वपक्षः। सिद्धान्तस्तु सोमेन यजेतेत्ययमेव विधिः। यजधातोर्निर्देशात्। ऐन्द्रवायवादिवाक्येषु तु ग्रहणं विधीयते न तु यजनम्। तथा च तत्र यजधातोरनिर्देशान्न स यागोत्पत्तिविधिः। न चात्र विधीय- मानस्यैन्द्रवायवग्रहस्य यागसंबन्धार्थमनिर्दिष्टोऽपि यजिस्तत्र प्रकल्पनीय इति वाच्यम्। ऐन्द्रवायवं गृह्णातीत्येतद्वाक्यार्थे यागस्याप्रवेशात्। ऐन्द्र- वायवग्रहस्य यागसंबन्धस्तु प्रकरणपाठेन वाक्यैकवाक्यतया संपादनीय इति। तद्वत्प्रकृते वैश्वदेवेन यजेतेत्यत्र यजधातोर्निर्देशात्तदेव वाक्यं यागो- त्पत्तिविधायकं स्यात्। न तु वैश्वदेव्यामिक्षेति। तत्र यजधातोर्निर्देशाभावेन यागस्याप्रतीयमानत्वात्। तथा च वैश्वदेव्यामिक्षेत्यत्र वैश्वदेवीशब्देन वैश्वदेवेन यजेतेति विहितं विश्वेदेवदेवताकं यागमनूद्यामिक्षारूपद्रव्यमात्र- विधानं क्रियते। एवं चैकं वाक्यं यागविधायकमपरं च गुणविधायकमिति न कस्याप्यनुवादत्वम्। विधिसंभवेनुवादमात्रकल्पनं च न न्याय्यम्। उक्त— (पृ. २३९-१६) वाक्याष्टकमध्ये वैश्वदेव्यामिक्षेत्येतद्भिन्नं यद्वाक्यसप्तकं तत्रा- गत्या यजिं प्रकल्प्य यागविधानमस्तु। न तु तथा वैश्वदेव्यामिक्षेत्यत्र। तत्र विधायकवाक्यान्तरदर्शनात्। एवं च वैश्वदेवेन यजेतेत्यत्र यागविधावपि न यागाष्टकातिरिक्तः कश्चिन्नवमो यागस्तत्र विहितो भवतीत्यतोऽष्टौ हवींषी- त्येतदप्युपपद्यते। वैश्वदेव्यामिक्षेत्यत्र यज्यकल्पनेन लाघवं च। एवं वैश्व- देवेन यजेतेति वाक्यस्योपपत्तौ सत्यां वैश्वदेवशब्दस्य कर्मनामधेयत्वं प्रकल्प्य तद्वाक्यस्यानुवादमात्रत्वप्रकल्पनं न युक्तं भवतीति शङ्काशयः। समाधत्ते— मैवमिति। अयं भावः। वैश्वदेव्यामिक्षेत्यत्र कारणान्तरेण यजिकल्पना- वश्यकी चेत्तत्रोत्पत्तिविधित्वाभावे यजेरनिर्देशादिति हेतुः शिथिलः। न च तत्र सत्यामपि यजिकल्पनायां प्रत्यक्षयजिश्रुत्या वैश्वदेवेन यजेतेत्यत्रैव यागविधिरस्त्विति वाच्यम्। यागस्य हि द्रव्यं देवता चेति रूपद्वयम्। वैश्व- देवेन यजेतेत्यत्र देवता निर्दिष्टा द्रव्यं न निर्दिष्टम्। वैश्वदेव्यामिक्षेत्यत्र तु द्वयमपि निर्दिष्टं भवतीति तत्रैवोत्पत्तिविधित्वाङ्गीकारस्योचितत्वात्। किं

वैश्वदेव्यामिक्षा ( मै. सं. १।१०।१ ) इत्यत्र यज्यकल्पने आमिक्षा किमनुवादेन विधीयत इति वक्तव्यम् । विश्वदेवानुवादेन द्रव्यविधाने द्रव्यस्य देवताङ्गत्वमेव स्यात् । न यागाङ्गत्वम् । किंच वैश्वदेवीशब्दो देवतातद्धितत्वादामिक्षान्तर्गतत्वेन श्रुत इत्युक्तम् । तत्र विश्वदेवानुवादेन द्रव्यविधानं वैश्वदेवीशब्देनैव कर्तव्यम् । पदश्रुतेः । यथा भावनायां करणसमर्पणं धातुनैव क्रियते पदश्रुतेः न तूपपदेनेत्युक्तं भावार्थाधिकरणे तद्वत् । तत्र च वषट्कर्तुः प्रथमभक्ष इतिवदेकप्रसरताविरोधः । अतो यागानुवादेनापि द्रव्यविधानार्थं वैश्वदेव्यामिक्षेत्यत्र यजिकल्पनं तावदवश्यं कर्तव्यम् ।

अतश्च पशुसोमाधिकरणन्यायवैषम्यम् । ऐन्द्रवायवं गृह्णातीत्यत्र देवताविशिष्टग्रहणविधानेन यज्यकल्पनात् । यजिकल्पने च वैश्वदेव्यामिक्षेत्यत्रैव द्रव्यदेवताविशिष्टकर्मविधानं युक्तम् । रूपद्वयश्रवणात् । एवं चाग्नेयोऽष्टा

---

त्वयं युक्तिवादो वैश्वदेव्यामिक्षेत्यत्र यजिकल्पनायां सत्यां संभवतीत्यतस्तत्र तस्या आवश्यकत्वं साधयति—वैश्वदेव्यामिक्षेत्यत्रेति । किमनुवादेनेति । वैश्वदेव्यामिक्षेति वाक्ये पदद्वयम् । तत्र प्रथमे वैश्वदेवीति पदे प्रकृतिप्रत्ययरूपं भागद्वयम् । तत्र प्रकृत्यर्थो विश्वदेवदेवता । प्रत्ययार्थो हविर्द्रव्यविशेषः । आमिक्षापदार्थस्तु तप्ते पयसि दध्ना मिश्रिते तत्र घनीभूतोऽर्थः । एषु त्रिषु किमनुवाद्यं किंच विधेयमिति विचारः । तत्र वैश्वदेवेन यजेतेति त्वदभिमतोत्पत्तिविधौ विश्वदेवरूपा देवता प्रतिपादितेति तस्याः सिद्धत्वात्सैवात्रानूद्यते । अप्राप्तं च हविर्द्रव्यं विधीयत इति वक्तव्यम् । परं त्वत्र यज्यकल्पने यागस्यानिर्देशादामिक्षाया यागाङ्गत्वमिष्टं न सिध्येत् । यजिकल्पने तु यागमुद्दिश्य वैश्वदेव्यामिक्षा विधीयत इतीष्टं सिध्यति । किं चात्र यजेरकल्पने देवतामुद्दिश्य विधीयमानोऽर्थः किमामिक्षापदेनोच्यमानः प्रत्ययेनोच्यमानो वा । अन्यतरस्य विधेयत्वेन संबन्धे पश्चात्तयोः पूर्वोक्त-( पृ. २०७-१७ ) प्रकारेण सामानाधिकरण्यं भवेत् । तत्रामिक्षापदेनोच्यमानोऽर्थो विधेयो न संभवति । समानपदश्रुतेः किंच प्रकृत्यर्थस्य प्रत्ययार्थं विनान्यत्रान्वयस्यायुत्पन्नत्वान्न प्रकृत्यर्थोद्देशेनामिक्षापदार्थविधानं संभवति । अथ प्रकृत्यर्थमुद्दिश्य प्रत्ययार्थो विधेय इति चेदेकप्रसरताभङ्गदोषः । तत्प्रकारश्च प्रागुक्तः ( पृ. १७४-५ ) । वैश्वदेवीशब्देनैव । वैश्वदेवीशब्दान्तर्गतप्रत्ययेनैव । भावार्थाधिकरण इति । इदं प्रागुक्तम ( पृ. ४८-११ ) । अतश्चेति । वैश्वदेवेन यजेतेत्यत्रोत्पत्तिविधित्वाङ्गीकारेऽपि वैश्वदेव्यामिक्षेत्यत्र यजिकल्पनस्यावश्यकत्वाच्चेत्यर्थः । यज्यकल्पनादिति । प्रकृते तु वैश्वदेव्यामिक्षेत्यत्र यजिकल्पनस्यावश्यकत्वमिति वैषम्यं

कपालः। सौम्यश्चरुः (मै. सं. १।१०।१) इत्यादिवाक्यैर्वैश्वदेव्यामिक्षेति वाक्यस्य प्रायपाठो रक्षितो भवति। अन्यथा हि तेषु सर्वेषु द्रव्यदेवतासंबन्धकल्पितयागविधानमत्र च द्रव्यमात्रविधानमिति वैरूप्यं प्रसज्येत।

किंच वैश्वदेवेन यजेतेत्यत्र वैश्वदेवशब्दस्य देवतासमर्पकत्वे 'यद्विश्वेदेवाः समयजन्त तद्वैश्वदेवस्य वैश्वदेवत्वम्' इत्येतस्यार्थवादस्यात्यन्तमेव निरालम्बनत्वं स्यात्। एतदर्थवादाद्धि वैश्वदेवशब्दो विश्वदेवकर्तृकत्वेन कर्मणि प्रवृत्त इति ज्ञायते। न देवतासमर्पकत्वेन।

किंच वैश्वदेवेन यजेतेत्यस्य यागविधित्वे आमिक्षाया नोत्पत्तिशिष्टत्वम्। तथा च तया न वाजिनं बाधितुं शक्यत इति उभयोरपि आमिक्षावाजिनयोर्यागाङ्गत्वं स्यात्। तथा च विकल्पः। स चाष्टदोष इति। तस्मा-

---

बोध्यम्। प्रायपाठ इति। यागविधायकवाक्यमध्ये पठितस्य वाक्यस्य यागविधायकत्वमेवोचितम्। अन्यथा क्रमभङ्गः स्यादिति भावः। देवतासमर्पकत्व इति। विश्वेदेवा देवता अस्येति देवतार्थकतद्धितप्रत्ययं गृहीत्वा प्रकृतिभूतस्य विश्वदेवशब्दस्य यागीयदेवतारूपार्थप्रतिपादकत्वे सत्येव वैश्वदेवेन यजेतेत्यस्योत्पत्तिविधित्वं वक्तुं शक्यते। यदि च विश्वदेवकर्तृकत्वाद्यागस्य विश्वदेवानामयमित्यर्थे तस्येदमित्यणप्रत्ययेन साधितो वैश्वदेवशब्दो गृह्येत तर्हि तस्य वाक्यस्य यागविधायकत्वं न स्यात्। द्रव्यस्येव देवताया अपि तद्वाक्ये निर्देशाभावात्। तथा च वैश्वदेवेन यजेतेति वाक्यस्योत्पत्तिविधित्वं मन्यमानेन तत्रत्यवैश्वदेवशब्दस्य देवताप्रतिपादकत्वमवश्यं स्वीकार्यं भवतीत्याशयः।

नोत्पत्तिशिष्टत्वमिति। आमिक्षाया उत्पत्तिशिष्टत्वादेव तत्र वाजिनद्रव्यस्य प्रवेशासंभवाद्वाजिभ्यो वाजिनमिति यागान्तरविधानमिति प्रागुक्तम् (पृ २१९-१)। यागाङ्गत्वमिति। वाजिभ्यो वाजिनमित्यत्र वाजिभ्य इत्यनेन वाजोऽन्नमामिक्षारूपमास्ति येषां ते वाजिन इति वाजिशब्दस्युत्पत्त्या वाजिशब्देन विश्वदेवानामनुवादसंभवाद्वैश्वदेवयागाङ्गत्वं स्यादित्यर्थः। विकल्प इति। वैश्वदेवयाग एव स्वेच्छया कदाचिदामिक्षा द्रव्यं कदाचिद्वाजिनं द्रव्यं ग्राह्यं स्यादित्येवमव्यवस्थितविकल्पः स्यादित्यर्थः। अव्यवस्थितविकल्पे चाष्टौ दोषा भवन्ति। तथाहि—

प्रमाणत्वाप्रमाणत्वपरित्यागप्रकल्पने।
प्रत्युज्जीवनहानिभ्यामष्टौ दोषाः प्रकीर्तिताः॥

द्वैश्वदेव्यामिक्षेत्यत्रैव यागविधानम्। इतरस्य त्वनुवादत्वम्। अनुवादत्वे च यथा नानर्थक्यं तथोक्तमित्यास्तां तावत्। तत्सिद्धं वैश्वदेवशब्दस्य कर्मनामधेयत्वम्। तदेवं निरूपितं मत्वर्थलक्षणादिप्रकारचतुष्टयनिरूपणेन नामधेयस्य विधेयार्थपरिच्छेदकत्वेनार्थवत्त्वम्।

अनर्थहेतुकर्मणः सकाशात्पुरुषस्य निवृत्तिकरत्वेन निषेधानां पुरुषार्थानुबन्धित्वम्। तथा हि—यथा विधयः प्रवर्तनामभिदधतः स्वप्रवर्तकत्वनिर्वाहार्थं विधेयस्य यागादेः श्रेयःसाधनत्वमाक्षिपन्तः पुरुषं तत्र प्रवर्तयन्ति एवं 'न कलञ्जं भक्षयेत्' इत्यादयो निषेधा अपि निवर्तनामभिदधतः स्वनि-

---

अयमर्थः। प्रमाणत्वाप्रमाणत्वयोः परित्यागप्रकल्पने इत्येवं द्वंद्वद्वयगर्भः षष्ठीतत्पुरुषः। यथासंख्येनान्वयः। प्रमाणत्वस्य परित्यागः, अप्रमाणत्वस्य प्रकल्पनं चेति दोषद्वयम्। तथा परित्यक्तस्य प्रमाणत्वस्य प्रत्युज्जीवनम्, प्रकल्पितस्याप्रमाणत्वस्य हानिश्चेति दोषद्वयम्। मिलित्वा दोषचतुष्टयम्। तच्च विकल्पघटके वाक्यद्वये प्रत्येकमिति संकलनयाष्टौ दोषा भवन्ति। यथा अत्र आमिक्षापक्षे वाजिनवाक्यप्रमाणत्वस्य परित्यागः (१)। वाजिनवाक्याप्रमाणत्वस्य प्रकल्पनम् (२)। वाजिनपक्षे परित्यक्तस्यामिक्षावाक्यप्रमाणत्वस्य प्रत्युज्जीवनम् (३)। वाजिनपक्षे प्रकल्पितस्यामिक्षावाक्याप्रमाणत्वस्य हानिश्च (४) इति चत्वारो दोषाः। तथा वाजिनपक्षे आमिक्षावाक्यप्रमाणत्वस्य परित्यागः (५)। आमिक्षावाक्याप्रमाणत्वस्य प्रकल्पनम् (६)। आमिक्षापक्षे परित्यक्तस्य वाजिनवाक्यप्रमाणत्वस्य प्रत्युज्जीवनम्(७)। आमिक्षापक्षे प्रकल्पितस्य वाजिनवाक्याप्रमाणत्वस्य हानिः (८) इति।

एवं नामधेयरूपं वेदभागं निरूप्येदानीं निषेधरूपं वेदभागं निरूपयति—अनर्थेति। अनर्था नरकादयस्तद्धेतुभूतं ब्रह्महत्यादिकं कर्म तस्मात्कर्मणः सकाशात्पुरुषं निषेधवाक्यानि निवर्तयन्ति। अन्यथा ब्रह्महत्यादिकं कर्म कुर्वतः पातित्योत्पादनेन यागादावनधिकारात्पुरुषार्थप्राप्तिर्न स्यात्। कदाचित्पूर्वं यागोनुष्ठितश्चेत्तदपूर्वात्प्राप्स्यमानं फलं मध्ये प्रतिबन्धकसद्भावान्न झटिति प्राप्नुयात्। एतावता यागे तज्जन्ये फले वा यत्प्रतिबन्धकं कर्म तादृशप्रतिबन्धकापनयनद्वारा निषेधस्य पुरुषार्थसंबन्धित्वमित्यर्थः। यथा विधय इति। प्रवर्तना प्रेरणा। स्वशब्देन विधिपरामर्शः। विधेर्यत्प्रवर्तकत्वं प्रेरणाकर्तृत्वं तस्य निर्वाहः साफल्यं तदर्थमित्यर्थः। प्रयोजनज्ञानाभावे हि केवलविधिवाक्यज्ञानेपि प्रवृत्तिर्न स्यात्। कथं चिच्छ्रद्धाजाड्येन जायमानापि मन्दीभूतैव भवेदिति प्रेरणायाः साफल्यं दुरुपपादमिति भावः। एवमिति। निव-

र्वतकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणादेरनर्थहेतुत्वमाक्षिपन्तः पुरुषं ततो निवर्तयन्ति।

ननु कथं निषेधानां निवर्तनाप्रतिपादकत्वम्। यावता न भक्षयेन्न हन्तव्य इत्येवमादावव्यवधानेन नञर्थस्याभावस्य धात्वर्थेनान्वये धात्वर्थवर्जनकर्तव्यतैव सर्वत्र वाक्यार्थः प्रतीयेत। ततश्च यथा यजेतेत्यादौ यागकर्तव्यता वाक्यार्थः एवं निषेधेषु तत्तद्धात्वर्थवर्जनकर्तव्यता वाक्यार्थो न निवर्तनेति चेत्—

मैवम्। अव्यवधानेऽपि धात्वर्थस्य प्रत्ययार्थोपसर्जनत्वेनोपस्थितस्य नञर्थेनान्वयायोगात्। नह्यन्योपसर्जनमन्येनान्वेति। मा भूद्राजपुरुषमानयेत्यत्र राज्ञ आनयनान्वयित्वम्। ततश्चाव्यवधानेऽपि नञर्थस्य न धात्वर्थ-

र्तना निवृत्तिजनकव्यापारः। स्वशब्देन निषेधपरामर्शः। निषेधानां यन्निवर्तकत्वं तत्साफल्याय ते निषेधा अनर्थहेतुत्वबोधनद्वारा ततो निवर्तयन्तीत्यर्थः।

ननु कथमिति। अयमाशयः। नञो हि न निवर्तनारूपः शक्योऽर्थः। पटो नास्तीत्यादिप्रयोगान्निवर्तनाया अप्रतीतेः। किंत्वभाव एव तस्य शक्योऽर्थः। तथा च तस्य निवर्तनारूपार्थबोधकत्वं तादृशशब्दान्तरसंनिधानेन स्थलविशेष एव पर्यवस्यति। यथा वायोः सुत इत्युक्ते वायुशब्दसंनिधानेन सुतशब्दस्य भीमरूपेऽर्थे पर्यवसानं तद्वत्। निवर्तनाच प्रवर्तनाविरोधिनीति प्रवर्तनाबोधकशब्दसंनिधाने सति नञो निवर्तनारूपेऽर्थे पर्यवसानं भवेत्। तत्रापि स सुतरूपोऽर्थः साक्षादाक्षेपेण वा वायुना संबद्धश्चेदेव तस्य पर्यवसानं भीमे भवति। तथात्र नञर्थः प्रवर्तनया संबद्धश्चेदेव निवर्तनायां पर्यवस्येन्नान्यथा। प्रवर्तनया संबन्धश्च प्रवर्तनाबोधकशब्दसंनिधाने वक्तुं शक्यः। प्रवर्तनाबोधकः शब्दश्च लिङादिः। तथा च कलञ्जं भक्षयेन्नेति यद्युच्येत तर्हि लिङ्प्रत्ययार्थप्रवर्तनाया नञर्थे संबन्धः स्यात्। यदि च कलञ्जं न भक्षयेदिति न कलञ्जं भक्षयेदिति वोच्येत तर्हि निवर्तनाया प्रतीतिर्न स्यादिति। धात्वर्थवर्जनेति। कलञ्जं न भक्षयेदित्यस्माद्भक्षणाभावः कर्तव्यः इत्यर्थः प्रतीयते। न हन्तव्य इत्यस्माद्धननाभावः कर्तव्य इत्यर्थः प्रतीयते। तथा न कलञ्जं भक्षयेदित्यस्मात्कलञ्जभिन्नभक्षणं कुर्यादित्यर्थः प्रतीयेतेत्यर्थः। न निवर्तनेतीति। तथा च विधिमन्त्रनामधेयनिषेधार्थवादभेदेन यो वेदस्य पञ्चधा विभाग उक्तस्तत्र विधेः सकाशाद्यन्निषेधस्य भेदेनानुकीर्तनं तन्न संभवतीत्याशयः।

अव्यवधानेपीति। प्रकृत्यर्थस्य प्रत्ययार्थविशेषणत्वेनैव भानमिति नियमात्प्रत्ययार्थं मुक्त्वान्यत्रान्वेतुं धात्वर्थो नार्हतीति भावः। मा भूदिति।

नान्वयः । आरुण्यस्यैवैकहायन्या । नापि कलञ्जादिपदार्थैरन्वयः । तेषामपि कारकोपसर्जनतयोपस्थितत्वेन भिन्नपदस्य नञोऽर्थेनान्वयायोगात् । एकहायन्या इवारुण्येन ।

अतश्चान्येनान्वयायोगान्नञर्थः प्रत्ययार्थेन संबध्यते । तस्य प्राधान्यात् । क्रयभावनयेवारुण्यादीनि । तत्रापि नाख्यातांशवाच्यार्थभावनया । तस्या अपि लिङ्त्वांशवाच्यप्रवर्तनोपसर्जनत्वेनोपस्थितत्वात् । अतो लिङ्त्वांशेन नञ् संबध्यते । तस्य सर्वापेक्षया प्राधान्यात् ।

नञश्चैष स्वभावो यत्स्वसंबन्धिप्रतिपक्षबोधकत्वम् । नास्तीत्यत्र ह्यस्तीति सत्त्वशब्देन संबध्यमानो नञ् सत्त्वप्रतिपक्षमसत्त्वं गमयति । तदिह लिङर्थस्तावत्प्रवर्तना । अतस्तेन संबध्यमानो नञ् प्रवर्तनाप्रतिपक्षां निवर्तनां गमयति । विधिवाक्यश्रवणेऽयं मां प्रवर्तयतीति प्रवर्तनाप्रतीतिवन्निषेधवाक्यश्रवणेऽयं मां निवर्तयतीति निवृत्त्यनुकूलव्यापाररूपनिवर्तनायाः प्रतीतेः ।

अतश्च सर्वत्र निषेधेषु निवर्तनैव वाक्यार्थः । एवं च विधिनिषेध-

---

वृत्तिघटकत्वात्पुरुषार्थविशेषणत्वेनोपस्थितस्य राज्ञ आनयनक्रियायामन्वयो न भवतीत्यर्थः । आरुण्यस्यैवेति । अरुणयैकहायन्या सोमं क्रीणाति (तै.सं.६।१।६) इत्यत्रारुणयेति पदेनारुण्यगुण उच्यते । एकहायनीपदेनैकवर्षपरिमाणा गोव्यक्तिरुच्यते । आरुण्यगुणस्यैकहायन्याश्च धर्मधर्मिभावो यद्यपि विद्यते तथापि आरुण्यगुणविशिष्टैकहायनीत्येकहायनीनिष्ठमारुण्यमिति वा तयोर्मिथो नान्वयः । अरुणयैकहायन्येति द्वयोरपि पदयोः करणकारकविभक्त्यन्तत्वेनारुण्यस्यैकहायन्याश्च कारकोपसर्जनतयोपस्थितत्वेन तयोर्द्वयोरपि पार्थक्येन क्रियाकारकभावेन क्रियायामेवान्वयात् । तथा च तादृशे विषये संनिधानं नान्वयनियामकमिति भावः ।

तस्य प्राधान्यादिति । कलञ्जं भक्षयेदिति वाक्यस्यार्थे प्रत्ययार्थस्य प्राधान्यादित्यर्थः । तथा च यथारुण्यैकहायन्योर्मिथोऽसंबद्धयोः प्रधानीभूतक्रयभावनयैवान्वयस्तद्वदत्र नञर्थस्य प्रधानीभूतप्रत्ययार्थभावनयैव संबन्धो भवति । तस्या अपीति । शाब्दभावनायां साध्यत्वेनार्थभावनासंबन्धः प्रागुक्तः (पृ. १० प. १) । तथा चार्थभावनाभाव्यिका शाब्दभावनेत्येवं विधिवाक्यजन्यशाब्दबोधे शाब्दभावनायाः प्रवर्तनारूपायाः प्राधान्यम् । अतस्तयैव नञर्थस्य संबन्ध इति भावः । स्वसंबन्धिप्रतिपक्षबोधकत्वं नञः स्वभावः इत्यत्र प्रमाणभूतां लोकप्रतीतिं प्रदर्शयति—विधिवाक्यश्रवण इति ।

निषेधेष्विति । न कलञ्जं भक्षयेदित्यादिषु विधिप्रत्ययघटितेषु वाक्येषु

योर्भिन्नार्थत्वं सिद्धं भवति । हननादिवर्जनकर्तव्यतावाक्यार्थपक्षे तु कर्तव्यताया एवोभयत्र प्रतिपाद्यत्वात्तयोरेकार्थत्वं स्यात् । तच्च न युक्तम् । यथाहुः—

अन्तरं यादृशं लोके ब्रह्महत्याऽश्वमेधयोः ।
दृश्यते तादृगेवेदं विधानप्रतिषेधयोः ॥ इति ।

तथा—

फलबुद्धिप्रमेयाधिकारिबोधकभेदतः ।
पञ्चधात्यन्तभिन्नत्वाद्भेदो विधिनिषेधयोः ॥ इति ।

---

इत्यर्थः । निवर्तेतेत्येवकारेण तत्र विधेर्वाक्यार्थत्वं व्यवच्छिद्यते । न कलञ्जमित्यादयो निषेधविधय इत्युक्तिस्तात्पर्यार्थानुसारेण यथाकथंचिन्नेया । न तु यागविधिषु यागस्येव निषेधस्य तत्र विधेयत्वमित्यभिनिवेष्टव्यम् ।

एकार्थत्वमिति । विधेयविशेषबोधकत्वेन समानार्थत्वमित्यर्थः । अन्तरमिति । ब्रह्महत्याश्वमेधदृष्टान्तेन विधानप्रतिषेधयोरत्यन्तं भेद इति दर्शयति । अश्वमेधश्च सुकृतस्य परां काष्ठां गतः । तथा दुष्कृतस्य परां काष्ठां गता ब्रह्महत्येति प्रसिद्धमेव । एतेन यथा ज्योतिष्टोमाश्वमेधयोर्विधेयविशेषभेदेन भेदस्तथा विधानप्रतिषेधयोर्भेद इत्यपास्तम् । न कलञ्जमित्यादिषु निषेधवाक्येषु विधेयस्यैवाभावात् । फलबुद्धीति । फलं बुद्धिः प्रमेयमधिकारी बोधकशब्दश्चेत्येतत्पञ्चकं विधौ भिन्नं निषेधे च भिन्नमिति तयोर्भेदः सिद्धो भवतीत्यर्थः । यजेत स्वर्गकाम इति विधौ स्वर्गः फलम् । न कलञ्जं भक्षयेदित्यत्र निषेधे चानर्थनिवृत्तिः फलम् । विधिवाक्यादयं मां प्रवर्तयतीति बुद्धिः । निषेधवाक्यात्त्वयं मां निवर्तयतीति बुद्धिः । प्रमेयं वाक्यजन्यशाब्दबोधे प्राधान्येन विवक्षितम् । तच्च विधिवाक्ये विधिः । निषेधवाक्ये निषेधः । विधावधिकारी स्वर्गादिकामः । निषेधेऽधिकारी तु पापभीरुरनिष्टनिवृत्तिकामः । तथा बोधकः शब्दो विधौ लिङादिप्रत्ययः । निषेधवाक्ये तु नञादिरिति । तदुक्तं न्यायसुधायाम्—

विधिरिष्टफलोऽनिष्टपरिहारफलोऽपरः ।
प्रेरितोस्मीति पूर्वे धीर्वारितोस्मीति चापरे ॥
विषयस्येष्टहेतुत्वं विधिनात्र प्रतीयते ।
निषेधेन निषेध्यस्य प्रत्यवायनिमित्तता ॥
विधिश्चाधिकरोत्यन्यकारणेनाप्रवर्तितम् ।
रागादिना प्रवृत्तं तु निषेधस्तद्विलक्षणम् ॥
नञ्वर्जितो लिङादिश्च विधिबोधस्य कारणम् ।
लिङाद्यनुगृहीतस्तु नञ्निषेधस्य बोधकः ॥ इति ।

यन्मते इष्टसाधनत्वं लिङर्थस्तन्मतेऽपि लिङ्संसृष्टो नञ् इष्टसाधनत्वप्रतिपक्षमनिष्टसाधनत्वं गमयति । सर्वथापि तु नञः प्राधान्यात्प्रत्ययेनान्वयः।

यदा तु तदन्वये किंचिद्बाधकं तदाऽगत्या धात्वर्थेनान्वयः । तच्च बाधकं द्विविधम् । तस्य व्रतमित्युपक्रमो विकल्पप्रसक्तिश्च । तेन च बाधकद्वयेन नञ्युक्तेषु वाक्येषु पर्युदासाश्रयणं भवति । तदभावे निषेध एव ।

पर्युदासः स विज्ञेयो यत्र पूर्वपदेन नञ् ।
प्रतिषेधः स विज्ञेयो यत्रोत्तरपदेन नञ् ॥ १ ॥

इति च तयोर्लक्षणम् । उत्तरपदं प्रत्ययः । तदन्यत्पदं पूर्वपदम् । तत्र नेक्षेतोद्यन्तमादित्यम् ( मनु. ४।३७ )

---

यन्मत इति । मण्डनमिश्रमते इष्टसाधनत्वं लिङर्थः । न तु प्रवर्तना । प्रवृत्तिस्तु तत्रेष्टसाधनत्वज्ञानाद्भवति । तन्मतेपि विधिनिषेधयोः पूर्वोक्तोत्यन्तभेदस्तदवस्थ एव । प्रत्ययार्थे नञर्थान्वयस्य सर्वसंमतत्वात् । सर्वथापीति । प्रत्ययार्थस्य प्राधान्यात्तेन नञर्थस्यान्वय इत्यर्थः ।

बाधकद्वयेनेति । बाधकद्वयान्यतरेणेत्यर्थः । तदभावे । अन्यतरस्याप्यभावे । पर्युदास इति । अभियुक्तोक्तिरियम् । अत्र पूर्वपदोत्तरपदशब्दौ मीमांसकैकपरिभाषया संकेतितार्थौ । उत्तरपदशब्देनाख्यातप्रत्ययो गृह्यते । तद्व्यतिरिक्तं सर्वं धातुः प्रातिपदिकं समस्तं व्यस्तं चाख्यातातिरिक्तः प्रत्ययश्च पूर्वपदशब्देन गृह्यते । आख्यातप्रत्ययार्थश्च भावना । तथा च भावनासंबद्धो नञर्थः प्रतिषेधः । यथा न कलञ्जं भक्षयेदिति । भावनेतरार्थसंबद्धो नञर्थः पर्युदासः । यथाऽब्राह्मणाधर्मादिशब्देषु । अब्राह्मणमानयेत्यत्र ब्राह्मणापेक्षयानयनक्रियापेक्षयार्थभावनापेक्षया च शाब्दभावनाया न कलञ्जं भक्षयेदित्यत्रेव प्राधान्येपि वृत्तिबलान्नञर्थस्य ब्राह्मणेनैव संबन्ध इत्यतोऽब्राह्मणशब्दस्य ब्राह्मणेतररूपोर्थः । असमस्तनञ्स्थले तु यद्येवं पर्युदास इष्यते तर्हि तत्र नञर्थस्याख्यातार्थासंबन्धे किंचित्प्रमाणमपेक्ष्यते । तच्चोपक्रमाविरोधो विकल्पप्रसक्तिश्च । उपक्रमविरोधे च नञ्घटितवाक्यस्योपक्रमेणासंबन्धात्प्रकृतहानिरप्रकृतकल्पना च स्यादिति गौरवम् । विकल्पे च दोषाष्टकप्रयुक्तं गौरवम् । दोषाष्टकं च पूर्वं ( पृ. २४८ प. १० ) प्रदर्शितम् । ईदृशगौरवापेक्षया च तत्र नञर्थस्य प्रधानसंबन्धलोभं परित्यज्याप्रधानेन संबन्धाङ्गीकारेपि स्वल्पमेव गौरवं स्यादिति तत्सोढव्यमिति भावः ।

अथ तस्य व्रतमित्युपक्रमात्पर्युदासाश्रयणस्योदाहरणमाह–'तत्र नेक्षेत'

इत्यादौ पर्युदासाश्रयणम्। तस्य व्रतमित्युपक्रमात्।

तथा हि व्रतशब्देन कर्तव्योऽर्थ उच्यते। अतश्च स्नातकस्य कर्तव्यार्थानां वक्तव्यत्वेनोपक्रमात् किं तत्कर्तव्यमित्यपेक्षायामग्रे नेक्षेतोद्यन्तमित्यादौ कर्तव्य एवाऽर्थो वक्तव्यः। आकाङ्क्षिताभिधानात्। अर्थान्तरोक्तौ च पूर्ववाक्यस्य साकाङ्क्षत्वेनाप्रामाण्यं स्यात्। नहि कर्तव्यार्थस्य वक्तव्यत्वेनोपक्रमेऽग्रे च तदनभिधाने पूर्ववाक्यस्य निराकाङ्क्षत्वं संभवति। न च साकाङ्क्षस्य प्रामाण्यम्। गौरश्वः पुरुषः इत्यादावपि तत्प्रसङ्गात्।

किंच नेक्षेतेत्यस्योपक्रमेण प्रतीयमाना एकवाक्यता च न स्यादर्थान्तरोक्तेः। अतश्चास्मिन्वाक्ये कश्चित्कर्तव्य एवार्थो वक्तव्यः। तदुक्तौ च न नञः प्रत्ययेन संबन्धो घटते। तत्संबन्धे कर्तव्यार्थोक्तेरनुपपत्तेः। प्रत्ययाच्चावतारितो नञ् धातुना संबध्यते। तत्संबन्धे च न नञः प्रतिषेधकत्वम्। विधायकसंबन्धेनैव तस्य प्रतिषेधकत्वात्। प्रतिषेधकत्वस्य विधायकप्रतिपक्षत्वात्।

नामधातुयोगे तु न नञः प्रतिषेधकत्वम्। तयोरविधायकत्वात्।

---

इत्यादिना पर्युदासाश्रयणमिति (२५५।१४) इत्यन्तेन।

अर्थान्तरोक्ताविति। कर्तव्यार्थापेक्षया यदर्थान्तरमुद्यदादित्येक्षणाभिवर्तनारूपं तदर्थकत्वं नेक्षेतेति वाक्यस्य गृह्यते चेत्तस्य व्रतमिति पूर्ववाक्ये किंतत्कर्तव्यं व्रतमित्युत्पन्नाया आकाङ्क्षाया अपूरणात्पूर्ववाक्यं तत्राप्रमाणं स्यादित्यर्थः। गौरश्व इति। गौरित्यत्रोत्पन्नाकाङ्क्षास्ति गच्छतीत्यादिना पूर्यते नत्वश्व इत्यनेनेति गौरश्व इत्यादिवाक्यमप्रमाणमेव भवति। वाक्यार्थानवबोधात्।

प्रतीयमानेति। वाक्ययोर्मिथःसंनिधाने तयोर्वाक्यैकवाक्यतया महावाक्यत्वं संनिधानबलादेव प्रतीयत इति भावः। तदुक्तौ चेति। नेक्षेतेत्येतद्वाक्येन कर्तव्यविशेष एव कश्चिदर्थः प्रतिपाद्य इति गृहीते तादृशार्थानुसारेण नञर्थस्य भावनेतरत्र क्वचित्संबन्धो वाच्यः। तथा सत्येव प्रवर्तनामुख्यविशेष्यकः शाब्दबोधः सिद्धो भवतीति कर्तव्यार्थोक्तिस्तत्र सिद्धा भवति। प्रत्ययाच्चेति। एवमगत्या साक्षात्प्रधानसंबन्धलोभत्यागेनान्यत्र नञर्थस्य संबन्धो वक्तव्यः। स च किं भावनाविशेषणीभूते धात्वर्थे उत तादृशधात्वर्थविशेषणीभूत आदित्येथवादित्यविशेषणीभूत उदय इति संशये धात्वर्थ एव भवति। अगत्या हि यत्स्वीकर्तव्यं भवति तद्यावतांशेनोपपत्तिस्तावदेव नतु ततोधिकम्। अतो नञर्थस्य धात्वर्थ एव संबन्धः। नञीक्षत्योः संनिधानमपि चात्रानुकूलमिति भावः। तत्संबन्धे चेति। धात्वर्थेन नञर्थस्य संबन्धे चेत्यर्थः। नामधात्विति। नाम्ना

यथाहुः—

नामधात्वर्थयोगी तु नैव नञ् प्रतिषेधकः ।
वदत्यब्राह्मणाधर्मावन्यमात्रविरोधिनौ ॥

( श्लो. वा. २२ ) इति ।

अतश्च नेक्षेतेत्यत्र नञो धातुयोगान्नञीक्षतिभ्यामीक्षणविरोधी कश्च-नार्थः प्रतिपाद्यते ।

ननु तदन्यतद्विरुद्धतदभावेषु नञिति सत्यपि स्मरणे नञः स्वसंसृष्टा-भाव एव शक्तिः । लाघवात् । न तु तदन्यतद्विरुद्धयोः । तयोरभावघटितत्वेन गौरवात् । अनेकार्थत्वस्य चान्याय्यत्वात् । अतो नञो धातुयोगे धात्वर्था-भावबोधकत्वमेव न तु तद्विरुद्धार्थबोधकत्वमिति चेत्— सत्यम् । नञोऽभाव

---

धातुना वा योगेतु तयोर्नामधात्वोर्विध्यर्थकत्वाभावेन तद्युक्तस्य नञो न प्रतिषेधार्थकत्वमित्यर्थः । नामधात्वर्थेति । नामार्थयोगी धात्वर्थयोगी वा नञ् प्रतिषेधार्थको न भवति । यतोऽब्राह्मणाधर्मौ क्रमेणान्यमात्रविरोधिनौ नञ् वदतीत्यर्थ । अब्राह्मणशब्दस्य ब्राह्मणान्यमात्रमर्थः । अधर्मशब्दस्य च धर्मविरोधीत्यर्थः ।

ईक्षणविरोधीति । नन्वेवं धात्वर्थस्येक्षणस्य प्रत्ययार्थेनन्वये प्रकृतितः स्वार्थस्य प्रत्ययार्थोपसर्जनत्वेनैव जायमानोपस्थितिर्बाधिता स्यादिति चेन्न । नञो द्योतकत्वेन धातोरेव विशिष्टार्थे वृत्तेः कल्पनेनादोषात् ।

ननु तदन्येति । तदन्यस्तद्विरुद्धस्तदभावश्चेति नञर्थास्त्रयः । यथा अब्राह्मणशब्दस्य ब्राह्मणान्यमात्रमर्थः । असुरशब्दस्य सुरविरुद्धोऽर्थः । न गच्छतीत्यत्र गमनाभावोऽर्थः । एवं यद्यपि त्रयोऽर्थाः प्रतीयन्ते तथापि नञः शक्तित्रयकल्पने गौरवम् । तत्र तत्र प्रयोगे शक्यार्थविशेषनिश्चयाय संयोगाद्य-पेक्षा च स्यादित्यपरं गौरवम् । तथा च यत्र शक्त्यैक्यकल्पनेन निर्वाहस्तत्र न नानार्थत्वकल्पनम् । प्रकृते च तदन्याद्यर्थत्रयमध्ये क्व शक्तिः कथं च तया सर्वत्र निर्वाह इति चेदुच्यते । अभाव एव शक्तिः । अन्यशब्दार्थनिर्वचनं विरुद्धशब्दार्थ-निर्वचनं चाभावान्तर्भावेणैव कर्तव्यं भवति । ब्राह्मणान्यो नाम ब्राह्मणत्वाभाव-वान् । धर्मविरुद्धो नाम धर्मसमानाधिकरणाभावप्रतियोगी धर्मप्रतियोगिका-भावसमानाधिकरणो वा । तथा च नञः प्रयोगे सर्वत्राभावप्रतीतिरस्त्येवेति तत्रैव शक्तिकल्पनं लाघवादुचितम् । तथा च तद्विरुद्धरूपेऽर्थे नञो न शक्ति-रिति नञीक्षतिभ्यामीक्षणविरोधी कश्चनार्थः प्रतिपाद्यते इति कथमुक्त-मित्याशयः । सत्यमिति । लाघवाच्छक्त्यैक्यमङ्गीक्रियत एवेति भावः । नन्वेवं

एव शक्तिः। स्मरणं तु प्रतीत्यभिप्रायं न शक्त्यभिप्रायम्। नामधात्वर्थयोगीत्यपि प्रतीत्यभिप्रायम्।

तथापि नेक्षेतेत्यत्र प्रत्ययस्य नञाऽसंबन्धात्तेन तावत्कश्चिदर्थो विधेयः। तत्र न तावद्धात्वर्थो विधातुं शक्यते। नञा तदभावबोधनात्। नापि तदभावो विधातुं शक्यते। अभावस्याविधेयत्वात्। अतश्च नञीक्षतिभ्यां विधानयोग्यः कश्चनेक्षणविरोधी अर्थो लक्षणया प्रतिपाद्यते। स चेक्षणविरोधी लक्ष्यमाणः पदार्थो नेक्ष इत्यनीक्षणसंकल्पः। तस्येक्षणविरोधित्वात्। सत्यपि पदार्थान्तरस्येक्षणविरोधित्वे सर्वक्रियाऽविनाभूतत्वेन संकल्पस्यैव लक्षणात्। स एव नेक्षेतेत्यत्र कर्तव्यतया विधीयते अनीक्षणसंकल्पेन भावयेदिति। भाव्याकाङ्क्षायां च एतावता हैनसा वियुक्तो भवतीति वाक्यशेषावगतः पापक्षयो भाव्यतया संबध्यते।

एवं चात्र पापक्षयार्थसंकल्पस्य कर्तव्यतया विधानात्तस्य व्रतमित्यनेनैकवाक्यता सिद्धा भवति। तत्सिद्धं नेक्षेतेत्यत्र तस्य व्रतमित्युपक्रमात्पर्युदासाश्रयणमिति।

---

शक्त्यैक्येऽङ्गीकृते तदन्यतद्विरुद्धतदभावेषु नञिति स्मृतिर्विरुध्यते। तथा नामधात्वर्थेति वार्तिकेऽन्यमात्रविरोधिनावर्थौ वदतीति यदुक्तं तदपि विरुध्यत इति चेत्तत्राह–स्मरणं त्विति। तत्र तत्र प्रयोगे वक्तृतात्पर्यानुसारेण तदन्यादयोऽर्थाः केवलं प्रतीयन्त इत्येव। न तु तेषु पृथक्शक्तिकल्पनम्। प्रतीतेर्लक्षणयोपपत्तावनेकार्थकल्पनस्यान्याय्यत्वात्। यथा तीरतात्पर्येण प्रयुक्तेऽपि गङ्गायां घोष इति प्रयोगे न गङ्गाशब्दस्य तीरे पृथक्शक्तिः कल्प्यते तद्वत्। नन्वेवं तर्हि नञीक्षतिभ्यामीक्षणविरोधी कश्चनार्थः प्रतिपाद्यत इति यदुक्तं तदपि लक्षणयैवेति वक्तव्यम्। इष्टापत्तिश्चेल्लक्षणामूलभूता तात्पर्यानुपपत्तिर्वक्तव्या भवति। अतोऽत्र तात्पर्यानुपपत्तिं प्रदर्शयति–तथापीति। तस्य व्रतमित्युपक्रमानुरोधात्प्रत्ययार्थप्रवर्तनाया नञर्थेन न संबन्धः। किंत्वत्र प्रवर्तनामुख्यविशेष्यक एव शाब्दबोध इति निश्चिते यद्विषयिणी प्रवर्तना तादृशः कश्चिदर्थोऽत्र विधेयतया वक्तव्य इति भावः। सत्यपीति। यथा नेक्षे इत्येवं संकल्प ईक्षणविरोधी तथान्धत्वमन्धकारादिकमपीक्षणविरोधि भवति। तथापि तदिह न गृह्यते। संकल्पो हि सर्वाभिः क्रियाभिर्नियतसंबद्धो भवतीत्यतोऽत्रापि स उपस्थितो भवतीति स एवात्र विधेयत्वेन विवक्षित इति भावः। एतावतेति। उक्तव्रताचरणेन पातकरहितो भवतीति वाक्यशेषार्थः।

नानुयाजेषु येयजामहं करोतीत्यत्र विकल्पप्रसक्त्या तदाश्रयणम्। तथा हि—यद्यत्र प्रधानसंबन्धलोभान्नञः प्रत्ययसंबन्धः स्वीक्रियते तथा सत्यनेन वाक्येनानुयाजेषु येयजामहः प्रतिषिध्यते इति वक्तव्यमनुयाजेषु येयजामहं न कुर्यादिति। न च तत्र तस्य प्रतिषेधः प्राप्तिं विना संभवति। प्राप्तिसापेक्षत्वात्प्रतिषेधस्य।

अत एव नान्तरिक्षे न दिवीत्यस्य न प्रतिषेधत्वमन्तरिक्षे चयनाप्राप्तेः।

---

अथ विकल्पप्रसक्त्या पर्युदासाश्रयणमुदाहरति—'नानुयाजेषु' इत्यादिना 'पर्युदासाश्रयणमिति' ( २६३।१२ ) इत्यन्तेन।

तैत्तिरीयसंहितायामाश्रावयेति चतुरक्षरमस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं येयजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः ( तै. सं. १।६।११ ) इति श्रूयते। अस्मिन्ननुवाके आश्रावयेत्यादिमन्त्रा विधीयन्ते। अयं पञ्चानां मन्त्राणां समुदायः सप्तदशाक्षरोपेतत्वात्प्रजापतिसृष्टत्वाच्च सप्तदशः प्रजापतिरित्यभिधीयते। स चायं मन्त्रसमुदायो यज्ञमन्वायत्तः सर्वयज्ञेष्वनुगतः। एतज्ज्ञानन्यजमानः संपूर्णेन यज्ञेन प्रतिष्ठितो भवति। वैकल्याभावाच्चायं यज्ञान्न भ्रष्टो भवति। प्रथमतोऽध्वर्युराग्नीध्रं प्रत्याश्रावयेति वदति। हे आग्नीध्र यक्ष्यमाणदेवतां प्रति तुभ्यमिदं हविः इत्याभिमुख्येन श्रावयेति तदर्थः। तत आग्नीध्रोऽस्तु श्रौषडिति वदति। एतन्मन्त्राद्यभागेनास्त्वित्यन्तेनाध्वर्यूक्तमङ्गीकृत्य द्वितीयेन श्रौषडितिभागेन देवतायै हविर्दानं श्रावयति। हे देवा युष्मद्विषयमिदं हविर्दानं शृणुतेति श्रौषडित्यस्यार्थः। ततो यजेति अध्वर्योर्होतारं प्रत्युक्तिः। याज्यामन्त्रं पठेत्यर्थः। ततो होता ये यजामहे इति मन्त्रं पठित्वा याज्यामन्त्रं चोच्चार्य तदन्ते वषडिति मन्त्रं पठति। येऽध्वर्युणा यजेति प्रेषितास्ते वयं यजामहे याज्यामन्त्रं पठाम इति तदर्थः। याज्यामन्त्रानन्तरमुच्चारितस्य वषट्कारस्य हविर्दीयत इत्यर्थः। एवं सर्वत्र यज्ञे प्रक्रिया। तत्र होत्रोच्चार्यमाणो यो ये यजमाहे इति पञ्चाक्षरो मन्त्रः सोऽनुयाजेषु नानुयाजेषु ये यजामहं करोतीत्यनेन वाक्येन पर्युदस्यते। ये यजामहे इति मन्त्रघटितस्य हकारान्तभागस्यानुकरणं कृत्वोच्चारणार्थेनाकारेण संयोज्य तस्याकारान्तशब्दस्य द्वितीयैकवचनं ये यजामहमिति। एवं ये यजामहः ये यजामहस्येत्यत्राप्यकारान्तः शब्दो बोध्यः। प्राप्तिसापेक्षत्वादिति। निषेधस्य प्राप्तिपूर्वकत्वात्। अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वादिति भावः।

अत एव। निषेधस्य प्राप्तिपूर्वकत्वादेव। चयनमिष्टकाविरचित आकारविशेषः। स च भूमावेव संभवति नान्तरिक्षे न दिवि वा। आधारं विना

अत एव ब्राह्मणो न हन्तव्य इत्यस्य नित्यवद्धनननिवर्तकत्वमुपपद्यते । सर्वो हि पुरुषः कदाचिद्धननादौ प्रवर्तते कदाचिच्च रागाद्यभावे न प्रवर्तते । तत्र यदि निषेधस्य प्राप्तिसापेक्षत्वं न स्यात्तदा रागाविरोधाय हननादावप्रवृत्तं प्रत्येव शास्त्रप्रामाण्योपपत्तौ रागादिना हननादौ प्रवृत्तेन पुंसा न ततो निवर्तितव्यम् ।

प्राप्तिसापेक्षत्वे तु स्वयमप्रवृत्तं प्रति प्रसक्त्यभावेन निषेधशास्त्रा-

---

चयनस्य कर्तुमशक्यत्वात् । तथा च तत्र चयनप्रसक्त्यभावेन तन्निषेधोऽनुपपन्न इत्यतस्तत्सार्थक्याय तस्यार्थान्तरे पर्यवसानं स्वीकर्तव्यम् । चयनस्थले हि भूमौ सुवर्णशलाकानिधानमुक्तम् । तेन च भूमेस्तत्र ससारता तेजस्विता च संपद्यते । तथाचाग्न्यादितेजस्विदेवताधारणसामर्थ्यं भूमिः प्राप्नोतीति । यदि च सुवर्णशलाकानिधानं तत्र न क्रियते तर्हि तत्रान्तरिक्ष इव चयनासंभवः । एतावांस्तु विशेषः । अन्तरिक्ष आधार एव न दृश्यते । अत्र तु दृश्यमानोऽपि भूमिरूप आधारोऽसारत्वादाधेयधारणासमर्थ इति । चयनासंभवस्तूभयत्र तुल्य एव । तथा च नान्तरिक्ष इत्यस्य सुवर्णशलाकानिधानावश्यकत्वबोधने तात्पर्यमिति बोध्यम् ।

अथ निषेधस्य प्राप्तिसापेक्षत्वं प्रयोजनद्वारा द्रढयति—अत एव ब्राह्मण इति । नित्यवदिति । यत्सर्वैरवश्यमनुष्ठेयं भवति तन्नित्यम् । अयं हनननिषेधः क्वचिदपि केनापि कारणेन न प्रतिहन्यत इति भावः । तदेवोपपादयति — 'सर्वो हि' इत्यादिना 'तत्रेति' (२५८।८) इत्यन्तेन । रागाविरोधायेति । अविरोधो बाधाभावः । शास्त्रतो लोकतो वा प्राप्तस्य कस्याप्यबाधेऽङ्गीकृतेऽपि यदि शास्त्रप्रामाण्यं क्वचिदपि दृष्टं स्यात्तर्हि तत्र बाधो न न्याय्यः । शास्त्रप्रामाण्यसंरक्षणं बाधाभावश्चेति द्वयमपि ह्यपरित्याज्यमेव । अगत्या किंचिदेकं परित्याज्यं भवति चेद्बाधाभाव एव परित्याज्यः । बाधोऽङ्गीकर्तव्य इति यावत् । सोऽपि च लोकतः प्राप्तस्यैव । न तु शास्त्रतः प्राप्तस्य । किंचिच्छास्त्रस्य प्रामाण्यसंरक्षणार्थं शास्त्रान्तरप्राप्तस्य बाधः प्रकल्प्यते चेत्तत्रैकस्य शास्त्रस्य प्रामाण्ये संरक्षितेऽपि शास्त्रान्तरस्य प्रामाण्यमसंरक्षितं भवति । तथा च तादृशस्थले गत्यन्तराभावेन द्वयोरपि शास्त्रयोः समकक्षतया पर्यायेण तयोर्द्वयोरपि प्रामाण्यं पाक्षिकत्वेन निर्वहणीयम् । यथोदिते जुहोत्यनुदिते जुहोतीति । षोडशिनं गृह्णाति षोडशिनं न गृह्णातीति च । प्रकृते च यदि निषेधस्य प्राप्तिसापेक्षत्वं न स्यात्तर्हि स्वभावत एव हननादावप्रवृत्तेऽपि पुरुषे न हन्यादिति श्रुतेः प्रवृत्तौ तत्र श्रुत्यर्थानुकूलाचरणेन श्रुतिप्रामाण्योपपत्तौ च

प्रवृत्तेः रागादिना प्रवृत्तं प्रत्येव भ्रान्तिनिमित्तरागबाधेन निषेधशास्त्रप्रवृत्तेर्युक्ता प्रवृत्तस्य ततो निवृत्तिः।

अतश्च ब्राह्मणो न हन्तव्य इत्यस्य निषेधस्य निवृत्तिनियमबोधकत्वम्। व्रीहीनवहन्यादित्यस्येवावघातनियमबोधकत्वम्। यथा खलु व्रीहीनवहन्यादिति शास्त्रं वैतुष्यार्थमवघाते स्वतः प्रवृत्तं पुरुषं प्रति न प्रवर्तते। वैयर्थ्यात्। किंतु दलनादौ प्रवृत्तं प्रति। एवं न हन्यादिति शास्त्रं हननात्स्वयं निवृत्तं पुरुषं प्रति न प्रवर्तते। वैयर्थ्यात्। किंतु हनने प्रवृत्तं पुरुषं प्रति कर्तव्यत्वेन प्रसक्तस्य प्रतिषेधायत्कर्तव्यं तन्नेति।

अतश्च प्राप्तिसापेक्षत्वात्प्रतिषेधानामनुयाजेषु येयजामहप्रतिषेधे तस्य तत्र प्राप्तिर्वक्तव्या। सा न तावद्धननादाविव रागतः संभवति। अतो यजतिषु येयजामहं करोतीति शास्त्रात्सा वक्तव्या। शास्त्रप्राप्तस्य च प्रतिषेधे विकल्पः स्यात्। शास्त्रेण भ्रान्तिनिमित्तस्येव शास्त्रान्तरस्यात्यन्तबाधायोगात्।

---

सत्यां रागतो हनने प्रवृत्तस्य निवृत्तिर्न स्यात्। न च तत्र हन्त्रा श्रुतिप्रामाण्यं त्यक्तमिति शङ्क्यम्। तदृष्ट्यापि श्रुतेरन्यत्र चारितार्थ्यसंभवात्। नह्याहिताग्निना स्वर्गकामेनापि केनचित्सोमयागाकरणे सोमेन यजेतेति श्रुतिप्रामाण्यं तेन परित्यक्तं भवति। नवान्येनानुष्ठितः श्रुतिविहितः सोमयागस्तस्यासंमतो भवति। एवं हन्तुर्हननादनिवृत्तावपि श्रुतिप्रामाण्यं संरक्षितं भवति रागस्याबाधश्चोपपन्नो भवति। निषेधस्य प्राप्तिसापेक्षत्वे तु हननप्रवृत्तपुरुषविषय एव न ब्राह्मणं हन्यादिति श्रुतेः प्रवृत्त्या तस्या अन्यत्र चारितार्थ्याभावेन तत्रैव चारितार्थ्यं वक्तव्यमित्यतो लोकतः प्राप्तस्य रागस्य बाधेन हननात्तस्य निवृत्तिः सिद्धा भवति। नहि तत्रोदितानुदितहोमयोरिव विकल्पः संभवति। प्रवृत्तेर्भ्रममूलकत्वेन निवृत्तेश्च शाब्दप्रमाणजन्यत्वेन द्वयोरसमकक्षत्वात्। हननमिष्टसाधनमित्येवं हन्तुर्यज्ज्ञानं तद्भ्रम एव। तदेव हीष्टमुच्यते यत्सुखाधिकदुःखाजनकम्। ब्राह्मणहननस्य च हन्तृदृष्ट्या तात्कालिककिंचित्सुखदायकत्वेपि पर्यन्ते स भूयसा दुःखभारेणाक्रान्तो भवतीति श्रुतिप्रसिद्धमेव। एवं कलञ्जभक्षणादावप्यूह्यम्।

अतश्च ब्राह्मण इति। प्राप्तिस्थल एव निषेधशास्त्रस्य प्रवृत्तिसत्त्वादित्यर्थः। प्रवृत्तं पुरुषं प्रतीति। न हन्यादिति शास्त्रं प्रवर्तत इत्यनुषज्यते। तत्र तस्योपयोगप्रकारमाह-कर्तव्यत्वेनेति। एवं स्थिते प्रकृतमाह-अतश्च प्राप्तीति। न तावदिति। येयजामहस्य इष्टफलाभावान्न तत्र रागतः प्रवृत्तिः संभवतीति भावः। अत्यन्तबाधायोगादिति। अत्यन्तबाधे हि बाधितस्य शास्त्रस्य

न च पदशास्त्रेणाहवनीयशास्त्रस्येव नानुयाजेष्विति विशेषशास्त्रेण यजतिषु येयजामहं करोतीति सामान्यशास्त्रस्य बाधः स्यादिति वाच्यम्। शास्त्रयोर्हि तत्र बाध्यबाधकभावो यत्र परस्य निरपेक्षता। नहि पदशास्त्रस्य स्वार्थविधानार्थमाहवनीयशास्त्रापेक्षास्ति। निषेधशास्त्रस्य तु प्रसक्त्यर्थं यजतिषु येयजामहं करोतीति विधेरस्त्यपेक्षा।

एवंच निषेधशास्त्रस्य विशेषविषयत्वेन प्राबल्यवद्विधिशास्त्रस्याप्युपजीव्यत्वेन प्राबल्यमस्तीति न निषेधेन विधेरत्यन्तबाधो युक्त इति विहितप्रतिषिद्धत्वाद्विकल्पः स्यात्। स च न युक्तः। विकल्पे हि पक्षे शास्त्रस्याप्रामाण्यं भवति। न ह्यनुयाजेषु येयजामहकरणे नानुयाजेष्वित्यस्य प्रामाण्यं संभवति। व्रीह्यनुष्ठानसमय इव यवशास्त्रस्य। द्विरदृष्टकल्पना च स्यात्। विधेर्हि एवं ज्ञायते यदनुयाजेषु येयजामहकरणे कश्चनोपकारो भवतीति। निषेधाच्च तदकरणादिति ज्ञायते। अनृतवदनाकरणादिव दर्शपूर्णमासयोः।

---

सर्वथाऽप्रामाण्यं प्रसज्येत। तच्च भ्रमस्थल एवेष्यते नान्यत्र। प्रमास्थले तु सर्वथाऽप्रामाण्यं दूर एव। पाक्षिकाप्रामाण्यमपि तत्र न ग्रहीतुं शक्यम्। यदि त्वन्यथानुपपत्तिरेव स्यात्तर्हि कथंचित्तादृशस्थले स्वीक्रियतां नाम पाक्षिकाप्रामाण्यमिति भावः।

पदशास्त्रेणेति। अश्वमेधयागेऽश्वपदप्रक्षेपस्थाने पदे जुहोतीति होमो विधीयते। एवं सोमयागे सोमक्रयार्थं तन्मूल्यमिति यारुणिकहायनी गौरानीयते तस्याः सप्तमपदप्रक्षेपस्थाने पदे जुहोतीति होमो विधीयते। तेन च विशेषविधिनाहवनीये जुहोतीति सामान्यशास्त्रस्य यथा तत्र सर्वथा बाधस्तद्वदित्याशयः। यत्र परस्येति। बाधकस्य विशेषशास्त्रस्येत्यर्थः। विशेषशास्त्रस्यापि यदि सामान्यशास्त्रापेक्षा स्यात्तर्हि तत्र तत्सामान्यशास्त्रमुपजीव्य प्रवृत्तं विशेषशास्त्रं कथं स्वोपजीव्यस्य सामान्यशास्त्रस्य बाधं कर्तुं प्रभवेदिति भावः। निषेधशास्त्रस्य त्विति। निषेधस्य प्राप्तिपूर्वकत्वनियमाद्येन शास्त्रेण प्राप्तिस्तादृशशास्त्रापेक्षा निषेधशास्त्रस्यावर्जनीयैव भवति। व्रीह्यनुष्ठानेति। व्रीहिग्रहणपक्षे यवविधायकं शास्त्रमप्रमाणमेव भवति। यवग्रहणपक्षे च व्रीहिविधायकं शास्त्रमप्रमाणमेव भवति। तथा च विकल्पस्थले द्वयोरपि पाक्षिकमप्रामाण्यं दुर्निवारम्। अतो विकल्पपरिहाराय नानुयाजेष्वित्यत्र पर्युदासाश्रयणमिति भावः। किं च विकल्पाश्रयणे दोषान्तरमप्यस्तीत्याह— द्विरदृष्टेति। तदकरणादिति। कश्चनोपकारो भवतीत्यनुषज्यते। उपकारस्या-

स चोपकारोऽदृष्टरूप इति द्विरदृष्टकल्पनाप्रसङ्गः। अतश्च विकल्पो न युक्तः। प्रतिषेधाश्रयणे च तदापत्तेर्न तदाश्रयणम्। किंतु नञः अनुयाजशब्देन संबन्धमाश्रित्य पर्युदास आश्रीयते। नञनुयाजशब्दाभ्यामनुयाजव्यतिरिक्तलक्षणात्। अनुयाजव्यतिरिक्तेषु येयजामहं करोतीति। अत्र च वाक्ये येयजामहः कर्तव्यतया न विधीयते। यजतिषु येयजामहं करोतीत्यनेनैव विहितत्वात्। किंतु सामान्यशास्त्रविहितयेयजामहानुवादेन तस्यानुयाजव्यतिरिक्तविषयता विधीयते–यत् यजतिषु येयजामहं करोति तदनुयाजव्यतिरिक्तेष्विति। एवं च सामान्यशास्त्रस्य विशेषापेक्षिणः नानुयाजेष्वित्यनेनानुयाजव्यतिरिक्तविषयसमर्पणादनुयाजव्यतिरिक्तेषु येयजामहः कर्तव्यतया प्राप्तः। अनुयाजेषु तु स न कर्तव्यतया प्राप्तो न वा प्रतिषिद्ध इति न विकल्पः। लक्षणया चानुयाजव्यतिरिक्तविषयसमर्पणान्नानुयाजेष्विति वाक्यस्य नाप्रामाण्यम्। अतश्च पर्युदासाश्रयणे न किंचिद्बाधकम्। तत्सिद्धं नानुयाजेष्विति वाक्ये विकल्पभयात्पर्युदासाश्रयणमिति।

ननु पर्युदासाश्रयणे यजतिषु येयजामहं करोतीति शास्त्रेण यागसामान्ये प्राप्तस्य येयजामहस्य नानुयाजेष्वित्यनेनानुयाजव्यतिरिक्ते संकोचनात्

---

कल्पने तु विधिर्निषेधो वा निरर्थक एव स्यात्। श्रुतेर्नैरर्थक्यं च न युक्तमित्यन्यथानुपपत्त्योपकारः कल्प्यत इति भावः। तदापत्तेः। विकल्पापत्तेः। न तदाश्रयणम्। न प्रतिषेधाश्रयणम्। अनुयाजशब्देनेति। विकल्पदोषभिया प्रत्ययादवतारितो नञ् संनिधानादनुयाजशब्देनैव संबध्यत इति भावः। अत्र च वाक्ये। नानुयाजेषु येयजामहं करोतीति वाक्ये। विशेषापेक्षिण इति। सामान्यं हि विशेषमपेक्षत एव। न हि गौरनुबन्ध्य इत्युक्ते गोविशेषं कंचिदपुरस्कृत्यानुबन्धनं संभवति। तथा च सामान्यशास्त्रेण स्वार्थे प्रतिपादिते विशेषापेक्षायां विशेषशास्त्रं स्याच्चेत्तदनुसारेण सामान्यशास्त्रं प्रवर्तते। विशेषशास्त्राभावे तु यं कंचिद्विशेषमाश्रित्य प्रवर्तते। सर्वथा विशेषापेक्षास्तीति तावन्निर्विवादम्। अनुयाजव्यतिरिक्तेति। ईदृशविषयविशेषसमर्पणमेव नानुयाजेष्विति वाक्यस्य कर्तव्यं नत्वन्यत्किंचित्। तथा चानुयाजेषु यजतिषु येयजामहमिति सामान्यशास्त्रेण न किंचिद्विधीयते नापि नानुयाजेष्विति विशेषशास्त्रेण तत्र किंचिन्निषिध्यत इति द्वयोरपि शास्त्रयोरनुयाजेष्वप्रवृत्त्या विकल्पस्य शङ्कापि नोदेति। नापि नानुयाजेष्वित्यस्य वैयर्थ्यमाशङ्कनीयमित्याह—लक्षणया चेति।

पर्युदासस्योपसंहारादभेदः स्यात्। उपसंहारे हि सामान्ये प्राप्तस्य विशेषे संकोचो भवति। यथा पुरोडाशं चतुर्धा करोतीति पुरोडाशसामान्ये प्राप्तं चतुर्धाकरणमाग्नेयं चतुर्धा करोतीत्याग्नेये संकोच्यत इति चेन्न। तन्मात्र संकोचार्थत्वादुपसंहारस्य तदन्यमात्रसंकोचार्थत्वात् पर्युदासस्येति केचित्। अन्ये तु उपसंहारो नाम सामान्यतः प्राप्तस्य विशेषे संकोचनरूपो व्यापारविशेषो विधेः। पर्युदासस्तु—

पर्युदासः स विज्ञेयो यत्र पूर्वपदेन नञ्।

इत्यभियुक्तोक्त्या प्रत्ययातिरिक्तेन धातुना वा नाम्ना वा नञः संबन्धः।

---

यथा पुरोडाशमिति। दर्शपूर्णमासप्रकरणे पुरोडाशत्रयमाग्नेयोऽग्नीषोमीय ऐन्द्राग्नश्चेति। तत्र पुरोडाशं चतुर्धा करोति इति वाक्येन त्रिष्वपि पुरोडाशेषु प्राप्तं चतुर्धाकरणमाग्नेयं चतुर्धा करोति इति विशेषवाक्येनाग्नेय एवेति नियम्यते। ऋत्विक्चतुष्टयाय प्रदानार्थमिदं चतुर्धाकरणम्। चत्वारो भागाः कर्तव्या इत्यर्थः। यत्र सामान्यवाक्यस्य प्रमाणान्तरेण विशेष उपसंहारस्तत्र सामान्यवाक्यस्य विशेषपरत्वमेव भवति। यथा घटमानयेत्युक्ते घटपदस्य गेहस्थघटे तात्पर्यग्रहे सति घटपदस्य तत्र तादृशविशेषपरत्वमेव भवतीति सर्वानुभवस्तद्वत्। तथा च प्रकृते पर्युदासस्थलेपि यजतिषु येयजामहमिति सामान्यवाक्यस्थयजतिपदस्यानुयाजव्यतिरिक्तरूपविशेषपरत्वमेवेति पर्युदासवाक्यस्योपसंहारवाक्याच्च कश्चिद्विशेष इत्याशयः। तन्मात्रेति। सामान्यशास्त्रस्य विशेषे संकोच उपसंहारवाक्यात्पर्युदासवाक्याच्च भवतीति द्वयोः प्रयोजनं तुल्यमेव तथाप्युपसंहारवाक्य उपसंह्रियमाणमात्रे संकोचः पर्युदासवाक्ये तु पर्युदस्यमानेतरमात्रे संकोच इत्येवं संकोचप्रदर्शकरूपमुभयत्र भिन्नमिति तयोर्भेदः। उपसंह्रियमाण आग्नेयः पुरोडाशः। तत्रैव सामान्यशास्त्रप्राप्तं चतुर्धाकरणं नियमितम्। पर्युदस्यमानस्त्वनुयाजः। तत्रैव सामान्यशास्त्रप्राप्तो येयजामहो नियमित इति न। किं तु तदितरत्रैव स नियमित इत्याशयः। केचित्। न्यायसुधाकाराः। अन्ये। पार्थसारथिमिश्राः। अयं भावः— उपसंहारबोधकं वाक्यमुपसंहारशब्देनोच्यते। पर्युदासबोधकं वाक्यं च पर्युदासशब्देनोच्यते। उपसंहारश्च विधेर्व्यापारविशेषः। पर्युदासश्च धात्वादिभिर्नञः संबन्धः। व्यापारः संबन्धश्चेत्येतौ मिथः स्वरूपतो भिन्नावेवेत्येवं भिन्नस्वरूपयोः कथं प्रयोजनसाम्यमात्रेणैक्यमाशङ्क्यते। पदार्थभेदो हि स्वरूपभेदाधीनो न तु प्रयोजनभेदाधीनः। अन्यथोत्पादकत्वेन मिथः सदृशानां तृणारणिमणीनामैक्यप्रसङ्गादिति।

अतोऽनयोस्तावत्स्वरूपतः स्पष्ट एव भेदः। एवं सत्यप्यभेद आशङ्क्येत यदि यत्र पर्युदासस्तत्रावश्यमुपसंहारः स्यात्। न चैतदस्ति। नेक्षेतोद्यन्तमित्यादौ सत्यपि तस्मिन्नुपसंहाराभावात्। नहि तत्राग्नेये चतुर्धाकरणमिव सामान्यप्राप्तं किंचिद्विशेषे संकोच्यते। पापक्षयोद्देशेनानीक्षणसंकल्पमात्रविधानात्।

प्रकृतोदाहरणे तु यजिसामान्ये प्राप्तस्य येयजामहस्यानुयाजव्यतिरिक्तेषु संकोचनाद्यदि विधेरुपसंहारविधित्वं संभवति नैतावता किंचिद्विरुध्यते। विध्यभावे हि कथं विधिकार्यमुपसंहारः पर्युदासेन क्रियत इति भवति विरोधः। न चात्र विधिर्नास्ति। नञोऽनुयाजपदसंबन्धेन विधेर्विधायकत्वस्याव्याघातात्। अत्र हि पर्युदासोऽनुयाजव्यतिरिक्तविषयसमर्पकः आग्नेयपदवत्। उपसंहारस्तु विधिरेव।

---

एवं सत्यपीति। भावरूपेण प्रतीयमानस्यान्धकारस्याभावरूपेण प्रतीयमानस्य तेजोऽभावस्य च स्वरूपतो भेदेऽपि केवलं तयोः समनियतत्वमात्रेणैक्यं नैयायिकैर्यथा स्वीक्रियते तद्वदत्र यदि पर्युदासोपसंहारयोः समनियतत्वं स्यात्तर्हि तयोरभेदाशङ्का युक्ता स्यात्। तदेव तु समनियतत्वमत्र नास्ति। नेक्षेतोद्यन्तमित्यत्र पर्युदाससत्त्वेप्युपसंहाराभावात्। आग्नेयं चतुर्धा करोतीत्यत्रोपसंहारसत्त्वेपि पर्युदासाभावात्। समनियतत्वमन्यूनानतिरिक्ताश्रयकत्वम्। नैतावतेति। स्वरूपतो भिन्नयोः पदार्थयोः क्वचित्सामानाधिकरण्येपि न काचित्क्षतिरिति भावः। विध्यभावे हीति। यदि पर्युदासस्योपसंहारैक्यभिया नानुयाजवाक्ये सामान्यशास्त्रसंकोचो नाश्रीयते तर्हि तत्र निवर्तनैव वाक्यार्थः कर्तव्यः स्यान्नतु विधिः। तथा च विधेरेवाभाव उपसंहाररूपं विधिकार्यं पर्युदाससाध्यं तत्र यदिष्यते तत्कथं सिध्येत्। तदभावे च तत्र विकल्पो दुर्निवार इति दोषः। विधेरभावे पर्युदासमात्रेणेष्टसिद्धिस्तु न। पर्युदासस्य विधिद्वारैवोपसंहारकत्वात्। न चात्रेति। नानुयाजवाक्ये विधिर्नञ्युग्मः परं तु स वक्तुं न शक्यत इति न वक्तव्यमित्यर्थः। नानुयाजवाक्ये स्वस्वनिमित्तवशात्संभवतोः पर्युदासोपसंहारयोः स्वरूपभेदः पूर्वं प्रदर्शितः। अधुना तयोः प्रयोजनमपि भिन्नमिति दर्शयति—अत्र हीति। संकोचस्थलप्रदर्शनमात्रं पर्युदासेन क्रियत आग्नेयपदेनेव। संकोचस्तु तादृशपर्युदासस्थल उपसंहारस्थले च विधिनैव क्रियते। एतेन पर्युदासोपसंहारयोः संकोचरूपं फलैक्यं गृहीत्वा केवलं संकोचप्रदर्शकरूपभेदेन तयोर्भेदप्रतिपादनं न्यायसुधाकारोक्तमपास्तम्। स्वरूपभेदस्यानुपदं प्रदर्शितत्वाच्च। तथा च नानुयाजवाक्ये पर्यु-

न च अत्र तन्मात्रसंकोचाभावान्नोपसंहार इति वाच्यम्। तन्मात्र-संकोचः इति कोऽर्थः। आग्नेयमात्रे संकोचो वा सामान्यप्राप्तस्य विशेषमात्रे संकोचो वा। आद्येऽनारभ्याधीतसाप्तदश्यस्य मित्रविन्दादिप्रकरणस्थेन वाक्येनोपसंहारो न स्यात्। आग्नेयसंकोचाभावात्। द्वितीये चतुर्धाकरणस्य पुरोडाशमात्रे प्राप्तस्याग्नेये संकोचवदनुयाजाननुयाजसाधारण्येन प्राप्तस्याननुयाजेषु संकोचादुपसंहारः स्यादेव।

एतावांस्तु विशेषः। आग्नेयादिवाक्येषु आग्नेयादयो विशेषाः स्वपदोपस्थिताः। प्रकृते तु पर्युदासेन तस्योपस्थितिरिति। उपसंहारन्यायस्त्वविशिष्ट एव। यत्र तदन्यमात्रसंकोचनार्थत्वात्पर्युदासस्येति। तन्न। नेक्षेतेत्यत्र सत्यपि पर्युदासे संकोचाभावात्। नह्यत्र सामान्ये प्राप्तं तदन्यमात्रे संकोच्यते। संकल्पमात्रविधानादित्युक्तमित्यास्तां तावत्। तत्सिद्धं नानुयाजेष्वित्यत्र विकल्पप्रसक्त्या पर्युदासाश्रयणमिति।

यत्र तु स आश्रयितुं न शक्यते तत्र तत्प्रसक्तावपि निषेध एवाश्रीयते। यथा नातिरात्रे षोडशिनं गृह्णातीत्यत्र। अत्र ह्यतिरात्रे षोडशिनं गृह्णातीति

---

दासोपसंहारयोः सत्त्वेऽपि न तयोरैक्यं सिध्यति। अथ न्यायसुधाकृन्मतानुसारेण नानुयाजवाक्ये उपसंहारो नैव संभवतीति यदुक्तं (पृ. २६१।४) तदाक्षिप्य समाधत्ते-नचात्रेत्यादिना।

कोऽर्थ इति। आग्नेयं चतुर्धेत्युदाहरणं पुरस्कृत्य तन्मात्रसंकोचार्थत्वादुपसंहारस्येत्युक्तम्। तत्रत्यस्तच्छब्दः प्रकृतोपसंहारोदाहरणस्थाग्नेयमात्रं विशेषं परामृशत्यथवा सर्वोदाहरणस्थान्सर्वांस्तत्तद्विशेषानिति संशयः।

साप्तदश्यस्येति। इदमुपसंहारस्योदाहरणान्तरम्। प्रसङ्गतः प्रागुपपादितमेतत् (पृ. १२१-४)। अत्र मित्रविन्दादिषु संकोचो न त्वाग्नेय इत्येवमाग्नेयव्यतिरिक्तेषु सर्वेषूदाहरणेष्वव्याप्तिः स्यादिति भावः। अननुयाजेष्विति। नञनुयाजशब्दाभ्यां संभूयानुयाजव्यतिरिक्तरूपविशेषस्याभिधानात्तादृशविशेषस्य तन्मात्रेत्यत्रत्यतच्छब्देनाग्नेयवत्परामर्शादुपसंहारः स्यादेवेति भावः। स्वपदोपस्थिता इति। स्वरूपपरिचायकेन प्रातिस्विकरूपेणोपस्थिता इत्यर्थः। संकोचाभावादिति। तथा च सर्वेषु पर्युदासोदाहरणेषु न तदन्यमात्रसंकोचः संभवतीति भावः। सः। पर्युदासः। तत्प्रसक्तावपि। विकल्पप्रसक्तावपि। नातिरात्र इति। यत्र विधिः सामान्यविषयः, नञ्घटितवाक्यं तु विशेषविषयकं तत्र नञर्थः पर्युदास इति तद्वाक्यं विधेरेव वाक्यशेषभूतं भवति। यत्र तु विधि-

शास्त्रप्राप्तमतिरात्रे षोडशिग्रहणं प्रतिषिध्यत इति विहितप्रतिषिद्धत्वाद्विकल्पप्रसक्तावपि पर्युदासो नाश्रीयतेऽशक्यत्वात् । यद्यत्र नञः षोडशिपदेन संबन्धः स्वीक्रियते तदाऽतिरात्रे षोडशिव्यतिरिक्तं गृह्णातीति वाक्यार्थः स्यात् । तत्र चातिरात्रे षोडशिनं गृह्णातीति प्रत्यक्षविधिविरोधः । अत एवातिरात्रपदेन न नञः संबन्धः । अतिरात्रे षोडशिनं गृह्णातीति प्रत्यक्षविधिविरोधात् ।

अतश्चात्र पर्युदासस्यानुपपत्तेर्निषेध एव स्वीक्रियते । विकल्पोऽपि स्वीक्रियतेऽनन्यगतेः । अतश्चैतत्सिद्धम्—यत्र तस्य व्रतमित्याद्युपक्रमः विकल्पप्रसक्तिश्च नास्ति तत्र प्रतिषेधः । यथा न कलञ्जं भक्षयेदिति । यत्र वा विकल्पप्रसक्तावपि पर्युदास आश्रयितुं न शक्यते तत्र प्रतिषेधः । यथा नातिरात्रे षोडशिनं गृह्णातीति ।

---

विशेषविषयः, नञ्घटितवाक्यमपि तद्विशेषविषयकमेव यथा ज्योतिष्टोमस्य संस्थाविशेषेऽतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णातीति । अत्र नञर्थः प्रतिषेधः । पर्युदासासंभवात् । पर्युदासे हि भावनातिरिक्ते नञर्थान्वयो वाच्यः । यथा नानुयाजेष्विति पर्युदासेन यजतिषु येयजामहमिति विधेरनुयाजव्यतिरिक्ते यागे इति संकोचः कृतस्तथात्रातिरात्रपदेन नञः संबन्धेऽतिरात्र इति विधेर्नातिरात्र इति पर्युदासेनातिरात्रभिन्नेऽतिरात्रे षोडशिनं गृह्णातीत्यर्थो वाच्यः । स च व्याहतः । तथा षोडशिपदेन नञः संबन्धे षोडशिभिन्नं षोडशिनं गृह्णातीत्यर्थो वाच्यः । सोपि व्याहत एव । अतोऽत्र भावनायामेव नञः संबन्ध इति प्रतिषेध एवात्र नञर्थः । विकल्पस्त्वष्टापत्तिग्रस्तः । अगत्या तस्यात्र स्वोढव्यत्वात् । विकल्पे च सिद्धे षोडशिग्रहणप्रतिषेधस्य साफल्याय षोडशिग्रहणाकरणेपि क्रतुसिद्धिरस्तीति कल्पनीयम् । षोडशिग्रहणविधेश्च साफल्याय षोडशिग्रहणे फलभूयस्त्वं कल्पनीयमिति बोध्यम् । नन्वत्रास्तुनाम फलभूयस्त्वम् । परं तु षोडशिग्रहणपक्षे नातिरात्र इति निषेधोल्लङ्घनेन कलञ्जभक्षण इवानर्थप्राप्तिः स्यादिति चेन्न । वैषम्यात् । न कलञ्जं भक्षयेदित्यादयो निषेधा निवर्तनामभिदधतः स्वनिवर्तकत्वनिर्वाहार्थं निषेध्यस्य कलञ्जभक्षणादेरनर्थहेतुत्वमाक्षिपन्तः पुरुषं ततो निवर्तयन्ति ( पृ. २४८ प. ८ ) इत्युक्तम् । प्रकृते नातिरात्र इति वाक्ये तु तादृशोऽनर्थहेतुत्वाक्षेपो दुर्लभः । अतिरात्रे षोडशिनं गृह्णातीति विधिविरोधात् । विधयोऽपि हि प्रवर्तनामभिदधतः स्वप्रवर्तकत्वनिर्वाहार्थं विधेयस्य यागादेः श्रेयःसाधनत्वमाक्षिपन्तः पुरुषं तत्र प्रवर्तयन्ति ( पृ. २४८-प. ६ ) इति प्रागुक्तमेव । एकस्यैकस्यैकेनैव रूपेण श्रेयःसाधनत्वमनर्थसाधनत्वं च विरुद्धम् । अत एव चात्र निषिध्यमानस्य क्रतुवैकल्यावहत्वमप्याक्षेप्तुं न शक्यते । षोडशिग्रहणविधि-

एतावांस्तु विशेषः । यत्र विकल्पापादकः प्रतिषेधः तत्र प्रतिषिध्यमानस्य नानर्थहेतुत्वम् । उभयोरपि विधिप्रतिषेधयोः क्रत्वर्थत्वात् । यत्र तु न विकल्पः प्रसज्यते प्राप्तिश्च रागतः प्रतिषेधश्च पुरुषार्थस्तत्र निषिध्यमानस्यानर्थहेतुत्वम् । यथा कलञ्जभक्षणस्य ।

दीक्षितो न ददाति न जुहोतीत्यादिषु तु दानहोमादीनां शास्त्रप्राप्तावपि पुरुषार्थत्वेन प्राप्तत्वात् क्रत्वर्थत्वेन च प्रतिषेधात्तुल्यार्थत्वाभावेन विकल्पाप्रसक्तावपि न तेषामनर्थहेतुत्वम् । रागप्राप्त्यभावात् । रागतः प्राप्तस्यापि

---

विरोधस्य तादवस्थ्यात् । तथा चात्र विधिनिषेधयोरविरोधो यथा स्यात्तथैव कश्चिदर्थ आक्षेप्यो विधिना स्वप्रवर्तकत्वनिर्वाहार्थं निषेधेन च स्वनिवर्तकत्वनिर्वाहार्थम् । विधिप्रतिषेधौ चात्र द्वावपि क्रत्वर्थौ । तथा च विहितस्य षोडशिग्रहणस्याभावेपि यज्ञस्य नाङ्गवैकल्यमित्यर्थो निषेधेनाक्षिप्यते । तेनैव रूपेणात्र निषेधः षोडशिग्रहणान्निवर्तयति । विधिना च फलभूयस्त्वमाक्षिप्यते । तेनैव च रूपेणात्र विधिः षोडशिग्रहणे प्रवर्तयति । तदुक्तमभियुक्तैर्वैकल्पिकेष्वप्यनुष्ठानक्लेशो धर्माधिक्यफलक इति । एवं च रागप्राप्तस्य पुरुषार्थतया निषेधे प्रतिपादिते निषेधेन तत्र निषिध्यमानस्यानर्थहेतुत्वमाक्षिप्यते नान्यत्र शास्त्रप्राप्तस्य क्रत्वर्थतया निषेधे । नापि रागप्राप्तस्य क्रत्वर्थतया निषेधे । तत्र तु निषिध्यमानस्य क्रतुवैकल्यावहत्वमाक्षिप्यते । यत्र च निषेधद्वयं तत्रोभयमपि । यथानृतवदनस्य पुरुषार्थतया निषेध एकः क्रत्वर्थश्चापरः । तथा च क्रतावनृतवदने कृते सति तत्रानर्थप्राप्तिः क्रतुवैकल्यं च । अत्रेदं बोध्यम् । यज्ञे पश्वालम्भविधानान्न हिंस्यादिति निषेधस्य यागीयपशुव्यतिरिक्तविषयत्वं कल्प्यते । किंतु तत्र यदि क्रत्वर्थतया निषिध्यमानस्य कस्यचिदाचरणं स्याचेन्न तत्र केवलं क्रतुवैकल्यमपि तु पशुहिंसातोऽनर्थावाप्तिरपीति ।

एवं विकल्पापादकप्रतिषेधस्थले निषिध्यमानस्य नानर्थहेतुत्वमित्युपपाद्य विकल्पानापादकप्रतिषेधस्थलेपि निषेधस्य क्रत्वर्थत्वे निषिध्यमानस्य नानर्थहेतुत्वमित्युपपादयति–दीक्षित इति । दानं होमश्च पुरुषार्थतया विधीयते । स च विधिर्यज्ञादन्यत्र चरितार्थः । यज्ञाङ्गं दक्षिणादानं तु दीक्षासमाप्त्यनन्तरं क्रियते । परं तु यज्ञारम्भे दीक्षाग्रहणानन्तरं दीक्षासमाप्तेः पूर्वं दानस्य होमस्य च इतरकाल इव पुरुषार्थत्वेन प्राप्तस्य क्रत्वर्थत्वेन निषेधः क्रियते । तुल्यार्थत्वाभावेनेति । न च षोडशिग्रहणे फलभूयस्त्वात्कथं ग्रहणाग्रहणयोस्तत्र तुल्यार्थत्वमिति वाच्यम् । यज्ञप्रकरणे समाम्नातयोर्ग्रहणाग्रहणयोरुभयोरपि प्रकरणात्क्रत्वर्थत्वेन तुल्यार्थत्वाक्षतेः । विधेश्चारितार्थ्याय तत्रपाक्षिकी

क्रत्वर्थत्वेन प्रतिषेधे तदनुष्ठानात् क्रतोर्वैगुण्यं नानर्थोत्पत्तिः । यथा स्वस्र्युपगमनादिप्रतिषेधः । रागतः प्राप्तस्य पुरुषार्थत्वेन प्रतिषेधे निषिध्यमानस्यानर्थहेतुत्वमिति दिक् । तत्सिद्धं निषेधानां पुरुषार्थानुबन्धित्वम् । एवं सर्वस्यापि वेदस्य पुरुषार्थानुबन्धित्वम् ।

प्रकृतमनुसरामः । तदेवं यथा विध्यादीनामध्ययनविध्युपात्तानां नानर्थक्यमेवमर्थवादानामपि तदुपात्तत्वेनानर्थक्यानुपपत्तेः स्वार्थप्रतिपादने च प्रयोजनाभावाल्लक्षणया प्रयोजनवदर्थपर्यवसानं वक्तव्यम् । ते चार्थवादा द्विविधाः विधिशेषा निषेधशेषाश्च । तत्र वायव्यं श्वेतमालभेतेत्यादिविधिशेषाणां वायुर्वै क्षेपिष्ठा देवता ( तै. सं. २।१।१ ) इत्यादीनामर्थवादानां विधेयार्थस्तावकतयार्थवत्त्वम् ।

बर्हिषि रजतं न देयम् ( तै. सं १।५।१।२ ) इत्यादिनिषेधशेषाणां सोऽरोदीदित्यादीनामर्थवादानां तु निषेध्यनिन्दकतयेति । अतश्च लक्षणया

---

फलभूयस्त्वकल्पनेति त्वन्यत् । फलभूयस्त्वाकल्पने तु ग्रहणाग्रहणे द्वे अपि श्रुतिर्न निर्दिशेत् । तद्विषये तूष्णीमेवावतिष्ठेतेति । क्रत्वर्थत्वेन प्रतिषेध इति । क्रत्वर्था ये निषेधास्तेषां निवर्तकत्वनिर्वाहस्य निषिध्यमानस्यानुष्ठानं क्रतुवैकल्यावहमित्येवं क्रतुवैकल्याक्षेपेणैव सिद्धत्वात्तत्रानर्थहेतुत्वाक्षेपे प्रमाणाभावादिति भावः । एवं सर्वस्यापीति । विधिमन्त्रनामधेयनिषेधार्थवादरूपेण पञ्चधाविभक्तस्य सर्वविधस्यापि वेदस्येत्यर्थः । विधिमन्त्रनामधेयनिषेधानां चतुर्णां पुरुषार्थानुबन्धित्वं क्रमेण निरूपितम् । अर्थवादस्यापि प्रसङ्गवशेन पुरुषार्थानुबन्धित्वं प्रागुक्तमेव ( पृ. १४ ) । संदर्भशुद्धयेवान्तरभेदनिरूपणाय चेदानीं क्रमप्राप्ता अर्थवादा निरूपणीया इत्याह–प्रकृतमिति । बर्हिषीति । तैत्तिरीयसंहितायां प्रथमाष्टके पञ्चमप्रपाठके प्रथमानुवाक इदमाम्नायते सोऽरोदीद्यदरोदीत्तद्रुद्रस्य रुद्रत्वं यदश्र्वशीयत तद्रजतꣳ हिरण्यमभवत्तस्माद्रजतꣳ हिरण्यमदक्षिण्यमश्रुजꣳ हि यो बर्हिषि ददाति पुरास्य संवत्सराद्गृहे रुदन्ति तस्माद्बर्हिषि न देयम ( तै. सं. १।५।१ ) इति । अस्यार्थः । देवासुरयुद्धे प्रवृत्तेऽसुरेभ्योऽपहृतं मणिमुक्तादिकं श्रेष्ठं वसु देवै रक्षणायाग्नौ निक्षिप्तम् । कदाचित्पराजयश्चेदापद्येत तदुपयुञ्जीतेति तेषामाशयः । लोभाविष्टोऽग्निस्तद्गृहीत्वा पलायत । ततः पुण्यवशेन विजयिभिर्देवैरग्निमन्विष्य हठात्तद्धनं गृहीतम् । ततः सोऽग्निररोदीत् । प्रसङ्गाद्रुद्रशब्दस्य प्रवृत्तिनिमित्तं विधत्ते–यतो रोदनं कृतवांस्ततो रुद्रस्य रुद्रत्वमिति । यदश्रु नेत्रात्सकाशाद्बिन्दुरशीयत भूमावपतत्तद्रजतं

प्राशस्त्यमप्राशस्त्यं च स्वसंनिधिपठितविधिनिषेधापेक्षितत्वात् स्वार्थप्रतिपादने प्रयोजनमलभमानैरर्थवादैर्बोध्यते । तच्च प्राशस्त्यज्ञानं शब्दभावनाया-मितिकर्तव्यतात्वेन संबध्यते ।

परमप्रकृतमनुसरामः । तत्सिद्धं वक्ष्यमाणार्थभावनाभाव्यिका लिङा-दिज्ञानकरणिका प्राशस्त्यज्ञानेतिकर्तव्यताका शाब्दी भावना लिङ्त्वांशेनोच्यत इति ।

ननु केयं शाब्दी भावना । उच्यते । पुरुषप्रवृत्त्यनुकूलो व्यापार-विशेषः । स एव विध्यर्थः । लिङादिश्रवणेऽयं मां प्रवर्तयतीति नियमेन प्रतीतेः । यत्तु इष्टसाधनत्वं विध्यर्थस्तन्न । तथा सति इष्टसाधनमितिशब्दस्य विधि-शब्दः पर्यायः स्यात् । न च पर्यायत्वं युज्यते । संध्योपासनं ते इष्टसाधनं तस्मात्त्वं कुर्विति सहप्रयोगात् । पर्यायाणां च सहप्रयोगाभावात् । अतश्च व्यापारविशेष एव विध्यर्थः । स च लोके पुरुषनिष्ठोऽभिप्रायविशेषः । वेदे तु पुरुषाभावाच्छब्दनिष्ठ एव प्रेरणापरपर्याय इत्युक्तम् ।

ननु लोके शब्दनिष्ठे प्रेरणापरपर्याये व्यापारे शब्दप्रयोगाभावेन शक्ति-

---

हिरण्यमभवद्रजतरूपं धनमभवत्। अत्र हिरण्यशब्दस्य धनसामान्यवाचित्वा-द्रजतं हिरण्यमित्यविरुद्धम् । तस्याश्रुजत्वेन दक्षिणां प्रत्ययोग्यत्वात्तद्दाने संवत्सरादर्वागेतद्गृहे किंचिद्रोदननिमित्तं भवति । तस्माद्बर्हिषि यज्ञे तन्न दद्यादिति तत्र भाष्यम् । स्वसंनिधिपठितेति । विधिर्हि पुरुषाणां प्रवृत्तये विधेयार्थस्य प्राशस्त्यज्ञानमपेक्षते । तथा निषेधोपि पुरुषाणां निवृत्तये निषे-ध्यार्थस्याप्राशस्त्यज्ञानमपेक्षते ।

एवं पञ्चविधं वेदभागं प्रसक्तानुप्रसक्तविचारसहितं विस्तरेण निरूप्येदानीं प्रेक्षावतामवधानाय ग्रन्थारम्भोक्तं ( ६।२ ) स्मारयति-परमेति । वेदविभाग-प्रदर्शनात्पूर्वमेव वक्तुं प्रस्तुतं यद्भावनाद्वैविध्यं तदिदानीं निरूप्यते द्विविध-भावनास्वरूपप्रदर्शनायेति भावः। विध्यर्थ इति । विधिशब्दार्थ इत्यर्थः । संध्योपासनमिति । कुर्वित्यत्र विध्यर्थे लोट्प्रत्ययः । विधिश्चेदिष्टसाधनत्वरूप एव चेत्संध्योपासनं त इष्टसाधनमिति पूर्ववाक्ये तस्यैवोक्तत्वात्पुनरुक्तिः स्यात् । सा चात्र कैरपि नाङ्गीक्रियते । ननु लोक इति । अयमाशयः । यथा लोके देवदत्तेन गामानयेत्युक्ते तद्वाक्यं श्रुत्वा सद्यो यज्ञदत्तेनानीतं पशु-विशेषं दृष्ट्वा तादृशव्यवहारेणायं पशुविशेषो गोशब्दस्यार्थ इत्येवं गोशब्दस्य

ग्रहाभावात्कथं तस्य विधिशब्दात्प्रतिपत्तिरिति चेत्–सत्यमेतत् । तथापि बालस्तावत्स्तन्यदानादौ स्वकृतरोदनादिजनितमातृप्रवृत्तेः स्वाभिप्रायरूपप्रवर्तनाज्ञानजन्यत्वावधारणात्सविधिकप्रयोजकवाक्यश्रवणसमनन्तरभाविनीं प्रयोज्यवृद्धप्रवृत्तिमुपलभ्य तत्कारणत्वेन तस्य प्रवर्तनाज्ञानमनुमिमीते ।

यद्यपि भोजनादौ स्वप्रवृत्तेः समीहितसाधनताज्ञानपूर्वकत्वावधारणात्प्रयोज्यवृद्धप्रवृत्तेरपि तत्पूर्वकत्वाध्यवसानं युक्तम् । तथाप्यन्यप्रेरितप्रवृत्तौ प्रवर्तनाज्ञानजन्यत्वस्योक्तमातृप्रवृत्तौ दर्शनेन प्रयोज्यवृद्धप्रवृत्तेरप्यन्यप्रेरितप्रवृत्तित्वात्तत्कारणत्वेन प्रवर्तनाज्ञानस्यैवाध्यवसानम् ।

तच्च प्रवर्तनाज्ञानमन्वयव्यतिरेकाभ्यां प्रयोजकवाक्यजन्यमित्यवधारयति । तत्र चावापोद्वापाभ्यां प्रवर्तनायां विधिशक्तिमवधारयति ।

---

शक्तिमवधारयति बालस्तथा शब्दभावनात्वेनाभिमतो वैदिकशब्दनिष्ठः प्रेरणारूपः प्रकल्पितो योऽर्थस्तत्र विधिशब्दस्य शक्तिर्व्यवहारतो ज्ञातुं न शक्यते । व्यवहारे प्रेरणायाः पुरुषनिष्ठत्वेनैव दर्शनादिति । समाधत्ते–तथापीति । अयं भावः । विधिशब्दस्य लिङादिप्रत्ययस्य वा या शाब्दभावनायां शक्तिः सा न शाब्दभावनात्वेन विशेषरूपेण । किंतु प्रवर्तनात्वेन सामान्यरूपेण । शाब्दभावना हि प्रवर्तनाविशेषः । प्रवर्तनात्वेन सामान्यरूपेण प्रवर्तनायां या विधिशब्दस्य लिङादिप्रत्ययस्य च शक्तिः सा लोकव्यवहारतोऽवगन्तुं शक्यत एवेति । तदाह–बालस्तावदिति । रुदन्तं बालं दृष्ट्वा तदभिप्रायं प्रकल्प्य तेन प्रेरिता माता बालस्य स्तन्यं ददाति । एवमनुभवन्बालः स्वकृतरोदनेन स्वाभिप्रायं ज्ञातवत्या मातुः स्तन्यदाने प्रवृत्तिरिति प्रकल्पयति । सा च तस्याः प्रवृत्तिर्यस्याः प्रेरणाया ज्ञानेनाभूत्सा प्रवर्तना मदभिप्राय एवेति च मनसि निश्चिनोति । एवं संस्कृतान्तःकरणो बालो गामानयेति देवदत्तवाक्यश्रवणानन्तरं गवानयने जायमाना यज्ञदत्तप्रवृत्तिरपि प्रवर्तनाज्ञानजन्येत्यनुमिनोति । नन्विदमनुमानमयुक्तम् । या या प्रवृत्तिः सा सा प्रवर्तनाज्ञानजन्येति नियमाभावात् । बुभुक्षया जायमानायां भोजनप्रवृत्तौ प्रवर्तनाज्ञानजन्यत्वाभावेन व्यभिचारात् । या या प्रवृत्तिः सा सेष्टसाधनत्वज्ञानजन्येति तु व्याप्तिः संभवतीतीष्टसाधनत्वज्ञानजन्यत्वस्यानुमानं स्यान्नाम, न तु प्रवर्तनाज्ञानजन्यत्वस्यानुमानमिति चेन्न । या या परप्रेरिता प्रवृत्तिः सा सा प्रवर्तनाज्ञानजन्येति नियमस्याव्यभिचारेणोक्तानुमानस्य सुस्थत्वात् । गवानयने जायमानाया यज्ञदत्तप्रवृत्तेर्गामानयेति देवदत्तवाक्यश्रवणानन्तरभावित्वेन परप्रेरितप्रवृत्तित्वनिश्चयात् । रोदनश्रवणसमनन्तरभाविमातृप्रवृत्तिवत् । एवं यज्ञदत्तप्रवृत्तेः प्रवर्तनाज्ञान-

प्रवृत्त्यनुकूलो व्यापारः प्रवर्तना। स च व्यापारः प्रैषादिरूपो विविध इति प्रत्येकं व्यभिचारित्वाद्विधिशब्दवाच्यत्वानुपपत्तेः प्रवर्तनासामान्यमेव विधिशब्दवाच्यमिति कल्पयति। एवं च विधिश्रवणे प्रैषादिरूपस्य वक्त्रभिप्रायस्य प्रवर्तनात्वेनैव रूपेण प्रतीतिर्न विशेषरूपेण। तथैव शक्तिग्रहात्। विशेषरूपेण तु प्रतीतिर्लक्षणयैव।

एवं च वैदिकलिङादिश्रवणेऽपि प्रवर्तनासामान्यमेव प्रतीयते। तत्र कोऽसौ व्यापार इत्यपेक्षायां प्रैषादिरूपस्य वक्त्रभिप्रायस्यापौरुषेये वेदेऽनुपपत्तेः शब्दनिष्ठ एव प्रेरणापरपर्यायः कश्चिद्व्यापार इति कल्प्यते। अतश्च शब्दनिष्ठ एव प्रेरणापरपर्यायो व्यापारः शाब्दी भावना। सैव च प्रवर्तनात्वेन रूपेण विध्यर्थः इति। अयमेव चार्थः—

'अभिधाभावनामाहुरन्यामेव लिङादयः'

(त. वा. २।१।१)

---

जन्यत्वेनुमिते तादृशप्रवर्तनाज्ञानस्य किं कारणमित्यालोचने गामानयेति देवदत्तवाक्यमेव तत्कारणमन्वयव्यतिरेकाभ्यां सिध्यति। गामानयेति वाक्यश्रवणे प्रवर्तनाज्ञानमित्यन्वयः। तादृशवाक्यश्रवणात्प्राक्प्रवर्तनाज्ञानाभाव इति व्यतिरेकः। यतश्च गामानयेति प्रयोजकदेवदत्तवाक्याद्यज्ञदत्तस्य प्रवर्तनाज्ञानं जायते ततस्तादृशवाक्यघटकस्य कस्यचित्प्रवर्तनारूपेर्थे शक्तिः सिद्धा भवति। सा चानयेत्यत्रत्यविधिप्रत्ययस्यैव। विधिप्रत्ययस्योद्वापे तत्स्थाने प्रत्ययान्तरस्यावापे गामानयत् इति वाक्यमुच्चार्यते चेत्तत्र प्रवृत्त्यदर्शनेन प्रवर्तनाज्ञानस्याभावात्। आवापः संग्रहः। उद्वापस्त्यागः। तथा च प्रवर्तनात्वेन प्रवर्तनायां विधिप्रत्ययस्य शक्तिर्लोकतोऽपि सिद्धा भवतीति सिद्धम्। शाब्दभावनात्वेन विशेषरूपेण तु शक्तिर्न लोकतः सिध्यति। शाब्दभावनाया लोके अदर्शनात्। नैव चेष्यते। यतो लोके दृश्यमानं यत्प्रवर्तनाविशेषरूपं प्रैषाध्येषणादि तेनापि रूपेण न विधिप्रत्ययस्य शक्तिः। प्रैषत्वेन शक्तौ कल्पितायामध्येषणायां व्यभिचारः स्यात्। अध्येषणात्वेन शक्तौ प्रैषे व्यभिचारः स्यात्। यथा शुक्लगवानयने दृष्टेपि न गोपदस्य शुक्लगोत्वेन विशेषरूपेण शक्तिः। व्यवहारदर्शने बालस्य बुद्धौ सद्य आरूढोपि शुक्लांशः पश्चाद्व्यभिचारदर्शनेन शक्यादपसार्यते तद्वत्। भृत्यादेर्निकृष्टस्य प्रवर्तना प्रैषः। गुर्वादेराराध्यस्य प्रवर्तनाध्येषणा। लक्षणयैवेति। गामानय स्वर्गकामो यजेतेत्यादौ लोके वेदे वा प्रवर्तनाया विशेषरूपेण प्रतीतिः शाब्दबोधे विवक्षिता चेत्सा लक्षणयैव साधनीयेति भावः। अभिधाभावनामिति। अभिधाया

इति वार्तिकस्य । अभिधीयते अनेनेति व्युत्पत्त्याऽभिधाशब्देन विधिशब्द उच्यते । तद्व्यापारात्मिका भावना लिङादिवाच्येति केचिदाचार्याः ।

अन्ये त्वाहुः । सत्यं प्रवर्तनासामान्यं विध्यर्थः । तथैव शक्तिग्रहात् । प्रवृत्त्यनुकूलो व्यापारः प्रवर्तना । अपौरुषेये च वेदे प्रैषादेरसंभवात्कश्चित्पुरुषप्रवृत्त्यनुकूलो व्यापारविशेषः कल्पनीयः । विधिशब्दाभिधेयप्रवर्तनासामान्यस्य विशेषमन्तरेणापर्यवसानात् । तत्र कोऽसौ व्यापारविशेष इत्यपेक्षयां धात्वर्थगतं समीहितसाधनत्वमेवेति कल्प्यते । तस्यापि प्रवृत्त्यनुकूलत्वात् । सर्वो हि समीहितसाधनतां ज्ञात्वा प्रवर्तते । अन्यप्रेरितो यदीष्टसाधनतां न जानाति तदा नैव प्रवर्तते ।

---

भावनेति षष्ठीतत्पुरुषः । अभिधाशब्दः करणसाधनः शब्दपर्यायः । तन्निष्ठा भावना वैदिकशब्दनिष्ठत्वेन प्रकल्पितः कश्चित्प्रवर्तनाविशेषरूपो व्यापारः । लोके लिङादिप्रत्ययाः प्रवर्तनात्वेन सामान्यरूपेण प्रैषादिरूपां प्रवर्तनां वदन्ति । वेदे तु प्रैषाद्यपेक्षयान्यामेव कांचिच्छब्दभावनां लिङादय आहुरित्यर्थः । केचिदाचार्याः । न्यायसुधाकाराः ।

अत्र पार्थसारथिमिश्राणां मतं प्रदर्शयति—अन्ये त्वाहुरित्यादिना प्रवर्तनामिति ( पृ. २७४-२ ) इत्यन्तेन । न्यायसुधाकृदुक्तेर्थे यावानंशः पार्थसारथिमिश्राणां संमतस्तमादौ सत्यमित्यादिना प्रदर्श्य तत्र विशेषं दर्शयति—धात्वर्थगतमिति । यजेतेत्यत्र प्रवर्तनाविशेषः क इत्यपेक्षायां शब्दनिष्ठः कश्चिदर्थो लोकाप्रसिद्धः कल्पनीयस्तस्य प्रवृत्तिहेतुत्वं च कल्पनीयमिति गौरवम् । तदपेक्षया धात्वर्थे यागे इष्टसाधनत्वं विद्यते । इष्टसाधनत्वस्य च प्रवृत्तिहेतुत्वं लोकतोवगम्यते चेत्येवमिष्टसाधनतैवात्र प्रवर्तनाविशेष इत्यङ्गीकारे लाघवं भवति । ज्ञात्वेति । ज्ञात्वैवेत्यर्थः । प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तत इति न्यायः । तत्र परप्रेरणां विनैव यो भोजनादौ तृप्त्याद्यर्थं प्रवर्तते तत्र समीहितसाधनत्वज्ञानमस्त्येवेति निर्विवादम् । भुङ्क्ष्वेत्येवमन्येन प्रेरितोपि समीहिततृप्तिसाधनताज्ञानेनैव प्रवर्तते । यत्रापि परप्रेरणया प्रवर्तमानः स्वसमीहितविशेषं किंचिन्न जानाति तत्रापि यतोयं मां प्रेरयति ततोत्र मदिष्टं किंचित्स्यादेवेति प्रकल्प्यैव प्रवर्तते । क्वचिच्च प्रेरकप्रीतिसंपादनमपीष्टं भवति । अनेन प्रेरितोहं यदि तथा न करोमि तर्ह्यस्याप्रीतिः स्यादित्येतावतापि प्रवृत्तिर्दृश्यते । सर्वथापि समीहितसाधनताज्ञानं सर्वत्रैव सिद्धं भवति । तदाह—अन्यप्रेरित इति । ननु यजेतेत्यत्र प्रवर्तनाविशेषः कश्चिल्लोकविलक्षणः स्वीकार्य एव । स

स्वतन्त्रप्रेरणावादेऽपि तदाक्षिप्तसमीहितसाधनताज्ञानं स्वीक्रियत एव । अन्यथा विधेः प्रवर्तकत्वानुपपत्तेः । अतश्चावश्यकत्वात्समीहितसाधनतैव प्रवर्तनात्वेन रूपेण विध्यर्थः । एवं च विधिशब्दस्यान्यनिष्ठव्यापारबोधकत्वं लोकसिद्धं सिद्धं भवति ।

किंच शब्दे एको व्यापारः स्पन्दाद्यतिरिक्तः कल्पनीयः । तस्य च स्वप्रवृत्तौ पराधीनप्रवृत्तौ वा कारणत्वेनाक्लृप्तस्य प्रवर्तनात्वेन रूपेण ज्ञातस्य प्रवृत्त्यनुकूलत्वं शब्दस्य च परनिष्ठव्यापारज्ञापकत्वेन क्लृप्तस्य स्वनिष्ठव्यापारबोधकत्वं विधेश्च प्रवर्तकत्वनिर्वाहार्थं धात्वर्थस्य समीहितसाधनत्वमिति

---

च पूर्वमते शब्दनिष्ठो व्यापारो गृहीतः । एतन्मते त्विष्टसाधनतारूपो गृह्यत इति सममेवेत्यत आह—स्वतन्त्रेति । प्रेरणा प्रवर्तनेति पर्यायः । लोके प्रेषणाध्येषणादिरूपा ये प्रेरणाभेदा दृश्यन्ते तदपेक्षया स्वतन्त्रैवेयं वैदिकशब्दनिष्ठव्यापारविशेषरूपा प्रेरणेति ये न्यायसुधाकारा मन्यन्ते तन्मतेपि इष्टसाधनत्वज्ञानं प्रवृत्तौ प्रेरणायाः सहकारिकारणत्वेनावश्यं कल्पनीयमेव । अन्यथा विधिशतेनापि प्रवृत्तिर्न स्यादिति विधेः प्रवर्तकत्वानुपपत्तिः । तथा च पूर्वमते प्रवृत्तिकारणीभूतस्य प्रवर्तनाविशेषस्य सहायत्वेनावश्यं कल्पनीया येष्टसाधनतामतिः सास्माभिः प्रवर्तनाविशेष इति मत्वा प्रवृत्तिकारणत्वेन स्वीक्रियते । सहायत्वेन तत्कल्पना च मास्त्वित्यपरं लाघवमिति भावः । एवं चेति । विधिबोधको लिङादिप्रत्ययो विधिशब्दः । स च लोके भुञ्जीतेत्यादौ सर्वत्रैव यं प्रैषादिरूपं प्रवर्तनाविशेषं बोधयति स न क्वापि लिङादिप्रत्ययनिष्ठः । किंतु प्रेरकदेवदत्तादिनिष्ठः । तथा च लोकव्यवहारानुसारेणान्यनिष्ठव्यापारबोधकत्वं लिङादिप्रत्ययस्य सिद्धं भवति । तथा च वेदे यजेतेत्यादौ लोकविरुद्धं स्वनिष्ठव्यापारबोधकत्वं लिङादिप्रत्ययस्य कल्पयितुं न शक्यत इति भावः ।

दूषणान्तरमाह -- किं च शब्द इति । अयं भावः । शब्दो यजेतेत्येतद्घटकलिङादिप्रत्ययः । तत्र यो व्यापारो न दृश्यते स यजमानस्य यागादौ प्रवृत्त्युत्पादनाय कल्पनीय इत्येकं गौरवम् । प्रवृत्त्युत्पादको व्यापारश्च स्पन्दरूपः । स्पन्दश्चलनम् । यथा वायुगतः स्पन्दः पर्णादौ प्रवृत्तिमुत्पादयति । तथा च शब्दे कल्प्यमानो व्यापारो यदि स्पन्दः कल्प्येत तर्हि तस्य प्रवृत्त्युत्पादनसामर्थ्यं नैसर्गिकं स्यात् । परंतु शब्दस्य मीमांसकैर्व्यापकत्वाङ्गीकाराद्व्यापके चाकाशादौ स्पन्दस्यासंभवात्स्पन्दातिरिक्त एव कल्पनीयो भवति । स्पन्दातिरिक्ते व्यापारे च प्रवृत्त्युत्पादनसामर्थ्यं न दृष्टमित्यतोत्र कल्पिते शब्दनिष्ठे व्यापारे तादृशं सामर्थ्यं कल्पनीयमिति द्वितीयं गौरवम् । प्रेरणां

कल्पनाद्वरमावश्यकस्यैव समीहितसाधनत्वस्य स्वप्रवृत्तिहेतुत्वेन क्लृप्तस्य प्रवर्तनात्वेन रूपेण विध्यर्थत्वकल्पनम् । लाघवात् । अन्यनिष्ठत्वाच्च ।

न च विधेः प्रवर्तकत्वनिर्वाहार्थं समीहितसाधनत्वकल्पनात्प्रेरणानभिधाने च विधेः प्रवर्तकत्वाभावाद्धात्वर्थस्य च समीहितसाधनत्वकल्पकमेव नास्तीति वाच्यम् । प्रवर्तनाभिधानेनैव तन्मतेऽपि विधेः प्रवर्तकत्वाद्विध्यभिहितस्य च प्रवर्तनासामान्यस्य विशेषमन्तरेणापर्यवसानात्समीहितसाधनत्वाक्षेपकत्वात् ।

---

विना स्वतो जायमाना प्रवृत्तिः स्वप्रवृत्तिः । परप्रेरणया जायमाना प्रवृत्तिः पराधीनप्रवृत्तिः । द्विविधायामपि प्रवृत्तौ प्रवृत्त्याश्रये प्रवृत्तिहेतुभूता चलनक्रिया दृश्यते । चलनातिरिक्तो व्यापारः प्रवृत्तिहेतुत्वेन न दृश्यत इति तस्य तादृशं सामर्थ्यमपि कल्पनीयं भवतीति । अन्यच्च लोके लिङादिः प्रत्ययः प्रयोजकनिष्ठं प्रैषादिरूपं व्यापारं बोधयति । यजेतेत्यादौ वेदे तद्विलक्षण्येन लिङादिप्रत्ययः स्वनिष्ठव्यापारस्यैव बोधक इति कल्पनीयमिति तृतीयं गौरवम् । तथा प्रवृत्तौ साधनीयायां प्रेरणायाः साहाय्यत्वेन धात्वर्थस्येष्टसाधनत्वं च कल्पनीयमिति चतुर्थं गौरवमित्येवं गौरवपरंपरा दुरुद्धरा भवति । तदपेक्षया चेष्टसाधनतारूप एव प्रवर्तनाविशेषो लिङादिप्रत्ययबोध्य इति कल्पनायां लाघवं भवति । यतोऽत्र पूर्वोक्तकल्पनाचतुष्टयमध्ये एकैवेष्टसाधनत्वप्रकल्पना क्रियते । पूर्वमते प्रवर्तनाविशेषस्य सहायत्वेनैतन्मते च प्रवर्तनाविशेषत्वेनैव तत्कल्पनमित्यन्यत् । परं त्वाद्यं कल्पनात्रयं सुतरामनावश्यकम् । समीहितसाधनत्वस्यावश्यकत्वात् तेनैव सिद्धौ न प्रथमा शब्दनिष्ठव्यापारकल्पना । समीहितसाधनत्वस्य स्वप्रवृत्तिहेतुत्वेन लोके क्लृप्तत्वाच्च द्वितीया । लिङादिप्रत्ययस्य धात्वर्थगतसमीहितसाधनत्वबोधकत्वाच्च स्वनिष्ठव्यापारबोधकत्वरूपा तृतीया कल्पनेति । न च विधेरिति । अयं शङ्काशयः । लिङादिप्रत्ययरूपे शब्दे कश्चनापूर्वो व्यापारविशेषः प्रवर्तनात्वेन मया कल्पित इति सत्यम् । परं तु तादृशप्रवर्तकत्वनिर्वाहार्थं तद्बलादेव यागे इष्टसाधनत्वं कल्पितं भवति । शब्दे तादृशं व्यापारविशेषमनङ्गीकुर्वतो भवतो मते तु यागे यदिष्टसाधनत्वं कल्प्यते तत्कस्य बलात्कल्प्यते । नहि यागे स्वर्गादिसाधनत्वं लोके क्वचिद्दृष्टचरं भवति । तथा च यागे इष्टसाधनत्वमपूर्वं कल्पनीयं तस्य लिङादिप्रत्ययवाच्यत्वं च कल्पनीयं भवतीति कल्पनाद्वयं भवत्येवेति । समाधत्ते—प्रवर्तनेति । अयं भावः । यथा शङ्कमते शब्दनिष्ठः कश्चन व्यापारविशेषः प्रवर्तनात्वेनैव रूपेण लिङादिप्रत्ययवाच्यः कल्प्यते तथा सिद्धान्तिमतेऽपि धात्वर्थगतमिष्टसाधनत्वज्ञानं प्रवर्तनात्वेनैव रूपेण प्रत्यय-

न चेष्टसाधनत्वस्य विध्यर्थत्वे संध्योपासनं ते इष्टसाधनं तत्त्वं कुर्विति सहप्रयोगानुपपत्तिरिति वाच्यम् । इष्टसाधनत्वस्य विशेषरूपेण विधिनानभिधानात् । प्रवर्तनात्वेन रूपेणाभिधानात् । सामान्यशब्दस्य च विशेषशब्देन दृष्टः सहप्रयोगः पाञ्चालराजो द्रुपद इत्यादौ । तस्मात्समीहितसाधनतैव प्रवर्तनात्वेन रूपेण विध्यर्थः सैव च तेन रूपेण शब्देनैवाभिधीयत इति शाब्दी भावना ।

उक्तवार्तिकस्यापि अयमेवाभिप्रायः । अभिधीयते साऽभिधा समीहितसाधनता । सैव प्रवर्तनात्वेनाभिहिता पुरुषप्रवृत्तिं भावयतीति भावना । तां लिङादय आहुरिति । यथाहुः—

---

वाच्यम । शङ्कमते प्रवर्तकत्वानिर्वाहार्थं धात्वर्थे इष्टसाधनत्वं कल्पितम । सिद्धान्तिमते तु प्रवर्तनासामान्यस्य विशेषं विना पर्यवसानाभावेन प्रवर्तनाविशेषरूपप्रदर्शनार्थं कल्पितम । शङ्कमतेपि शब्दनिष्ठप्रवर्तनाया विशेषरूपं किंचित्कल्पनीयमेव । प्रवर्तकत्वानिर्वाहार्थं तु न सिद्धान्तिमते किंचित्कल्पनीयं भवतीति लाघवमेव । इष्टसाधनत्वरूपायाः प्रवर्तनायाः स्वत एव प्रवर्तकत्वस्य लोकतोवगमात ।

अथ शब्दनिष्ठव्यापारविशेषवादिना न च पर्यायत्वम ( २६७।१० ) इत्यादिना यदुक्तं तदाक्षिप्य खण्डयति—न चेष्टसाधनत्वेत्यादिना । विधिनेति । विधिबोधकेन वैदिकलिङादिप्रत्ययेनेत्यर्थः । सैव चेति । प्रवर्तनाविशेषरूपेष्टसाधनतैव प्रवर्तनात्वेन सामान्यरूपेण लिङादिप्रत्ययेनैवाभिधीयते । अत्र शब्देनैवाभिधीयत इत्युक्त्या शाब्दीत्येतच्छब्दस्य निरुक्तिर्दर्शिता । शब्देनाभिधीयते सा शाब्दी न तु शब्दनिष्ठा शाब्दीति । यजेतेत्यत्र प्रवर्तनात्वेन सामान्यरूपेणेष्टसाधनतारूपविशेषार्थस्य शाब्दे बोधे भानं विवक्षितम । एतादृशं च भानमन्यत्र लक्षणया साध्यते । अत्र तु शक्त्यैव । शब्दशक्तिवैचित्र्यात् । एतच्चात्र शब्देनैवेत्येवकारेण द्योतितम । एतन्मूलकमेव चास्याः शाब्दीति नाम । अन्यथार्थ्या भावनाया अपि शब्देनाभिधानात्तस्या अपि शाब्दीत्वं स्यादित्याशय इति वदन्ति केचित् । उक्तवार्तिकस्येति । अभिधाभावनामाहुरन्यामेव लिङादय इति वार्तिकेऽभिधाशब्दः कर्मसाधनो न तु करणसाधनः । भावनाशब्दश्च कर्तृसाधनः । प्रवृत्तिं भावयति जनयतीति भावना । लोके या प्रेषणाध्येषणादिरूपा प्रवर्तना दृश्यते तदपेक्षयान्यामेव कांचिदभिधाभावनां वेदे लिङादय आहुरिति तदर्थः । यथाहुरिति । विधिविवेके मण्डनमिश्रा इति शेषः । इष्टाभ्युपायत्वमिष्टसाधनता । तदपेक्षयान्यः कश्चि-

पुंसां नेष्टाभ्युपायत्वात्क्रियास्वन्यः प्रवर्तकः ।
प्रवृत्तिहेतुं धर्मं च प्रवदन्ति प्रवर्तनाम् ॥ (विधिविवेक) इति।

तत्सिद्धं यजेतेत्यत्र लिङ्त्वांशेन शाब्दी भावनोच्यत इति। आख्यातत्वांशेनार्थी भावनोच्यते। ननु केयमार्थी भावना। कर्तृव्यापार इति चेन्न। यागादेरपि तद्व्यापारत्वेन भावनात्वापत्तेः। न चेष्टापत्तिः। तस्य प्रकृत्यर्थत्वेन प्रत्ययार्थत्वाभावात्—इति चेत्—अत्राहुः। सत्यं न यागो भावना। किंतु स्वर्गेच्छाजनितो यागविषयो यः प्रयत्नः स भावना। स एव चाख्यातांशेनोच्यते। यजेतेत्याख्यातश्रवणे यागेन यतेतेति प्रतीतेर्जायमानत्वात्।

यश्च प्रयत्नपूर्वकं गमनादि करोति तस्मिन्देवदत्तो गमनं करोतीति करोतिप्रयोगदर्शनात्। वातादिना स्पन्दमाने तु नायं करोति किंतु वातादिनाऽस्य स्पन्दो जायत इति प्रयोगात्। करोत्यर्थस्तावत्प्रयत्नः। करोतिसामानाधिकरण्यं चाख्याते दृश्यते। यजेत यागेन कुर्यात् पचति पाकं करोति गच्छति गमनं करोतीति।

अतश्च करोतिसामानाधिकरण्याद्यत्नस्याख्यातवाच्यत्वम्। न च रथो गच्छतीति प्रयोगानुपपत्तिः। रथे यत्नाभावादिति वाच्यम्। वोढृस्थगतं

---

त्क्रियासु पुरुषाणां प्रवर्तको नास्ति। प्रवृत्तिहेतुभूत इष्टसाधनतारूपो यो धर्मस्तं प्रवर्तनां मनीषिणो वदन्तीत्यर्थः।

प्रकृत्यर्थत्वेनेति। एवं च तस्यान्यलभ्यत्वेन प्रत्ययार्थत्वाङ्गीकारोऽनुचित इत्याशयः। यः प्रयत्न इति। यागः शरीरसाध्यो बाह्यव्यापारविशेषः। शरीरस्येन्द्रियाणां च प्रेरकं मनः। स्वर्गादीच्छया प्रेरितं मनः शरीरेन्द्रियाणि प्रवर्तयति। निर्व्यापारं च मनः सुषुप्ताविव न प्रेरकं भवतीति शरीरसाध्यबाह्यव्यापारात्पूर्वं कश्चिन्मनोव्यापारः कल्पयितव्यः। स एव प्रयत्न इत्युच्यते। स एव चात्रार्थी भावनेति व्यपदिश्यते। यतधातोरयमेव व्यापारोऽर्थः। यती प्रयत्ने इति धातुपाठे पठ्यते। यागेन यजेतेति। यागसाधनकः स्वर्गविषयको यत्नः इत्यर्थः। कृधातोरप्ययमर्थ इत्याह—यश्च प्रयत्नपूर्वकमिति। यजेत यागेनेति। यजेतेत्यस्य विवरणं यागेन कुर्यादिति। यजेतेत्यत्र प्रकृतिप्रत्ययरूपं भागद्वयम्। तत्र प्रकृतिभागस्य विवरणं यागेनेति। प्रत्ययभागस्याख्यातस्य विवरणं कुर्यादिति। अत आख्यातप्रत्ययस्य कृतिरर्थः सिध्यति। कृतिश्च प्रयत्नः। करोतिसामानाधिकरण्यं च करोतिना सहैकार्थबोधकत्वम्। रथे यत्नाभावादिति। रथस्याचेतनत्वेन तत्र मानसव्यापारविशेषस्य यत्न-

प्रयत्नं रथे आरोप्य प्रयोगोपपत्तेः ।

यन्मतेऽप्यन्योत्पादनानुकूलं व्यापारसामान्यं भावना तन्मतेऽपि रथे गमनातिरिक्तव्यापारानुपलब्धे रथो गच्छतीति प्रयोगस्यौपचारिकत्वमेवेति । अतश्च प्रयत्न एवार्थी भावना । यथाहुः—

प्रयत्नव्यतिरिक्तार्थी भावना तु न शक्यते ।
वक्तुमाख्यातवाच्येह प्रस्तुतेत्युपरम्यते ॥ (न्यायसुधा) इति ।

अन्ये त्वाहुः । भवितुर्भवनानुकूलो भावकव्यापारस्तावद्भावना । यस्मिन्व्यापारे कृते करणं फलोत्पादनाय समर्थं भवति तादृशो व्यापार इति यावत् । स एव चाख्यातार्थः । कुठारेण छिनत्तीत्याख्यातश्रवणे हि भवत्येतादृशी मतिः कुठारेण तथा व्याप्रियेत यस्मिन्व्यापारे कृते कुठारेण छेदनं भवतीति । एवं यजेत स्वर्गकाम इत्यस्यायमर्थः—यागेन तथा व्याप्रियेत यस्मिन्व्यापारे कृते यागात्स्वर्गो भवतीति । स च व्यापारः क्वचिदुद्यमननिपातनादिः क्वचिच्चाग्न्यन्वाधानादिब्राह्मणतर्पणान्तः कथंभावाकाङ्क्षायां विशेषरूपेण पश्चादवगम्यते ।

---

स्यासंभवादित्याशयः । प्रयोगोपपत्तेरिति । अन्ये त्वत्राख्यातस्याख्यातत्वेनैकत्वसंख्यामात्रबोधकत्वं न तु यत्नार्थकत्वम् । वर्तमानकालस्तु लट्त्वांशेनोच्यत एवेत्याहुः । यन्मतेपीति । चेतननिष्ठः प्रयत्नः । अचेतननिष्ठः स्पन्दः । तादृशोभयसाधारणमन्योत्पादानुकूलं व्यापारसामान्यमाख्यातार्थः । अन्यपदेन धात्वर्थ उच्यते । एतन्मतेपि रथो गच्छतीत्यत्रानुपपत्तिरस्त्येव । गमधात्वर्थोत्रोत्तरदेशसंयोगानुकूलव्यापारः । स एव रथे दृश्यते न तु तदुत्पत्त्यनुकूलं व्यापारान्तरं तत्र किंचिद्दृश्यते । तथा चाख्यातार्थस्यानुपपत्तिरित्याख्यातस्याश्रयेर्थे लक्षणा स्वीकर्तव्या भवति । यथाहुरिति । न्यायसुधायामेतदुक्तम् ।

पार्थसारथिमिश्रमतमाह—अन्ये त्वाहुरिति । भवितुरुत्पद्यमानस्य यद्भवनमुत्पत्तिस्तदनुकूलो यस्तदुत्पादकस्य व्यापारः सा भावना । यद्व्यापारादनन्तरं तत्रत्यं यागकुठारादिकं करणं फलप्रदानायोद्यतं भवति स व्यापार इत्यर्थः । स एव चेति । अन्वाधानादिर्व्यापारो देवतोद्देश्यकहविःप्रक्षेपानुकूलत्वेन विशेषरूपेण यजधातुवाच्यः । अन्योत्पादानुकूलत्वेन सामान्यरूपेण स एवाख्यातप्रत्ययवाच्यः । स च व्यापार इति । स चाख्यातवाच्यो व्यापारः कीदृश इत्येवं कथंभावाकाङ्क्षायां क्वचिदुद्यमनादिः क्वचिदग्न्यन्वाधानादि-

अन्योत्पादानुकूलत्वेन सामान्यतस्त्वाख्यातादेव । रथो ग्रामं गच्छतीत्यत्रापि आख्यातेन ग्रामप्राप्त्यनुकूलो व्यापार एव प्रतीयते । रथस्तथा गमनेन व्याप्रियते यस्मिन्व्यापारे कृते गमनाद्ग्रामप्राप्तिर्भवतीति प्रतीतेः । नत्वत्र गमनमात्रमाख्यातार्थः । तस्य धातुनोक्तत्वात् । तत्र कोऽसौ व्यापार इत्यपेक्षायां पूर्वोत्तरावान्तरदेशविभजनसंयोजनरूप इति पश्चादवगम्यते । पूर्वेण प्रदेशेन विभज्योत्तरेण संयुज्य रथो ग्रामं गच्छतीति प्रयोगात् । उद्यम्य निपात्य कुठारेणच्छिनत्तीतिवत् ।

एवं देवदत्तः प्रयतत इत्यत्रापि देवदत्तस्तथा व्याप्रियते यथा प्रयत्नो भवतीति प्रयत्नानुकूलो व्यापार एवाख्यातार्थो न तु प्रयत्नः । तस्य धातुनोक्तत्वात् । व्यापारविशेषापेक्षायां चेच्छादिः पश्चादवगम्यते । उद्यमननिपातनवत् ।

---

रित्येवं विशेषरूपेण पश्चादवगम्यत इत्यर्थः । सामान्यत इति । तदुक्तमाचार्यैः—

धात्वर्थव्यतिरेकेण यद्यप्येषा न लक्ष्यते ।
तथापि सर्वसामान्यरूपेणैवावगम्यते ॥ इति ।

विस्तरस्तु जैमिनीयन्यायमालायां द्वितीयाध्यायप्रथमपादप्रथमाधिकरणे द्रष्टव्यः । ग्रामप्राप्त्यनुकूल इति । ग्रामप्राप्त्यनुकूलो यो व्यापारः स एव सामान्यरूपेणाख्याततः प्रतीयते । ग्रामप्राप्त्यनुकूलत्वेन विशेषरूपेण तु धातुत एव । गमनमात्रमिति । प्रयत्नस्याख्यातवाच्यत्वं मन्वाना रथो गच्छतीत्यत्र प्रयत्नासंभवात्तादृशस्थलविशेषे गमनमात्रमाख्यातार्थ इति वदन्ति तेषामनन्यलभ्यः शब्दार्थ इति न्यायविरोध इति भावः । एवं देवदत्तः प्रयतत इत्यत्रापि तेषामुक्तन्यायविरोध इत्याह—एवं देवदत्त इति । इच्छादिरिति । ननु यथा छिनत्ति गच्छतीत्यादावन्योत्पादानुकूलत्वेन सामान्यरूपेणाख्यातात्प्रतीतोऽर्थो विशेषरूपेण धातुतः प्रतीयते तथा देवदत्तः प्रयतत इत्यत्र विशेषरूपेण प्रतीतिः कस्माद्भवति । नहि यतधातुतः शक्त्या तादृशी प्रतीतिः । तस्य प्रयत्नमात्रवाचित्वादिति चेन्न । विशेषरूपेण प्रतीतिः सर्वत्र शाब्द्येवेति नियमाभावात् । मनुष्यमानयेत्युक्ते विशेषवाचकपदाभावेपि तत्र तत्र प्रकारान्तरेणोपस्थिततः कश्चिद्विशेष आनीयते । अन्ये त्वत्रापि प्रयत्नानुकूलो व्यापार एव यतधात्वर्थः इत्याहुः । एतन्मतेन्योत्पादानुकूलत्वेन सामान्यरूपेणेच्छायाः प्रतीतिराख्यातात् । प्रयत्नानुकूलत्वेन विशेषरूपेणेच्छायाः प्रतीतिर्धातुतः । तदपेक्षयापि विशेषरूपेणेच्छात्वेन प्रतीतिस्त्वत्र न कस्माद्-

तथा च सर्वत्रानुगतत्वादन्योत्पादानुकूलव्यापारसामान्यमेवाख्यातार्थः । न तु प्रयत्नमात्रम् । रथो गच्छति देवदत्तः प्रयतत इत्यादिषु तदभावात् । न चात्रौपचारिकत्वं वक्तुं युक्तम् । मुख्ये संभवति तस्यान्याय्यत्वात् । करोत्यर्थोऽप्यन्योत्पादानुकूलो व्यापार एव न प्रयत्नमात्रम् । करोतेश्चेतनाचेतनकर्तृकाख्यातसामानाधिकरण्यादिति । तत्सिद्धमन्योत्पादानुकूलो व्यापार आर्थी भावनेति ।

सैव चाख्यातांशेनोच्यते भावयेदिति । तस्याश्च भाव्याकाङ्क्षायां स्वर्गादि भाव्यत्वेन संबध्यते । करणाकाङ्क्षायां यागादिः करणत्वेन संबध्यते । प्रयाजादय इतिकर्तव्यतात्वेन । एवंच यजेतेत्यादिना स्वर्गाद्युद्देशेन यागादेर्विधानात्सिद्धं यागादेर्धर्मत्वम् । प्रयोजनमुद्दिश्य वेदेन विहितत्वादिति ।

सोयं धर्मो यदुद्देशेन विहितस्तदुद्देशेन क्रियमाणस्तद्धेतुः । श्रीगोविन्दा-

---

प्युभयमतेपीति बोध्यम् । किंचान्योत्पादानुकूलो व्यापार आख्यातार्थ इत्यत्रान्यशब्देन प्रायः सर्वत्र धातुवाच्यं ग्रामव्याप्त्यादिकं फलं गृह्यते तद्वदेव देवदत्तः प्रयतत इत्यत्रापि प्रयत्नरूपं फलमेवान्यशब्देन गृह्यते । प्रयत्नानुकूलो व्यापारो यत्धात्वर्थः इति मते प्रयत्नस्य फलत्वात् । तथा च सर्वत्रैकरूपता सिध्यतीति बोध्यम् । एतेन यजेतेत्यस्य यागेन यतेतेति विवरणात्तदनुसारेण प्रयत्नस्याख्यातवाच्यत्वमिति प्रागुक्त-( पृ. २७४-८ ) मपास्तम् । विवरणेपि यतेतेत्यतः प्रयत्नानुकूलव्यापारस्य प्रतीतेः । तदभावादिति । प्रयत्नस्याख्यातार्थत्वासंभवादित्यर्थः । तत्राचेतने रथे प्रयत्नो नास्त्येव । देवदत्तः प्रयतत इत्यत्र देवदत्ते प्रयत्नसंभवेपि तस्य धातुनोक्तत्वान्नाख्यातार्थत्वसंभव इति भावः । औपचारिकत्वमिति । आख्यातस्य यत्नार्थकत्वं परित्यज्याश्रयेर्थे लक्षणया वाक्यार्थयोजना स्यादित्याशयः । अथ प्रयत्नस्याख्यातवाच्यत्वं मन्यमानेन तत्साधकतया 'यत्र प्रयत्नपूर्वकम्' ( पृ. २७४।१ ) इत्यादि यदुक्तं तत्खण्डयति--करोत्यर्थोपीति । चेतनाचेतनेति । तत्र देवदत्तो गमनं करोतीत्यादिश्चेतने कर्तरि प्रयोगः प्रसिद्ध एव । अचेतनेपि विद्या कीर्तिं करोतीत्यादौ दृश्यत एव । तथा च कृधातोर्यत्नमात्रार्थकत्वाभावेन न यजेतेत्यादेर्यागेन कुर्यादिति विवरणमाख्यातस्य प्रयत्नार्थकत्वे साधकं भवतीति भावः ।

आख्यातांशेनेति । तथा चार्थभावनायां वाच्यायामाख्यातत्वं शक्ततावच्छेदकमिति भावः । सोयं धर्म इति । यजेत स्वर्गकाम इति वाक्येन स्वर्गोद्देशेन यागो विधीयत इति स यागः स्वर्गोद्देशेन क्रियमाणश्चेत्स्वर्गहेतुर्भवति ।

र्पणबुद्ध्या क्रियमाणस्तु निःश्रेयसहेतुः । न च तदर्पणबुद्ध्यानुष्ठाने प्रमाणाभावः ।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ ( गीता २।१७ )

इतिस्मृतेः । अस्याश्चाष्टकादिस्मृतिवत्प्रामाण्यादित्यन्यत्र विस्तरः ॥

काहं मन्दमतिः केयं प्रक्रिया भाट्टसंमता ।
तस्माद्भक्तेर्विलासोऽयं गोविन्दगुरुपादयोः ॥
ग्रन्थरूपो मदीयोऽयं वाग्व्यापारः सुशोभनः ।
अनेन प्रीयतां देवो गोविन्दो भक्तवत्सलः ॥

इति श्रीमदनन्तदेवसूनुना आपदेवेन कृतं मीमांसान्याय-
प्रकाशसंज्ञकं मीमांसाप्रकरणं समाप्तम् ॥

---

परमेश्वरप्रीत्यर्थं क्रियते चेत्परमेश्वरप्रीतिद्वारा मोक्षहेतुर्भवति । प्रमाणाभाव इति । यजेतेश्वरप्रीतिकाम इतिश्रुत्यदर्शनादित्याशयः । अष्टकादीति । यथाष्टकाश्राद्धप्रतिपादिका स्मृतिः स्वमूलभूतां श्रुतिमनुमापयन्ती तादृशश्रुतिमूलकत्वात्प्रमाणं भवति तद्वत्तत्कुरुष्व मदर्पणमिति स्मृतिरपि तादृशार्थबोधकानुमितश्रुतिमूलकत्वात्प्रमाणं भवति । तथा च श्रीपरमेश्वरप्रीत्यर्थमिति संकल्प्य कृताद्यागादिधर्मान्मोक्षप्राप्तिर्भवतीति तात्पर्यम् । अथ ग्रन्थकारः स्वौद्धत्यं परिहरति—काहमिति । गुरुपादविषयिणी दृढा भक्तिरेवात्र कर्मणि मां मुखरीकरोतीत्यर्थ इति शिवम् ॥

इति श्रीविद्वन्मुकुटरत्नभास्करशास्त्र्यन्तेवासिसकलविद्यापारंगत-
पण्डितरामशास्त्रिच्छात्रेणाभ्यंकरोपाह्वमहामहोपाध्याय-
वासुदेवशास्त्रिणा विरचिता मीमांसान्यायप्रकाश-
व्याख्या प्रभानाम्नी समाप्तिमगमत् ॥

---

॥ श्रीः ॥

## अथ श्रीमीमांसान्यायप्रकाशे सटीके प्रसङ्गादुद्धृतानां श्रुतिस्मृत्यादीनामधिकरणानां न्यायानां दोषाणां च वर्णानुक्रमेण सूचीपत्रम् ।


अकन्यात्वर्यपेक्षया कन्यार्थी न्यायात् १५०।१५
अक्ताः शर्करा २४४।१०
अक्षिदुर्ध्यति १५०।१९
अगन्म सुवः १६९।६
अग्र आज्यस्य १०९।२५
अग्नये च प्रजा २२४।९
अग्नये जुष्टं १८७।२५
अग्नये त्वा ९०।१७, ९६।२७
अग्नये स्वाहा १४३।१९
अग्निर्ज्योति ६४।१७, २२५।५, २२७।२७, २२९।८, २४३।२६
अग्निर्मूर्धा १७७।१९, १८५।२९
अग्निर्वा अका १५।२९
अग्निहोत्रं जु १७।१, ५७।१, ६३।३, ६४।२, ६६।९, ६९।१५, ७०।३, ७०।१२, ७२।१२, १७५।३०, २२२।१
अग्नीषोमा सवे १७७।१६
अग्नीषोमीयं २१७।२४
अग्नेः पूर्वाहुतिः २३१।४
अग्नेरह १६९।२७
अग्नेर्ङक् ५४।२८
अग्न्याधेयं १७२।१७
अङ्गगुणविरोधे १६६।३,१६७।६,१६७।१०
अतिरात्रे षो २६३।१४, २६४।५
अत्यन्तं बलव १३१।९
अत्र होवाच २०४।१, २०५।१९
अथवा कृतं २६।८
अथातो धर्म ३।१
अद्न्तको हि ११२।१
अदृष्टद्वयापत्तिदोष २१।१६
अधिकानां च ११९।२७
अधोरामः १९१।२०
अनन्तगुण १।१
अनन्तरूपि २।२
अनन्यलभ्यः ७।२८, ८८।३२, ९२।५, ९९।२१, १६०।२६
अनभिहिते ९१।१४
अनवस्थादोषस्य ९।२२
अनुदिते जु २५७।२८
अनेकपद् २३४।७
अनेन प्रीयतां २७८।९
अन्तरं यादृशं २५१।३
अन्यायश्चाने ९९।२३
अपादाने प ९१।१६
अपि वा नाम ९३।१६
अपूर्वान्तराङ्गीकारे गौरवम् १९।१०
अप्रकृतकल्पना ४२।२
अप्रधानेन संबन्धो दोषः ४८।५
अप्राप्ते तु विधी ३९।२, २३५।२६
अप्राप्ते शास्त्रमर्थ २२२।४
अभिक्रामं जुहो १४७।२४

अभिधात्री श्रुतिः ७३।२७
अभिधाभावनामा २६९।११
अभिलाषोप ३५।६, १२४।९
अभिहितं प्र ९१।३१
अभ्यासाधिकरण १८०।७
अरुणया पिं ७७।१९, ८६।३०, १६३।२६, २५०।१५
अविरलक ३।१२
अष्टवर्षं ब्रा १९५।१
अष्टौ हवींषि २४२।२
असंजातविरोधन्यायः २७।३३
अस्मयुक्तमः ९०।२६
आकृत्यधिकरणन्यायः ९४।४, ९८।३
आग्नेयं चतु २६१।३
आग्नेयः कृष्णग्रीवः १९१।१७
आग्नेयमष्टाक २३९।१६
आग्नेयोष्टाक ५४।६, ७४।२८, २४६।१०
आधारमाधा ५०।३१
आधाराग्निहोत्राधिकरण ५०।३, ६३।५
आर्द्रो ना २१०।२८
आज्यभागौ यज ११९।५
आदित्यो यूप १५।११
आनर्थक्यप्रति ६५।८, १५८।६
आमनमसि १४६।१९
आमिक्षां देवता २०७।१०
आमिक्षापद २०८।२
आरोग्यकामः सौरे १२४।२५
आवृत्तिर्दोषः ४०।७
आश्रावयेति २५६।९
आश्विनं ग्रहं १८४।६
आश्विनो दश १७४।४
इडो अग्न १०९।२२
इडो यजति १०९।१९
इदं विष्णु २२५।१८
इन्द्राग्नी इद १२२।१
इन्द्राग्नी रोच १५७।२
इन्द्रो देवः सह १२४।२९
इमामगृभ्ण ८०।५, ८१।२२, ८२।१०, ८५।११
उच्चैर्ऋचा २७।१५
उदिते जु २५७।२८
उद्देश्यैक्येपि वाक्यभेदः १८।२९
उद्भिदधिकरण ५२।५
उद्भिदा यजे ३१।६, ३२।२७, ४३।२५, ५२।१६, ५६।१७, ५७।४, ६७।५, ६९।१, ९३।१, २०६।२, २०९।११
उपक्रमोपसंहारयोरेकवा २७।२५
उपजीव्यविरोधन्याय ११९।३०
उपपद्यते चा ७।३२
उपरिष्टाल्लक्ष्मा याज्या १८६।१४
उपस्थितं परि ११४।१५
उपांशुयाज १८७।१६
उपोपेक्षु ८५।१५
उभयं चात्र १००।६
ऊहादीनाम १४२।२७
ऋत्विग्भ्यो दक्षि २२३।८, २३६।५
एकप्रसरताभङ्ग १७४।१, २२०।५
एकविंशिनाति २०५।६
एकोक्त्यवसि ५८।७
एतया निषादस्थप १६१।२६, १९७।६
एतस्यैव रेवतीषु ४०।१, ४१।१४
एवं च प्रकृता १२१।१
ऐन्द्रवायवं ६२।२, २४६।१९
ऐन्द्रमसानसि १८६।१९
ऐन्द्राग्नः संहि १९१।१९
ऐन्द्राग्नमेकादश १५७।१, १६३।१७
ऐन्द्रोरुणः १९१।१९
ऐन्द्र्या गार्ह ८५।१, १०३।१
औदुम्बरो यूपो १३४।६, १४३।२३

क

कदाचन स्त ८५।१४
कर्तरि कृत् १०।३०
कर्तृकरण ७८।२५, ९१।१५, १००।२५
कर्मणि द्विती ९१।१४
कर्मण्यण् ३।२०
किमश्च १२९।२२
किमिदं ७१।८
कृष्णविषाणया १४४।२६
कृष्णसारङ्गो २१९।२
क्रमोपकारस्य १३२।५
क्रमेण वा नियम्येत १७८।२३
क्रियायाः परि ४२।१८
क्वाहं मन्दमति २७८।६
क्षुत आचा १११।१८

ख

खलेकपोतन्यायः ६५।७

ग

गुणकामाधिकरण ३६।१
गुणद्रव्ये कथं २९।२, १३०।१०
गुणानां च परा ८९।४
गुणान्तरावरु २४२।१०
गुणे त्वन्याय्य २६।३, २८।१४, ५९।४, ५९।११
गुरोः कण्ठा १६८।१३
गुरोर्नाम २।१४
गृहपतिना ८५।३०
गौरवम् ७१।३३, ९११७, ११३।३२
गौरवदोषो ५८।२८
गौरवपराहता ७।२५
गौरवलक्षणवाक्यभेद ५७।३, ५८।५
गौरवाद्विश्वजिन्न्यायाप्रवृत्ति १२६।१४
गौश्चाश्वश्च २२४।१, २३५।२
ग्रन्थरूपो २७८।८
ग्रहैकत्वाधिकरण ३९।५
ग्रहैर्जुहोति २१।५
ग्रीष्मे राज ११३।१३

घ

घटायोन्मीलितं १७७।३१
घृते श्रपयति १३९।१६

च

चतुर्थी संप्रदाने ९१।१५, २२६।११
चित्रया यजेत २१५।१०

छ

छत्रिन्यायः २४२।३०

ज

जघन्यवृत्तिकल्प १६।६
जातपुत्रः कृष्ण ५९।६
ज्ञाते पुनश्च १४८।४
ज्ञात्वा तं २।३१
ज्ञात्वा देवं २।२९
ज्योतिष्टोमेन २९।४, ३०।१३, ३१।५, ३२।३, ३३।२७, ३४।१६, ४६।२९, ५३।२, ५६।१९, ६०।२९, ६२।४, ६२।३२, ६४।६, २०९।१०

ट

टिट्टिभात्र २०७।२५

त

तत्प्रख्यं चान्य २२२।१३
तत्प्रख्यन्याय ६४।३
तत्र क्रमो १५६।७
तत्र चान्यत्र च २०२।२
तत्समीपे ३२।९
तथापि तद्ना २३४।८
तथापि सर्वसा २७६।१५

तदर्थानत्वा २०८।१०
तदर्थस्तद्धिते २०८।४
तद्धितेन चतु २२६।०
तनूनपातं १०९।१९, २३७।२५
तप्ते पयसि २१९।१०
तमेवं विद्वा २।३०
तस्माच्छक्त्यनु ११४।४
तस्मात्तत्मापण २३८।१
तस्माद्दर्शपूर्ण १७२।२२
तस्माद्भक्ते २७८।७
तस्मिन्सीद ८३।१९
तस्य धेनु २३२।२९
तस्येदम् २४३।१०, २४७।१६
तस्यैतस्य यज्ञ १७२।६
तानि वा एतानि २४४।१
ताभ्यामेतदग्नी १७६।३०
तिमस् ४।२७
तिस्र आहुती १४२।२९
तृतीयस्यामितो ११६।१६
तेषामर्थेन १७०।१३
त्रयो वेदा २७।१४
त्रिः प्रथमाम ११९।२३
त्रिवृदग्निष्टु ४०।१८, २०५।७
त्रीणि ह वै २०४।२९

द

दधि मधु पयो २१६।१
दध्ना जुहु १७।५
दध्ना जुहोति ३३।४, ४३।७, ४३।२६, ५१।२, ६३।४, ६४।४, ७२।१, ७३।१९, ७४।२९, ७६।१२, २०९।७, २१०।६
दध्नेन्द्रिय ४२।१०, ४३।२७, २११।१०
दर्विहोमन्याय १४९।१
दर्शपूर्णमासा ५४।७, १५१।१, १५२।२३
दशापवित्रेण ३९।३०, २३३।११
दिवं च पृथिवीं ९।९
दीक्षितो २६५।५
दुर्बलैरपि १११।१०
दृश्यते तादृशे २५१।४
दृष्टे फले १७६।२०
दृष्टे संभवत्यदृ २०१।३
देवताया विधि २२६।६
देवतासाम्यापेक्षया १५९।२५
देवा वै ब्रह्म ११६।१९
दोषत्रयं २०।१७
दैक्षस्य चेत २१७।४
द्यावापृथिव्य २३९।१८
द्रव्यविधि २२४।११
द्रव्यसंस्कारकर्म १२७।४
द्वादशेह्नि ६३।१५
द्विरुक्तिदोष ११८।२३
द्रोकयोर्हि ९९।३

ध

धर्मपश्च्यर्थ २६।२३
धाता यथापूर्व ७।३०, ९।७
धात्वर्थव्यति २७६।१४
धुनोति चास्मिं १७३।११
ध्रुवोसि १४६।१८, १४६।२१

न

न कलञ्जं २४८।८, २४९।२७
न केवला ९२।१३
न चेदन्येन १७।७
नत्वार्जितो २५१।३१
न देवताग्नि १३५।१८
न वा गुणशास्त्र १४३।५
न वा परिसंख्या २३६।२९
न शब्दासिद्धि ६८।२९

न स्त्री स्वातन्त्र्य १९६।११
न हि संबन्धवाचित्वं १६०।१२
न होतारं वृणीते १३१।२
नागृहीतविशेषणा ७।१२
नातिरात्रे २६३।१४, २६४।९
नानुयाजेषु २५६।१
नान्तरिक्षे न २५६।६
नामधात्वर्थ २५४।२
नायं समीक्षाकारी २९।३२
नावान्तरक्रिया २९।१, १३०।९
नासूया कर्तव्या १२०।२७
नियुत्वत्या १८६।१६
निर्णीयते १५२।२
निर्विशेषं न २०६।२५
निषादस्थपतिन्याय १९७।८, १६१।२४
निषेधेन २५१।२८
नीलग्रीवा १३८।२९
नेक्षेतोयन्त २५२।९, २५३।३, २६२।२
न्यायप्रकाश १।९

प

पदमज्ञात १५२।१
पञ्चदश सामि ११९।१७, १२०।७
पञ्चदशीन स्तु २०५।२६
पञ्च पञ्चनखा २०३।१४
पञ्चधात्यन्त २५१।७
पयसा जुहो ६५।२, ७४।३१
परप्रकरण १४८।३, १५६।१२
परमुखप्रेक्षी १८६।३२
पर्यग्निकृतं ७७।१
पर्युदास २५२।६, २६१।७
पशुना यजेत १०।३०, ७४।८, ७५।२७, ७६।६, ८६।३, ८७।५, १६३।२५, २१८।२८
पाकयुक्तः १६१।३
पाकं तु पचि १६१।२
पाठानुष्ठान १५६।८
पाणिग्रहणात्तु १९७।५
पिता रक्षति १९६।२९
पुंसां नेष्टाभ्यु २७४।१
पुत्रस्तु स्थाविरे १९६।३०
पुरस्ताल्लक्ष्मा १८५।३१
पुरोडाशं चतु २६१।२
पूषा प्रपिष्ट ११२।१३
पूष्णोऽहं देवय १०७।२५
पृषदाज्येना १४०।१२, १४१।९, १४३।१५
पौष्णं चरुम् ११२।२२, २३९।१७
पौष्णं पेषणम् ११२।२०
पौष्णः श्यामः १९१।१८
प्रकरणभेद ४१।२८
प्रकरणविच्छेददोष ३७।२५
प्रकरणविच्छेदापेक्षया मुख्यार्थपरित्यागो जघन्यः ११५।१५
प्रकृतहान ४२।२
प्रकृतिप्रत्ययार्थ २१२।२५
प्रकृतौ वा ११७।६, २१७।३
प्रजापतिरकामयत २७।२१
प्रजापतिरात्मनो १५।३१
प्रजापतेर्जाय १३।१७, १५७।२८, १८९।२४
प्रतद्विष्णु २२५।१९
प्रतितिष्ठन्ति १२४।२३, १२५।२, २४३।३१
प्रतिपदाधिकरण ४७।१०, ४९।१
प्रतिनिधिर्नास्तीत्यत्र हेतुः १३६।१४
प्रतिषेधः स २५२।७
प्रत्ययानां प्रकृत्यर्था ३१।१४, ३२।२९, ३३।२८
प्रत्यासत्तिन्यायः २९।१३
प्रत्युज्जीवन २४७।३०

प्रत्येकं वाक्य १५४।२७
प्रबलस्य प्रवृत्तिं १०८।१७
प्रमाणत्वाम २४७।२९
प्रमाणबलात्प्रमेयबलं न्यायः १४३।१
प्रमाणाभावो दोषः ४४।८
प्रयत्नव्यति २७५।५
प्रयाजादिवाक्या १८१।७
प्रयाजानिष्ठा १८५।२४, १८७।११
प्रयाजानुया ११०।२०
प्रवृत्तिहेतुं २७४।२
प्रससाहिषे पुरु १८६।२०
प्राचीनप्रवणे २४१।१
प्राजापत्यैश्वर १९२।३२
प्रातिपदिकार्थ ९२।७, १००।३१
प्राप्ताप्राप्तविवेक ४९।३१, १४३।१३
१७४।१६
प्राप्ते कर्मणि ३९।१, २१८।१५, २३५।२५
प्राप्यते तम ११६
प्रायणीयानि १६४।१०
प्रेरितोऽस्मीति २५१।२६

फ

फलतो गुणविधि ५०।४
फलदेवत १६९।१०
फलबुद्धि २५१।६
फलमात्रेयो १२६।१
फलस्यापि व्यय २५।१५
फलार्थिनो हि यागार्थित्वं न तु २२।२२

ब

बभ्रुः सौम्यः १९१।१८
बर्हिरग्न १०९।२२
बर्हिर्देवसद १०४।२, १०५।४२, १०६।७,
१०९।१९, ११४।१०, १३०।११
बर्हिषि रज २६६।११
बलवाननर्थका १५८।३१
बलवानपि १०६।२९
बलाबलाधिकरण ४५।१
बलीयोऽपि प्रमाणं कुण्ठितम् १५८।२४
बहुषु बहु ९९।४
बाधिकैव श्रुति १०३।२५
ब्राह्मणो न हन्तव्यः २५७।१, २५८।३

भ

भक्ष्यान्यत्रान २०३।२१
भागरूपनाम १३।२९
भावार्थाः कर्म ४८।२९
भावार्थाधिकरण ४७।१०, ४९।८
भावार्थाधिकरणन्याय १२८।७
भुवो यज्ञस्य १८६।१२
भूतं भव्या ४८।१८, ४९।९
भूयांसोऽभिल १२४।१२

म

मतौ छः ४१।८
मत्वर्थलक्षणा ४२।३
मध्यमानो तु १०३।२६
मन्त्रतस्तु विरो १७९।७
मरुद्भ्यो गृह ११८।३२
मारुतं सप्त २२९।१७
मारुतः क १९१।१९
मत्वर्थलक्षणापरित्यागेन २६।२८
माहिष्येण ११३।१७
मुख्यं वा पूर्व १६६।९
मूर्धन्वती पुरो १८६।१०

य

य इष्ट्या पशुना १६६।४
य एतद्विदु ३।२९

य एवं विद्वान्यी १५२।१७
यजतिषु ये २५८।१०, २५९।२, २६०।५
यजेत स्वर्गकामो ४।१, ४।७, ८।३, ३४।१, ४७।२८, १२४।२२, १२९।८, १९३।११, १९६।८, २०२।५, २७७।२९
यज्ञायज्ञा वो ४१।१०
यत्करोषि २७८।३
यत्कृपालेश १।५
यत्तपस्यसि २७८।४
यत्प्रयाजान् १२७।२१
यत्प्रयाजानां १४७।९
यत्सूर्याय च २२९।२
यदग्नये च २२२।२९, २२३।३, २२९।१, २३१।४, २३७।२, २४३।२५
यदङ्क्ते चक्षु १२७।७
यदाग्नेयोष्टाक १७६।३१
यदाहवनीये ८६।१
यद्यपि न क्रियां ५०।२६
यद्विश्वेदेवाः २४३।५, २४७।४
यथा वै श्येनो २३८।६
यन्न दुःखेन ३५।५, २२४।८
यवाग्वं पच १७४।२३
यवाग्वाग्निहोत्रं १७६।६
यस्य पर्णमयी १०२।९, ११६।२, १२०।६
यस्याहिताग्ने १९३।११
यामानुमन्त्रणा ११४।३
यावत्या वाचा काम १४१।१८
यावदुक्तं वा ११९।३१
युक्ततुग ९०।२५
योगाद्रूढि ११२।३, ११३।९, १९५।४
यो वै प्रयाजानां १४७।७, १४७।३१
यः करोति तुतो १७२।१८
यः कल्पः स कल्पपूर्व ७।४

र

रागादिना प्रवृ २५१।३०
राजसूयाय छिना १५५।६
राजसूयेन स्वा १५३।८
राजा राजसूयेन १५०।११, १९४।१
रात्रिसत्रन्यायः १२५।१, १२६।२
रेवतीनः सप ४१।१६
रेवत्यधिकरण ४०।१
रौद्रीं रोहिणी १३८।२८

ल

लः कर्मणि ९०।५, ९८।७, ९९।१२
लक्षणा ५५।२०, ५६।२३
लक्षणादोष ३६।३०, १६१।२९
लक्षणानङ्गीकारे वाक्यभेद् ३०।२७
लक्षणावाक्यभेदविचार ५९।३, ६०।७
लाघवानुगृहीतमपि प्रतीतिविरुद्धं नैव ५।३२
लिङ्गायनुगृ २५१।३२
लोहितोष्णीषा १४३।३

व

वक्रमाख्यात २७५।६
वदत्यवाद्य २५४।३
वर्म वा एत १३७।८
वर्षासु रथ ११३।१, १९५।३
वषट्कर्तुः १७३।८, २२१।१
वसन्ते ब्राह्मणो ११३।१३, १६३।२४, १९५।२
वाक्यभेद ३६।३२, ३७।११, ४०।१४, ४१।२३, ४२।१, ५८।१, ५८।२१, ५९।७
वाक्यभेददोषापेक्षया लक्षणादोषो लघीयान् १८।१४
वाक्यभेदादिदोषपञ्चकम् १९।२

वाक्यभेदे गौरवम् ५४।२५, ५५।२०, ५६।३
वाक्यानामेक ७५।१४
वाक्यार्थप्रतिपत्तिन्यायः १६०।२८
वाक्यार्थविधि ६०।३
वाग्देवतावतारं १।८
वाजपेयाधिकरण ३५।१
वाजपेयेन स्वा ३५।१५
वाजपेयेनेष्ट्वा १७१।४
वायव्यं श्वेत १३।८, १३।२१, १३।२५, ६२।११, २६६।८
वायुर्वै क्षेपि १३।१, १३।२७
वायो शतं ४१।१९
वार्घ्नुतापि १३।१०
वारुणः पेत्वः १९१।२०
विकल्पोऽपि न २४२।११
विकृती च न १२१।२
वियया विन्द २।३१
विधात्री च ७३।२७
विधाने वानु ३२।८, ४७।७, ४९।१९, ५०।१८, ५२।१७
विधित्सितगुण २३७।१२
विधिना त्वेक १४।२१
विधिप्रतिषेधौ ५०।६
विधिरत्यन्त २०२।१
विधिरिष्टफलो २५१।२५
विधिशक्त्युप ३१।३
विधिश्चाधिकरो २५१।२९
विधूतपापा २००।१०
विधेयैक्येनापि तथैव १८।३२
विरुद्धत्रिकद्वयापत्तिः २३।३३, २४।१, ३५।३०, ७८।१६, २०९।१५
विवक्ष्यते यदा ४२।१८
विशिष्टग्रहणं नेष्ट ७।१३
विशिष्टविधाने गौरवम् ३०।१, ५७।२८
विशेष्यं नाभिधा ७।२२
विश्वजिता य ४।८
विश्वजिदधिकरण १२४।१
विश्वजिन्न्याय १२६।२, १५७।१०, २२१।४
विषयस्येष्ट २५१।२७
विष्णुरुपांशु २३१।७
विष्णुर्वा स्यात् २२५।१७
वेदं कृत्वा १११।२१, १७३।७
वेदस्याध्ययनं ७।२
वेदाध्ययन ७।३
वेदो वा प्राय २७।१
वैकल्पिकेष्वपि २६५।१३
वैश्यात्तु करणः ११३।२१
वैश्याशूद्र्योस्तु ११३।२०
वैश्वदेवीं कृत्वा १८९।१, १९०।१०
वैश्वदेवीं सांग्र १४६।२०
वैश्वदेवीमा २३९।१८
वैश्वदेवेन यजे २३९।३, २४५।२, २४७।४
वैश्वदेव्यामिक्षा २०७।५, २४६।१
वैश्वानरं द्वादश १५७।१
वैषम्यनैर्घृण्ये ९।२८
व्रीहिभिर्यजे ७५।१६, ८९।२८, २१०।६
व्रीहीनवह ७९।३१, १३९।१३, १६३।२५, १६८।३०, २५८।४
व्रीहीन्प्रोक्ष ७९।१५, ८९।३०, ११६।८, १६६।२६, १६७।४, १६८।२८

श

शंभुः सर्वदेवेश १५।२४
शरकुशन्यायः १३९।३
शरमयं बर्हिः १३८।३१
शरदि वैश्यः ११३।१३

शल्यकः श्वावि २०३।१५
शितिपृष्ठो १९१।१८
शिल्पो वैश्व १९१।१८
शीर्षोपस्थि ६०।२२
शुन्धध्वम् १४१।२८, १६२।१६
शेषात्कर्तरि ९१।१०
शोकप्रोज्झित १५८।३२
श्येनचितं ९४।३२
श्येनेनाभि ४।१७, २३८।३
श्रुतिलिङ्ग ४४।१६, ४५।८, ७२।४, १०१।१९, १३८।१८
श्रुत्यैवोपपद् २०८।३
श्रौतव्यापार ५८।६
श्वाविधं २०३।२०

ष

षोडशिनं गृ २५७।२९
षोडशिनं न २५७।२९

स

संख्यायाः सं ४०।२४
संख्यायां कारके १००।५
संदंशन्याय १४७।४
संध्यामुपासते २००।९
संसृष्टहोमस्वरूपम् २२७।३०
स एष द्विदेवत्यः १५८।३
सप्तदश प्राजा १८९।२०
सप्तमीविशेषणे २२३।२६
सप्तम्यधिकर ९१।१६
समानकर्तृक १७३।२९
समानयत १४७।५
समानाभिधानश्रुतेः १०।२, ११।४
समिधः समिधो १८०।९, २३७।९
समिधामाधाने ११९।२०
समिधो अग्न १०९।२१, १७८।२८, १८०।२२
समिधो यज १०९।१८, १२३।१, १६८।२३, १७३।१७, १७७।१९, १७८।२४, १८०।१७ १८१।१२, २३७।१०
सम यजेत २०२।२४
सर्वत्र यौगिकैः १६०।११
सर्वत्राख्यात ३१।२
स स्वर्गः स्यात् ५८।११, १२४।४
सह पशुना १८३।६
सांनाय्यं वा १५९।५
सामर्थ्यं सर्व १०४।१
सामान्याविधि १२१।७
साम्ना स्तुवीत २०५।२०
सायं जुहोति २२५।३
सारस्वतं २३९।१७
सारस्वती मेषी १९१।१७, २१९।५
सावित्रं द्वा २३९।१६
सास्य देवता ६२।१९, ७७।१२, २०७।६, २२५।९
सिद्धे शब्दार्थ ९९।६
सुश्रवा वै नाम ११६।१९
सूक्तद्विषोः २४०।१
सूचीकटाह १८।२४
सूर्याचन्द्रमसौ ९।८
सूर्योज्योति २२७।२६, २२९।५
सोमापौष्णं १३४।२३
सोमेन यजेत १७।८, ३०।१४, ३२।१, ४३।२२, ४३।३१, ४५।२४, ४६।१७, ५२।३१, ५३।१, ५४।२, ५७।३, ६६।५, ६७।१६, ९३।२३, ९४।६, ११०।७
सोऽरोदीत् २६६।२५
सौम्यं चरुम् २३९।१६
सौम्यश्चरुः २४७।१

सौर्यं चरुं १३१।२५, १३२।२५, १६१।२९
स्तोमे द्रविधि ४०।२५
स्थपतिर्निषादः १६१।२५
स्थानाच्चोत्पत्ति १८२।२९
स्थाणी तु द्वे १६८।२३
स्थाणी स्थाणवा १६८।१
स्योनं ते सद् ८३।१, १०१।३२, १०२।३०
स्रुवेणावद्य १०४।१३, १०५।८
स्वर्गोऽनतिश १२४।११
स्वाध्यायोध्येत १४।१०, १५।२
स्वाराज्यकामो १५४।११
स्वार्थबोधे समा ७५।१४
स्वाहाकारं यज १०९।१९
स्वाहाग्निम् १०९।२३
स्वाहाग्नी १०९।२४
स्वाहा देवा० १०९।२४
स्वाहा प्रजा १०९।२३
स्वाहा मह्े १०९।२४
स्वाहा सोमम् १०९।२३
स्वाहेन्द्रम् १०९।२४
स्वाहेन्द्राग्नी १०९।२४

ह

हिरण्यमात्रेया ४८।१२
ह्यहोर्भ ८०।२५
हृदयस्याग्रे ७६।३

